॥ श्रीः ॥

श्रीमत्कौशिककुलालङ्कारश्रीनारायणविरचित-

# मुहूर्तमार्तण्डः ।

तत्कृतयैव मार्तण्डवल्लभाख्यया संस्कृतटीकया, श्रीमालि
कुलोद्भवनानुरामाख्यचातुर्मास्ययाजिसुतश्रीमोडूरा-
मविरचितया मुहूर्तमार्तण्डदर्शिन्याख्यया

भाषाटीकया च समेतः ।



स एव

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९६७, शके १८३२.

# मुहूर्तमार्तण्डानुक्रमणिका ।

## अग्न्याधानप्रकरणम् ५.



## गृहप्रकरणम् ६.

विषयः पृष्ठांकाः



---

## शांतिप्रकरणम् ९.



---

## पल्लीसरटप्रकरणम् १०.

इति मुहूर्त्तमार्तण्डानुक्रमणिका ।

॥ श्रीः ॥

# अथ मुहूर्तमार्त्तण्डः ।

## संस्कृतटीका-भषाटीकासमेतः ।



श्रीगणेशाय नमः ।

आसीद्योधपुरेस्वकर्मनिरतः श्रीमूलचंद्राभिध-
स्तत्सूनुःपरयज्ञकर्मनिपुणः श्रीनानुरामाभिधः ॥
तज्जोहंखलुमोडुरामइतिवै श्रीकृष्णभ्रातातथा
तेषांपादयुगं प्रणम्य परमंकुर्वेऽर्कसंदर्शिनीम् ॥ १ ॥

भा०–व्याकरणानभिज्ञपुरुषोंको सहजसे मुहूर्तके निश्चयके लिये और विद्यार्थियोंकी प्रार्थनासे योधपुरवासी स्वकर्मरत मूलचंद्रशर्माके पुत्र उत्तम श्रौतकर्म निपुण नानुरामजीका पुत्र मैं मोडुरामशर्मा श्रीकृष्णका भ्राता पितृपितामहादिगुरुलोगोंके पादयुगलको प्रणाम करिके मुहूर्तमार्तण्डकी मार्तण्डप्रदर्शिनी नाम भाषाटीकाको करताहूं ॥ १ ॥

मार्तंडोऽवतुवाचंनःपादैर्जाड्यतमोहरः ॥
वृत्तबद्धतनुःसेव्योभीष्टदोविश्वलोचनः ॥ १ ॥

अर्थद्वयवाची । तत्रप्रथमंसूर्यपक्षे मार्तंडः श्रीसूर्यःनोऽस्माकंवाचमवतुरक्षतु किंलक्षणोमार्तंडः वृत्तबद्धतनुः वृत्तेमंडलेबद्धातनुर्यस्यसतथा । तथाचस्मृतौ "सशंखचक्रंरविमंडलेस्थितं कुशेशयंकांतमनंतमच्युतम्" इत्यादि । श्रुतिरपि "यएषएतस्मिन्मंडले पुरुषःसोग्निः" इत्यादिः । पुनःकिंलक्षणः पादैःकिरणैःजाड्यतमोहरः जाड्यंपातकं शीतंवा तमोंधकारस्तद्धरतीतितथा । पुनःकिं० सेव्यःसेवितुंयोग्यःसेव्यः अभीष्टफलदातृत्वात् । पुनः अभीष्टदः सेवितः सन्नभीष्टार्थदायीत्यर्थः । पुनःकथंभूतः विश्वलोचनः विश्वंलोच्यतेअनेनेतिविश्वलोचनः "लोकचक्षुर्महेश्वर" इत्यादित्यहृदयेउक्तत्वात् प्रकाशकत्वात् । अथग्रंथपक्षे मार्तंडः मुहूर्तमार्तंडः नः वाचम् अवतु किंलक्षणः वृत्तबद्धतनुः वृत्तानिमहर्षिणीशार्दूलविक्रीडितानि तैर्निबद्धातनुर्यस्यतथा पुनः० पादैर्जाड्यतमोहरःपादैर्वृत्तचरणैर्जाड्यंमूर्खत्वंतदेवतमःतद्धरतीतितथा पुनः० सेव्यः निरंतरंपठनीयइत्यर्थः पुनः० अभीष्टदः यथोक्तमुहूर्तव्युत्पत्तिकरणादभीष्टार्थसिद्धिकारीत्यर्थः । पुनः० विश्वलोचनःसमयप्रकाशकत्वात् ॥ १ ॥

कुर्वेमुहूर्तमार्तंडटीकांमार्तंडवल्लभाम् ॥
इयमाकल्पमेतेनदीव्यादिप्रास्यवेश्मसु ॥ २ ॥

**सिंदूरोल्लसितमिभेंद्रवक्त्रमंबांश्रीविष्णुंवियतिचरान्गुरून्प्रणम्य ॥**
**बह्वर्थंविबुधमुदेलघुंमुहूर्तमार्तण्डंसुगमम्अहंतनोमिसिद्ध्यै ॥ १ ॥**

इहशास्त्रेतावत्संबन्धाभिधेयप्रयोजनान्युच्यंते। आब्रह्मादिविनिःसृतमिदं वेदांगमितिसंबंधः । उक्तंचनारदमुनिनास्वसंहितायाम् "वेदस्यनिर्मलंचक्षुर्ज्योतिःशास्त्रमनुत्तमम् । अस्यशास्त्रस्यसंबंधो वेदांगमितिधातृतः" इति । अत्राप्युक्तम् "पूर्ववाक्यार्थमादायग्रंथोयंरचितोलघुः" इति । तथाऽयनक्षत्रावर्तुलग्नगोचरगर्भाधानादिसंस्कार विवाहाग्न्याधानवास्तुयात्रामिश्रानध्यायपल्लीग्रहगोचरसंक्रांतिकथनमभिधेयम् । तथाचनारदः "अभिधेयंचजगतः शुभाशुभनिरूपणम्" इति । अस्यप्रयोजनंमुहूर्तैर्नानाकार्यसाधनं अस्यसम्यग्ज्ञानान्मोक्षावाप्तिरितिवाकिमेभिरुक्तैरित्यत्रोच्यते नृणांसंबंधाभिधेयप्रयोजनकथनात् शास्त्रेप्रवृत्तिर्जायते उक्तंच "सिद्धिः श्रोतृप्रवृत्तीनांसंबंधकथनाद्यतः । तस्मात्सर्वेषुशास्त्रेषुसंबंधः पूर्वमुच्यते। किमेवात्राभिधेयंस्यादितिपृष्टस्तुकेनचित् । यदिनप्रोच्यतेतस्मैफलंशून्यंतुतद्भवेत् । सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित् । यावत्प्रयोजनंनोक्तं तावत्केननगृह्यते" इति । इहशास्त्रेकस्याधिकारइतिप्रोच्यतेद्विजस्यैव वेदांगत्वात् । यतःषडंगोवेदोहिद्विजैरेवाध्ययनीयोज्ञातव्यश्च । तथाचोक्तं भास्करीयसिद्धांतशिरोमणौ "तस्माद्द्विजैरध्ययनीयमेतत्पुण्यंरहस्यंपरमंपवित्रम् ॥ योज्योतिषंवेत्तिनरःसम्यक् धर्मार्थमोक्षाँल्लभतेयशश्च" इति । शिष्टास्तावच्छास्त्रारंभे "सर्वारम्भाहिदोषेण धूमेनाग्निरिवावृताः" इति शास्त्रेणसर्वारंभेष्वंतरायप्राप्तौसत्याम् "धर्मेणपापमपनुदति" इति श्रुतिसिद्धंप्रयोजनमास्थाय "स्वस्तिनइंद्रोवृद्धश्रवाः" इति लिंगाच्च ग्रंथस्यनिष्प्रत्यूहपरिसमाप्तयेमंगलमाचरंति तस्मान्माध्यंदिनीयोब्राह्मणोनारायणोनारायणाच्चावाप्तमतिज्योंतिःशास्त्रसंहितास्कंधंचिकीर्षुरशेषप्रत्यूहोपशांतये अभिमतदेवतानमस्कारलक्षणमंगलपूर्वकंग्रंथकरणप्रतिज्ञांप्रदर्शयिण्याह ॥ सिंदूरोल्लासितमिति । सिंदूरेणउल्लसितं शोभायमानम् इभेंद्रवक्त्रंगजाननम् अंबांसरस्वतीम् श्रीविष्णुंप्रसिद्धम् । वियतिचरान् ग्रहान् गुरून् निजगुरून् शास्त्रोपदेष्टॄन् प्रणम्य नमस्कृत्वा अहंनारायणो मुहूर्तमार्तंडनामग्रंथंतनोमि विस्तारयामि किमर्थं सिद्ध्यैकार्यसाधनायपुनः किमर्थम् । विबुधमुदेपंडितहर्षाय । हर्षकारणंविशेषणद्वारेणाह। किंलक्षणंमुहूर्तमार्तंडम् लघुम् अतिशयेनाल्पम् अल्पेबह्वर्थाभावशंकांविशेषणद्वारापरिहरति पुनः किंलक्षणम् अर्थबहुलम् अल्पग्रंथेबह्वर्थेदुर्बोधशंकांपरिहरति । पुनः किं॰ सुगमम् प्रकटार्थमिति ॥ १ ॥

भा॰—सिंदूरकी शोभायुक्त गणपतिको तथा सरस्वतीको और विष्णुको और ग्रहोंको और गुरुलोगोंको प्रणाम करिके नारायण नाम मैं मुहूर्तमार्तण्ड नाम ग्रंथको करताहूं किस लिये कि कार्यसिद्धिके लिये और पंडितोंके आनंदके लिये, मुहूर्तमार्तण्ड ग्रंथ कैसा है कि अल्प है और अर्थ जिसमें बहुत है और सुगम है ॥ १ ॥

यामार्द्धंकुलिकंदिनर्क्षिमवमंपूर्वंदलंपारिघंविष्टिंवैधृतिपातसंक्रमग-
णंगंडांतमेकार्गलम् ॥ कृष्णानंगचतुर्दिनंरविशशिक्रांत्योःसमत्वं
खलांहोरांरात्रिदिनार्द्धकेक्षयदिनंपित्रोर्जनन्यार्तवम् ॥ २ ॥

अथनानामुहूर्तान्निवक्तुस्तावच्छुभेकर्मणित्याज्यं त्रिभिः शार्दूलविक्रीडितैराह। या-
मार्द्धमिति।यामार्द्धादिकंशुभेशुभकर्मणिसंत्यजेदित्यंतिमश्लोकेनान्वयः। यामार्द्धकुलिकौ
वक्ष्यमाणलक्षणौ दिनर्क्षिर्नाम यत्रतिथिः सूर्योदयात् षष्टिघटिकाभवति सैवान्यस्मि-
न्दिनेदृश्यतेसादिनर्क्षिः अवमः प्रसिद्धः पारिघंमान्दलंपरिघयोगस्यपूर्वार्द्धम् विष्टिर्भ-
द्रावक्ष्यमाणा वैधृतियोगः पातोव्यंतीपातः संक्रमणंसूर्यादीनांराशिसंक्रमणं सर्वेषांग्रहा-
णांसंक्रमणेत्याज्यघटिकाअग्रेवक्ष्यमाणाः गंडांतंत्रिविधंवक्ष्यमाणम् एकार्गलोवक्ष्यमाणः
कृष्णानंगचतुर्दिनंकृष्णत्रयोदश्यादिप्रतिपदंतम् चंद्रस्यक्षीणत्वात्। कैश्चिद्द्वादश्यादि-
सार्द्धदिनपंचकंत्यज्यते कृष्णेचांत्यत्रिकंकैश्चित् तेषुमध्यमोऽयंपक्षोऽत्रांगीकृतः कृष्णानं-
गचतुर्दिनमिति । रविशशिक्रांत्योः समत्वंसूर्याचंद्रमसोः क्रांतिसाम्यंगणितगम्यम् ।
तथापितस्यावलोकनंकस्मिन्दिनेकर्तव्यमित्यग्रेवक्ष्यति । खलांहोरां पापग्रहहोराम्
रात्रिदिनार्द्धकेदिनार्द्धरात्र्यर्द्धेच उक्तंग्रंथांतरे "मुहूर्तःकालोनिवसतिमहानिशायांचदिनद-
लेयस्मात् । दशपूर्वेदशपरास्तस्माद्वर्ज्यानिचपलानि" इति क्षयदिनंपित्रोः माताचपिता
चपितरौतयोः पित्रोः क्षयदिनंश्राद्धदिनमित्यर्थः । जनन्यार्तवंमातुः रजस्वलात्वम्॥२॥

अब संपूर्ण शुभकर्ममें त्याज्यपदार्थोंको कहतेहैं ।

भा०-यामार्द्ध और कुलिक आगे कहैंगे-साठघडीकी तिथि । क्षयतिथि-परिघयोगका
पूर्वार्द्ध भद्रा आगे कहैंगे-वैधृतियोग-व्यतिपातयोग-संक्रांति । तीन प्रकारका गण्डांत कहैंगे ।
एकार्गलयोग कहैंगे ॥ कृष्णपक्ष की ये १३ । १४ ।३०। १ तिथियां । सूर्य चंद्रका क्रांतिसाम्य
इन क्रांतिको कब देखना सो आगे कहैंगे-पाप ग्रहोंकी होरा । मध्याह्नके पूर्व परकी दशदश
पलों । और आधी रातके पूर्वपरकी दशदशपलों । मातापिताका श्राद्धदिन । और माता
रजस्वला होय तो ॥ २ ॥

मासाद्यंजनिसंभवंग्रहणभंचंडायुधंदुःक्षणंज्येष्ठंपूर्वभवस्यपापयुगि-
तैष्यर्क्षाणिविद्धंचभम् ॥ ऊनाख्याधिकमासकौयुतिषुविन्याशूव
गंडांतिषुग्र्यंकार्थाकरसतुपूर्वघटिकामानांविपाख्याघटीः ॥ ३ ॥

मासाद्यमिति । मासाद्यंजनिसंभवम् जनिरुत्पत्तिस्तत्रसंभवोयस्य एवंविधंमासा-
द्यंमासप्रभृति जन्ममासजन्मतिथिजन्मनक्षत्रादि ग्रहणभं ग्रहणनक्षत्रम् चंडायुधं वक्ष्य-
माणं दुःक्षणोदुर्मुहूर्तो वक्ष्यमाणः तम् ज्येष्ठं पूर्वभवस्यप्रथमजातापत्यस्यज्येष्ठमासम्
पापयुगितैष्यर्क्षाणि पापाःपापग्रहाः वक्ष्यमाणास्तेषामन्यतमेनयुक्तम् इतंगतंएष्यंपुर
स्थितम् एतानिऋक्षाणिनक्षत्राणिविद्धंभंचविद्धनक्षत्रं वक्ष्यमाणलक्षणम् ऊनाख्याधिक-

मासकौक्षयमासाधिमासौवक्ष्यमाणलक्षणौ युतिषु विष्काद्यूवगंडातिषुर्व्यं ३ का ९ र्था ५ क ९रस६तु ६ पूर्वघटिकाः विविष्कंभः व्याव्याघातः शूशूलः ववज्रः गंडः प्रसिद्धः अतिअतिगंडः एषुयोगेषुक्रमेणत्र्यंकार्थांकरसतुसंख्याकाः पूर्वघटिकाःप्रथमघटिकाः तद्यथाविष्कंभेतिस्रः व्याघातेंकाः नव शूलेअर्थाः पंच वज्रेअंकाः नव गंडेरसाःषट् अतिगंडेऋतवः षडिति भानांविषाख्याघटीः भानांअश्विन्यादीनांनक्षत्राणांविषाख्या-घटीर्वक्ष्यमाणलक्षणाः ॥ ३ ॥

भा०-और जन्ममास जन्मतिथि जन्मनक्षत्रादिक ग्रहणनक्षत्र चण्डायुध आगे कहैंगे दुष्ट मुहूर्त आगे कहैंगे और प्रथम संतानका ज्येष्ठमास पापग्रहोंको भुक्त ओ भोग्य ओ युक्त नक्षत्र विद्ध नक्षत्रको आगे कहैंगे-क्षयमास और अधिमास और विष्कंभ व्याघात शूल वज्र गण्ड अतिगण्ड इन योगोंके पूर्वकी क्रमसे ३ । ९ । ५ । ९ । ६ । ६ ये घडियाँ और अश्वि-न्यादि नक्षत्रोंकी विषघटी आगे कहैंगे ॥ ३ ॥

लत्तापंचकपापवर्गमशुभंचंद्रंदशारिष्टकंजन्मेशेज्यसितास्तमंगश-शिनोः क्रूरोद्भवांकर्तरीम् ॥ रिष्टंगोचरसंभवंग्रहजनिप्रांतोद्भवंसूत-कंदुश्चिह्नानिमनोविभंगमपिचव्याधिंशुभेसंत्यजेत् ॥ ४ ॥

लत्तेति । लत्तापंचकपापवर्गएतत्सर्ववक्ष्यमाणं अशुभंचंद्रंवक्ष्यमाणगोचरप्रकरणेवेद्यं दशारिष्टकंजातकशास्त्रगम्यम् जन्मेशेज्यसितास्तं जन्मेशो राशिस्वामी ईज्योगुरुः सितः शुक्रः एषामूअस्तगमनं रविलुप्तकिरणत्वम् अंगशशिनोः क्रूरोद्भवांकर्तरीम् अंगंल-ग्नंशशीचंद्रः तयोः क्रूरोद्भवांक्रूरग्रहजनितांकर्तरींवक्ष्यमाणलक्षणाम् रिष्टंगोचरसंभवं गोचरेदुष्टग्रहाविक्यं गोचरंवक्ष्यमाणम् ग्रहजनिप्रांतोद्भवंसूतकम् ग्रहोग्रहणम् जनिर्जन्म प्रांतो मरणम् एभ्यउद्भूतंसूतकम् ग्रहणसूतकं जन्मसूतकं मृतसूतकमिति तेषुग्रहण-सूतकं वक्ष्यमाणम् दुश्चिह्नानिकार्यारंभसमयेक्षुतदुर्वचनश्रवणादीनि मनोविभंगमंतः-करणस्य अप्रवर्तनंव्याधिर्ज्वरः तमपि "रोगः पाप्माज्वरोव्याधिर्विकारोदुःखमा-मयः" इतिवाग्भटः । ज्वरितस्यमंगलंनकुर्यादित्यर्थः । तथाचोक्तंज्योतिःप्रकाशे "जन्माधिपविलग्नचंद्रभार्गवमंत्रिणाम् । विरश्मित्वंजन्मधिष्ण्यंजन्मभंजन्मवासरः ॥ दुर्निमित्तंमनोभंगः क्षयमासाधिमासकौ । मृतजातकयोश्चैवसूतकंग्रहणस्यच । ज्वरो त्पत्तिरजोमातुः पित्रोःक्षयदिनंतथा । गंडांतत्रितयंकालः संधिर्भस्यतिथेस्तनोः । क्रांतिपातोव्यतीपातोवैधृतिः परिवार्धकम् ।भानोः संक्रांतिभोगश्चकुलिकश्चार्द्धयामकः । क्रूरैर्भुक्तंयुतंभोग्यंसराहुशिखिभूमितम् । धिष्ण्यंग्रहणगंपापैर्विद्धंसौम्यैश्चपादतः । विष्टिः क्रूरयुतंलग्नंलग्नेशोरिपुमृत्युगः । जन्मतोदुःस्थितश्चंद्रोलग्नस्थोनिधनोपगः । जन्मभाज्ज-न्मलग्नाच्चलग्नंलग्नांशकाष्टमौ । पापयोर्मध्यगंलग्नंक्षीणेंदुःक्रुनवांशकः । क्रूरवारेपापदृष्टो-राद्दुष्टयोगाग्रहोद्भवाः । तिथिवृद्धिः क्षयोभानांनाडिकाविषसंज्ञिताः । एतेदोषाः समा-

स्यातां शुभकर्मणि गर्हिताः। दशारिष्टोद्भवाश्चान्ये गोचरोत्थास्तथापरे। लत्तैकार्गलचंडाख्यकालवेलाश्च पंचकम्। मृत्युयोगोपग्रहाद्याः स्वस्वदेशेतु निंदिताः" इति ॥ ४ ॥

भा०—पापवर्गको आगे कहेंगे। अशुभ चंद्र वक्ष्यमाण। लग्न चंद्रमाकी कर्तरी क्रूरग्रहोंसे हुई भई वक्ष्यमाणगोचरमें दुष्टग्रहोंकी आधिक्यता। ग्रहण सूतक जन्मसूतक मृतसूतक। कार्यके प्रारंभमें दुष्टचिह्न जैसे छिका आदिक। जिसको अंतःकरण नहीं चाहै सो और ज्वर। यह पूर्वोक्त सकल शुभकर्मोंमें नहीं लेना ॥ ४ ॥

**नोकुर्याद्रविभादगेंद्रधृतितोयुग्मेषुपंचाशयोःस्वर्गात्पंचसुशोभनानितनुयादेषूग्रशस्त्रादिकम् ॥ मासर्त्वायनवारयोगतिथिभादीनांचसिद्धाभिधाज्ञातव्याःपुनरुक्तिरस्तिकुहचित्सातत्स्मृतिप्राप्तये ॥ ५ ॥**

## इति श्रीमदनंताख्यचातुर्मास्ययाजिपुत्रनारायणविरचिते मुहूर्तमार्तण्डे त्याज्यप्रकरणम् ॥ १ ॥

अथोपग्रहांतर्वर्तिदोषांतरंवृत्तार्द्धेनाह। नोकुर्यादिति। रविभात् सूर्याधिष्ठितनक्षत्रात् अगेंद्रधृतिमितानि यानि नक्षत्राणि तेभ्यो युग्मेषु। एतदुक्तंभवति। सप्तमाष्टमयोः चतुर्दशपंचदशयोः अष्टादशैकोनविंशयोरिति तथा पंचाशयोः रविनक्षत्रात् पंचमदशमयोः तथा स्वर्गात्पंचसु एकविंशात्पंचसुनक्षत्रेषु २१।२२।२३।२४।२५ शोभनानिकर्माणि नोकुर्यात् एषु उग्रशस्त्रघातादिकं तनुयात् विस्तारयेत् कुर्यादित्यर्थः। उक्तंच-"विद्युत्पंचमभेक्षितेश्चचलनंस्यात्सप्तमेसूर्यभाच्छूलश्चाष्टमभेशनिश्चदशमेकेतुस्तथाष्टादशे। दंडः पंचदशेचतुर्दशइहप्रोक्तोनिपातोबुधैरुल्काकालविदांगणैर्निगदिताचैकोनविंशेर्कभात्" इति। दैवज्ञवल्लभेपि "क्रमशोमोहनिर्घातभूकंपावज्रएवच। परिवेषश्च विज्ञेयानक्षत्रादेकविंशतेः। एतेष्विंदुसमेतेषु कुर्यात्कर्मनशोभनम्। दहनास्त्रविषैः साध्यंयत्तत्सिद्धिमुपैतिच" इति अन्यानपि दोषानग्रेप्रसंगतोवक्ष्यामि। अथास्मिन्ग्रंथेमासादीनांसंज्ञा लोकसिद्धाज्ञेयाइति। तथापुनरुक्तिनिर्दूषणंवृत्तार्द्धेनाह। मासर्त्वायनेति। मासाश्चैत्रादयः ऋतवोवसंतादयः अयनेदक्षिणोत्तरे वाराः सूर्यादयः योगाः विष्कंभादयः तिथयः प्रतिपदादयः भान्यश्विन्यादीनि इत्यादीनांकरणराशिभावादीनांसिद्धाभिधाः शास्त्रांतरसिद्धाः संज्ञा ज्ञातव्याः। तथाइहास्मिन्ग्रंथेकुहचित् कुत्रचित् पुनरुक्तिर्वर्ततेसातस्यदूरांतरितस्य स्मृतिप्राप्तये स्मरणायेतिनदोषः ॥

इतिस्वोक्तमुहूर्तमार्तंडटीकायांमार्तंडवल्लभायांत्याज्यप्रकरणम् ॥ १ ॥

भा०—सूर्यके नक्षत्रसे ७। ८। १४। १५। १८। १९। ५। १०। २१। २२। २३। २४। २५ इतने नक्षत्रोंमें शुभ कर्म नहीं करना ॥ और शस्त्रघातादिक करना ॥ और मास ऋतु अयन योग तिथि नक्षत्रादिकोंकी संज्ञा दूसरे ग्रंथोंसे समझनी चाहिये ॥ और इस शास्त्रमें कहके फेर कहै तो पुनरुक्ति दोष नहीं समझना क्योंकि प्रथम दूर कहा जिसकी स्मृतिके लिये पीछा कहतेहैं ॥ ५ ॥

इति श्रीमालिकुलोद्भवनानुरामाख्यचातुर्वास्ययाजिपुत्रमोडुरामविरचितायांमुहूर्तमार्तण्डदर्शिन्यां त्याज्यप्रकरणम् ॥ १ ॥

मेशाद्वयमाग्निकेंदुगिरिशाः प्रोक्ताअदित्यंगिराःसर्पाःकव्यभु-
जोभगोर्यमरवीत्वष्टासमीरः क्रमात् ॥ इंद्राग्नीत्वथमित्रइंद्रनिर्ऋति-
नीरंचविश्वेविधिर्वैकुंठोवसुपाश्यजैकचरणाहिर्बुध्न्यपूषाभिधाः १ ॥

अथसाधारणनक्षत्रप्रकरणंविवक्षुरादौनक्षत्रदेवताः वृत्तेनैकेनाह । अस्मिन्प्रकरणे सर्वाणिशार्दूलविक्रीडितानि । मेशाइति । अश्विन्याः सकाशात्क्रमेणमेशाबुधैः प्रोक्ता इत्यन्वयः । भानांनक्षत्राणामीशाः स्वामिनः दस्रौ अश्विन्याः यमोभरण्याः अग्निः कृत्तिकायाः कोब्रह्मारोहिण्याः इंदुर्मृगस्य गिरिशोमहादेवः आर्द्रायाः अदितिः पुनर्वसोः अंगिराः गुरुः पुष्यस्य पन्नगाः सर्पाः आश्लेषायाः कव्यभुजः पितरः मघायाः भगः पूर्वाफाल्गुन्याः अर्यमा उत्तराफाल्गुन्याः रविर्हस्तस्य त्वष्टाचित्रायाः समीरणो वायुः स्वात्याः इंद्राग्निदेवताद्वयं विशाखायाः मित्रोऽनुराधायाः इंद्रोज्येष्ठायाः निर्ऋतिः राक्षसोमूलस्य नीरंजलंपूर्वाषाढायाः विश्वेउत्तराषाढायाः विधिर्ब्रह्माभिजितःवैकुंठो विष्णुः श्रवणस्य वसवोधनिष्ठायाः पाशीवरुणः शततारकायाः अजैकचरणः पूर्वाभाद्रपदायाः अहिर्बुध्न्यउत्तराभाद्रपदायाः पूषारेवत्याः । देवताप्रयोजनंनक्षत्रज्ञानार्थंशांतिकादौयजनार्थंच ॥ १ ॥

### अब नक्षत्रोंके देवताओंको कहते हैं-

भा०-दस्र अश्विनीका स्वामी हैभरणीका यम स्वामी है कृत्तिकाका स्वामी अग्नि है ऐसेही रोहिणीका ब्रह्मा । मृगशीर्षका चंद्रमा आर्द्राका महादेव पुनर्वसुका आदिति । पुष्यका गुरु-आश्लेषाका सर्प । मघाका पितृ । पूर्वाफाल्गुनीका भग । उत्तराफाल्गुनीका अर्यमा । हस्तका सूर्य । चित्राका त्वष्टा । स्वातिका वायु । विशाखाका इंद्र और अग्नि दो देवता हैं । अनुराधाका मित्र ज्येष्ठाका इंद्र । मूलका राक्षस । पूर्वाषाढाका जल । उत्तराषाढाका विश्वेदेवता । अभिजित्का ब्रह्मा । श्रवणका विष्णु । धनिष्ठाका वसु । शतभिषाकावरुण । पूर्वाभाद्रपदाका अजैकचरण । उत्तराभाद्रपदाका अहिर्बुध्न्य । रेवतीका पूषा देवता है ॥ १ ॥

ब्राह्मंत्र्युत्तरयुग्ध्रुवंस्थिरमथोपूर्वामघायाम्यभंक्रूरोग्रंश्रवणत्रयादि-
तियुतास्वातीचराख्याचला ॥ दस्रार्काभिजिदीज्यभंलघुतथाक्षि-
प्रंचमैत्रांतिमेंदुत्वाष्ट्रंमृदुमैत्रमग्निभविशेमिश्रेचसाधारणे ॥ २ ॥

अथनक्षत्राणांस्थिरचरादिसंज्ञामाह ॥ ब्राह्मंरोहिणी, किंलक्षणम्ब्राह्मंत्र्युत्तरयुक्तिसृणामुत्तराणांसमाहारस्त्र्युत्तरम् तेनयुक्युक्ताम् ध्रुवस्थिरमिति द्व्यभिधानंमुनींद्रैः स्मृतमित्यन्वयः । अथोपूर्वामघायाम्यभंपूर्वात्रयंमघाभरणीतिपंचकम् क्रूरोग्रंक्रूरमुग्रंचोक्तम् । श्रवणत्रयादितियुतास्वाती श्रवणधनिष्ठाशततारकाः अदितिः पुनर्वसुः एभिः सहिता स्वाती चराख्याचलाप्रोक्ता । श्रवणत्रयादिपंचकंचराख्यंचलंप्रोक्तमित्यर्थः । दस्रार्का

भिजिद्वीज्यमं दस्रो अश्विनी अर्कोहस्तः अभिजिद्वक्ष्यमाणलक्षणः इज्योगुरुस्तस्य भंपुष्यइतिचतुष्टयं लघुतथाक्षिप्रंप्रोक्तम्। मैत्रांतिमेन्दुत्वाष्ट्रम् मैत्रमनुराधा अंतिमंरेवती इंदुर्मृगः त्वाष्ट्रं चित्रा एतच्चतुष्टयं मृदुतथा मैत्रंप्रोक्तम् अग्निभविशे अग्निभंकृत्तिका विशा विशाखा एते द्वे मिश्रं साधारणंप्रोक्ते ॥ २ ॥

## अब डेढ श्लोकसे नक्षत्रोंकी स्थिरचरादि संज्ञा कहतेहैं-

भा०-रोहिणी-तीनों उत्तरा इन नक्षत्रोंकी ध्रुव और स्थिर संज्ञा है॥ और तीनों पूर्वा मघा-भरणी-इन्होंकी उग्र-क्रूर संज्ञा है॥ श्रवण-धनिष्ठा-शतभिषा-पुनर्वसु-स्वाती इन्होंकी चर और चल संज्ञा है ॥ अश्विनी-हस्त-अभिजित् पुष्य इन्होंकी लघु और क्षिप्र संज्ञा है॥ अनुराधा रेवती-मृगशिर-चित्रा-इन्होंकी मृदु और मैत्र संज्ञा है॥ कृत्तिका-विशाखा-इन्होंकी मिश्र और साधारण संज्ञा है॥ २॥

**मूलाहींद्रशिवंचदारुणमदस्तीक्ष्णंचुनींद्रैः स्मृतंसंज्ञातुल्यमिहाच-रंतिसुधियःकार्यंहिसंसिद्धये ॥ सूर्याद्याःस्थिरचंचलोग्रमिलिताः क्षिप्रोमृदुर्दारुणःक्षीणेंद्वर्कयमाररारहुशिखिनःपापाबुधस्तैर्युतः॥३॥**

मूलंप्रसिद्धम् अहिराश्लेशा इंद्रोज्येष्ठा शिवः आर्द्रा एतच्चतुष्टयं दारुणम् अदः इदं तीक्ष्णंप्रोक्तम्। इहएषुध्रुवादिसंज्ञेपु नक्षत्रेषु संज्ञातुल्यं कार्यं सुधियः पंडिताः आच-रंति। किमर्थं संसिद्धये। एतदुक्तंभवति-स्थिरनक्षत्रेषुस्थिरंस्तंभप्रतिष्ठादिकम् चरे चरमित्यादिकुर्वंतीतिस्पष्टम्। अत्रसमानार्थेसंज्ञाद्वयकरणंकवित्वबंधनार्थम्। अत्रमतांगे नसूर्यादीनामपिस्थिरादिसंज्ञासौम्यपापत्वंच वृत्तार्द्धेनाह । सूर्याद्याइत्यादि। सूर्यः स्थिरः चंद्रश्चंचलः भौमः उग्रः बुधः मिलितो मिश्रः गुरुः क्षिप्रः शुक्रोमृदुः शनिर्दा-रुणः। अथपापसौम्यान् ग्रहानाह। क्षीणेति। क्षीणेंदुःकृष्णाष्टम्यूर्ध्वंप्रतिपत्पर्यंतंक्षी-णः अर्कः सूर्यः यमः शनिः आरो भौमः राहुः प्रसिद्धः शिखी केतुः एतेक्षीणेंद्वाद्यः पापाः क्रूराः तैः पापैर्युतो बुधः पापःस्यात्। उक्तंचजातकोत्तमे "क्षीणेंद्वर्कार्किभौ-माः स्युः पापाः सौम्योपितद्युतः। राहुकेतू पापतरौ पापः पापयुतस्तथा।" इति। अर्थादन्येसौम्याः एषांप्रयोजनम् क्रूरसौम्यकर्मसाधने ॥ ३ ॥

भा०-मूल-आश्लेषा-ज्येष्ठा-आर्द्रा-इन्होंकी दारुण और तीक्ष्ण संज्ञा है-इसमें संज्ञा तुल्य कार्य करना। जैसे स्थिर नक्षत्रोंमें स्तंभ प्रतिष्ठादिस्थिर करना। सूर्य स्थिर ग्रह है। और चंद्रमा चल है॥ भौमउग्र है। बुध मिश्र है। गुरु क्षिप्र है। शुक्र मृदु है। शनि दारुण है। कृष्णप-क्षकी आठमसे शुक्लपक्षकी एकमतकका चंद्रमा क्षीणचंद्रमा होताहै सो यह क्षीणचंद्रमा-सूर्य-शनि-मंगल-राहु-केतु-ये पाप ग्रह हैं। और बुध पापग्रहोंसे संयुक्त होय तो बुधभी पापहोय। शुक्र-गुरु-बुध-चंद्रमा-ये सौम्य ग्रह हैं। इनका प्रयोजन यह है कि क्रूरकर्ममें क्रूर ग्रह लेना। और सौम्यग्रहोंके दिन सौम्यकर्म करना॥ ३॥

अह्नःस्युःशिवसार्पमित्रपितरोवस्वम्बुविश्वेभिजित्कंद्रेंद्राग्निनि-
शाचराअपिजलाधीशोर्यमाख्योभगः॥ रात्रेःस्युःस्मरहात्र्यजोज-
चरणात्पंचाश्वितोथोदितिर्जीवोविष्णुरिनात्र्यस्तिथिलवाःकर्मै-
षुभोक्तंस्मृतम् ॥ ४ ॥

अथप्रसंगेननक्षत्रसमाननाथान् दिनरात्रिमुहूर्त्तान्नक्षत्रोक्तकार्यसाधकान्वृत्तेनैकेनाह । एतेह्नो दिवसस्यातिथि १५ लवाः पंचदशांशाः मुहूर्त्ताः शिवादयः स्युः प्रथमः शिवः द्वितीयः सर्पः तृतीयोमित्रः चतुर्थः पिता पंचमोवसुः षष्ठोंबु सप्तमोविश्वे अष्टमोभि-जित् नवमोब्रह्मा दशमइंद्रः एकादशइंद्राग्नीद्वादशोनिशाचरः त्रयोदशोजलाधीशोव-रुणः चतुर्दशअर्यमाख्यः पंचदशोभगः । अथरात्रेः प्रथमः स्मरहाशिवः अजचरणा-त्र्यः अजचरणाहिर्बुध्न्यपूषाख्याः क्रमेणद्वितीयोजचरणः तृतीयोहिर्बुध्न्यः चतुर्थः पूषा । पंचाश्वितइति । अश्वितः पंच दस्रयमाग्निकेंदवः पंचमोदस्रः षष्ठोयमः सप्तमोग्निः अष्ट-मः कः ब्रह्मा नवमः इंदुः अथोदितिर्दशमः एकादशोजीवः द्वादशोविष्णुः इनात्र्यः रवित्वष्टानिलाः त्रयोदशोरविः चतुर्दशस्त्वष्टा पंचदशोनिलः वायुः । प्रयोजनमाह । कर्मैषुभोक्तंस्मृतम् एषुमुहूर्तेषु भोक्तंनक्षत्रोक्तंकर्मस्मृतम् मुनींद्रैरित्यध्याहारः । एत-दुक्तंभवति । शिवमुहूर्ते आर्द्रानक्षत्रोक्तं सार्पमुहूर्ते आश्लेषोक्तम् मित्रमुहूर्ते अनुराधोक्तं कर्मकुर्यादित्यादि । तदुक्तंरत्नमालायाम् "यस्मिन्धिष्ण्येयच्चकर्मोपदिष्टंतद्दैवत्येतन्मु-हूर्तेपिकार्यम्" इति लोकेहिस्वामिशब्दंसेवकेप्रयुंजानादृश्यंते । अतोदेवताशब्दस्तन्न-क्षत्रतिथ्यादिषुस्मर्यते तथाविधवृद्धप्रयोगदर्शनाच्च "नागोद्वादशनाडीभिर्दिक्पंचदशभि-स्तथा । भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिम्" इति । नागः पंचमी दिग्दशमी भू-तश्चतुर्दशीतिवत् ॥४ ॥ इतिस्वोक्तमुहूर्तमार्त्तण्डटीकायांनक्षत्रप्रकरणम् ॥ २ ॥

## अब दिनरातके मुहूर्तोंको कहतेहैं-

भा०-दिनमानके पंद्रहवें भागका नाम मुहूर्त है। ऐसे प्रथम मुहूर्तका नाम शिव है । और द्वितीयका सर्प तृ० मित्र । चौथा पिता । पांचमा वसु । छठा अंबु । सातवाँ विश्वे । आठवाँ अभिजित् । नवमा ब्रह्मा।दशमा इंद्र। ग्यारवाँ इंद्राग्नी । बारहवाँ निशाचर। तेरहवाँ जलाधीश । चोदहवाँ अर्यमा ॥ पंद्रहवाँ भग ॥१५॥ ये.दिनके मुहूर्त हैं एसेही क्रमसे ये रात्रिके है । शिव १ अजचरण २ अहिर्बुध्न्य ३ पूषा ४ दस्र ५ यम ६ अग्नि ७ ब्रह्मा ८ चंद्र ९ अदिति १० गुरु ११ विष्णु १२ सूर्य १३ त्वष्टा १४ वायु १५ इन मुहूर्तोंमें नक्षत्रोक्तकर्म करना जैसे आर्द्रानक्षत्रका कर्म शिवमुहूर्तमें करना ॥ ४ ॥

इति श्री श्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्रमोडुरामविरचितायां-
मुहूर्तमार्तण्डदर्शिन्यां नक्षत्रप्रकरणम् ॥ २ ॥

---

आद्यर्तौ पौषशुक्रोर्जमधुशुचिनभस्याः कुयुक्पापवारारिक्तामार्कष्टषष्ठयाः परगृहकुपक्षेरात्रिसंध्यापराह्णाः ॥ मिश्रोग्रामूलतीक्ष्णं विरमनरुणाल्पाधिकाखंगराष्ट्रोत्पातःपापस्यलग्नंनसदरुणजरन्नीलचित्रांबरंच ॥ १ ॥

अथगर्भाधानादिसंस्कारप्रकरणंविवक्षुस्तावद्गर्भाधानस्यऋतुसंबंधात् प्रथमर्तुफलंस्रग्धरावृत्तेनाह। आद्यर्ताविति। तत्रादौमासफलमाह।आद्यर्तौप्रथमर्तौपौषशुक्रोर्जमधुशुचिनभस्याः संतोनस्युरित्यन्वयः । विभक्तिविपरिणामः। पौषः प्रसिद्धः शुक्रोज्येष्ठः ऊर्जः कार्तिकःमधुश्चैत्रः शुचिराषाढः नभस्योभाद्रपदः एतेषण्मासाः नशुभाइत्यर्थः । अर्थादन्येशुभाः तदुक्तंज्योतिर्निबंधे "प्रथमर्तौमधौनारीविधवाभवतिध्रुवम् । वैशाखेधनपुत्राढ्याज्येष्ठेरोगान्विताभवेत् ॥ आषाढेचमृतापत्याश्रावणेचधनान्विता । भाद्रपदेदुर्भगाचआश्विनेचतपस्विनी ॥ ऊर्जेल्पायुष्मतीनारीमार्गशीर्षेबहुप्रजा। पौषेतुपुंश्चलीनारी माघेपुत्रसुखान्विता । फाल्गुनेश्रीमतीसाध्वीक्रमान्मासफलंस्मृतम्" इति । योगफलमाह । कुयुगिति । कुयोगोविष्कंभादिकः योगेपुनर्वयोगाः दुष्टाः संति विष्कंभातिगंडव्याघातवज्रव्यतीपातपरिघवैधृतयः एतेयोगानशुभाइत्यर्थः। अर्थादन्येशुभाः । तदुक्तं "आद्यर्तौदुर्भगानारीविष्कंभेचेद्रजस्वला । वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् ॥ गंडेचपुंश्चलीनारीव्याघातेचात्मघातिनी । वज्रेचस्वैरिणीप्रोक्तापातेचपतिघातिनी ॥ परिघेमृतवंध्याचवैधृतौपतिमारिणी । शेषाःशुभावहायोगायथानामफलप्रदाः" इति । वारफलमाह । पापवाराइति । क्षीणेंदुर्कयमाराः पापाः तेषांवारानशुभाः अर्थादन्ये शुभाः । उक्तंचकारिकायाम् "आदित्येविधवानारीसोमेचैवमृतप्रजा । अंगारेस्वसुहृत्रीचबुधेकन्याप्रसूर्भवेत् ॥ पुत्रिणीगुरुवारेचकन्यापुत्रवतीभृगौ । शनौतुपुंश्चलीनारी प्रथमर्तौविदुर्बुधाः" इति ॥ तथाचनारदः "रोगीपतिव्रतादुःखीपुत्रिणीभोगभागिनी । पतिप्रियाक्लेशभागीसूर्यवारादिषुक्रमात्" इति । कारिकावचनेसोमवारफलंमृतप्रजेति । नारदवचनेपतिव्रतेति । एवंद्वयोर्विरोधेमृतप्रजेतिकृष्णपक्षेसोमवारविषयम् । पतिव्रतेति शुक्लपक्षीयसोमविषयमितिव्यवस्थापनीयम् । अतोमार्तंडवचनंपापवाराइत्येतदतिप्रशस्तम् । तिथिफलमाह । रिक्तामार्काष्टषष्ठयइति । रिक्ताचतुर्थीनवमीचतुर्दश्यः अमा अमावास्याअर्कोद्वादशी द्वादश्याःस्वामीअर्कः । अथवा अर्कसंख्यापिद्वादशवाचकसंख्ययापिद्वादशीभवति। तिथिदेवतापिरत्नमालायाम् "तिथिपाश्चतुर्मुखविधातृविष्णवः" इत्यादयः । अष्ट अष्टमी षष्ठी प्रसिद्धा एताः सप्ततिथयः न शुभाः अर्थादन्याः शुभाः। उक्तंच "आद्यर्तौदुर्भगानारीप्रतिपत्सुरजस्वला । द्वितीयायांभाग्यवतीतृतीयायांसुतान्विता ॥ चतुर्थ्यांविधवानारीपंचम्यांधनदायिनी । षष्ठ्यांचक्लेशभाङ्नारीसप्तम्यांधनवर्धिनी ॥ अष्टम्यांराक्षसीनारीनवम्यांपापवर्धिनी । दशम्यांप्रीतिकृन्नारीएकादश्यांसुतान्विता ॥ द्वादश्यांदुर्भगानारीत्रयोदश्यांहिरण्यदा। चतुर्दश्यांपुंश्चलीस्यात्पौर्णमास्यां

सुपुत्रिणी ॥ यदिभद्रानजायेतदर्शेस्याद्वीरिकाध्रुवम्'' इति । स्थानफलमाह परगृहकु-
पदइति । परगृहंभर्तृगृहादन्यत् कुपदंकुत्सितस्थानम् एतेउभेनिंद्येअर्थादन्यच्छुभम्। उक्तं
च ''देवस्थानेपितृस्थानेनिंद्यस्थानेन्यवेश्मनि। पुष्पवत्याःफलंनस्यान्मार्गेचांडालवेश्म-
नि'' इति । देवस्थानंदेवालयम् पितृस्थानंस्मशानम् निंद्यस्थानंकुत्सितस्थानम् अन्य-
वेश्मभर्तृगृहादन्यगृहम् । अन्यत्सुगमम् । नन्वत्रश्लोकेबहूक्तम् । अत्रकथंपरगृहकुपदइ-
त्येवोक्तम् । सत्यम् । यत्स्थानद्वयमुक्तंतस्मिन्नेवतत्श्लोकोक्तमधितिष्ठति । तद्यथा । देव-
स्थानान्यवेश्मचांडालवेश्मेतिपदत्रयम् परगृहइत्येतस्मिन्पदेधितिष्ठति । अन्यच्छ्लोको-
क्तंनकुपदेवर्तते । ननुमार्गः कथंकुपदोस्ति सतुकुत्सितोनभवति । अस्तिमार्गेपिदुष्टत्वंसर्व-
जनसंचाराद्धर्मशास्त्रप्रसिद्धं तर्हिपूर्वश्लोकोक्तंबहुभाषणं व्यर्थंस्यात् । मैवम् ।तदुक्तंबहुभा-
षणंतत्रनयिकाधिकदोषविवक्षयोक्तमितिनदोषः । वेलाफलमाह—रात्रिसंध्यापराह्णइति ।
रात्रिः प्रसिद्धा संध्ये द्वे अपराह्णस्त्रेधाविभक्तस्याह्नस्तृतीयोभागः एतेचत्वारः काला न
शुभाः अर्थादन्यौपूर्वाह्णमध्याह्नौशुभौ । उक्तंच ''पुत्रिणीसुभगापुण्यापूर्वाह्णेयारजस्वला।
मध्याह्नेतुशुभप्रातिःस्वैरिणीचापराह्णके ॥ संध्ययोरुभयोर्वेश्यानिशायांविधवातथा ''
इति । नक्षत्रफलमाह । मिश्रोग्रामूलतीक्ष्णमिति । मिश्रेकृत्तिकाविशाखेउग्राणिपूर्वा-
त्रयभरणीमघाः अमूलतीक्ष्णानिमूलरहिततीक्ष्णानि आश्लेषाज्येष्ठार्द्राइत्येतन्नक्षत्रदशकं
नशुभम् । अर्थादन्यानिशुभानि । तदुक्तंनारदीयसंहितायाम् ''श्रीयुतासुभगापुत्रवती
सौख्यान्वितास्थिरा । कुलाधिकामानवतीचाश्विन्यांप्रथमार्तवा ॥ १ ॥ दुःशीलास्वै-
रिणीस्वस्यगर्भपातनतत्परा । परप्रेष्याकाकवंध्याभरण्यांप्रथमार्तवा ॥ २ ॥ अनर्था
पुंश्चलीवंध्यागर्भपातनतत्परा । प्रेष्यामृतप्रजावापिवह्निभेप्र० ॥ ३ ॥ सुशीलासुप्रजा
मान्यापतिभक्तादृढव्रता । गृहार्चनरतानित्यंधातृभेप्र० ॥ ४ ॥ गुणान्विताधर्मरता
नारीसर्वसहासती । पतिप्रियासुताढ्याचचंद्रभेप्र० ॥ ५ ॥ कुलटादुर्भगाकष्टामृत-
पुत्रावलाजडा । दुष्टाव्रतपरिभ्रष्टारौद्रभेप्र० ॥ ६ ॥ पतिभक्तापुत्रवतीवरसंतानमोदिनी।
कुलाचारानुरक्ताढ्यादितिभेप्र० ॥ ७॥ पतिप्रियापुत्रवतीनानाभोगवतीशुभा । स्वक-
र्मनिरतादक्षातिष्यभेप्र० ॥ ८॥ परभर्तृरताप्रेष्याकोपिनीनिर्घृणालसा । मृषावागीश-
दुष्पुत्राभौजंगेप्र० ॥ ९ ॥ निर्द्रव्यारोगसंयुक्तासर्वदारतिलोलुपा । पितृवेश्मरतामान्या
पितृभेप्र० ॥ १०॥ परकार्यरतादीनादुष्पुत्राक्लेशभागिनी । मलिनाकर्कशाक्रुद्धाभाग्य-
भेप्र०॥११॥प्रजावतीधर्मरतानिर्वैराभित्रपूजिता । सतीमातृगृहासक्ताअर्यमर्क्षेरजस्वला
॥१२॥निर्द्रव्याभूरिविभवापुत्राढ्याभोगभोगिनी । प्रधानादानकुशलाहस्तर्क्षेप्रथमार्तवा
॥१३॥ चित्रकर्मभोगिनीचकुशलाक्रयविक्रये । विकीर्णकामाश्लक्ष्णाढ्यात्वाष्ट्रभे प्र०
॥१४॥बहुवित्तवतीभीरुःकुशलाशिल्पकर्मणि।पुत्रपौत्रवतीसाध्वीवायुभेप्रथमार्तवा१५॥
नीचकर्मरतादुष्टापानासक्तापराप्रिया।विपुत्रामलिनाक्रुद्धाद्विदैवेप्र०॥१६॥स्वामिपक्षार्चि-
तास्वस्यगुणैःसम्यग्विभूषिता । सुपुत्रासुभगाकांतामित्रभेप्रथमार्तवा ॥ १७ ॥ दुश्च-
रित्ररताक्लेशिन्यनर्थापुंश्चलीव्यसुः । दुःसंतानवतीज्येष्ठानक्षत्रेप्रथ० ॥ १८ ॥ संतानार्थ-

गुणैर्नार्लिप्तैर्युतान्यक्लेशमोचनी । स्वकर्मनिरतानित्यंमूलर्क्षेप्र० ॥१९॥प्रच्छन्नपापादुष्पु-
त्राप्राणिहिंसनतत्परा । अजस्रंव्यसनासक्तातोयभेप्र०॥२०॥ कार्याकार्येषुकुशलासद्भाव-
मानुवर्तिनी । गुणाश्रयाभाग्यवतीविश्वभेप्र०॥२१॥पुत्रपौत्रान्विताभोगधनधान्यवतीर-
ता । कालानुमोदिनीमान्याविष्णुभेप्र०॥२२ ॥ धनधान्यवतीभोगपुत्रपौत्रसमन्विता ।
स्वकर्मनिरतासाध्वीवसुभेप्रथमा०॥२३॥बहुपुत्राधनवतीस्वकर्मनिरतासती ।कुलानुमो-
दिनीमान्यावारुणेप्र०॥२४॥बंधकीबंधुविद्वेष्यानित्यंदुष्टरताखला । शिल्पकार्येषुकुश-
लाऽजांघ्रिभेप्रथमा०॥२५॥आढ्यापुत्रवतीमान्यासुनसत्रापतिप्रिया।बंधुपूज्याधर्मवत्या
हिर्बुध्न्येप्रथ०॥२६॥दृढव्रताधर्मवतीपुत्रसौख्यार्थसंयुता । विख्यातागुणसंपन्नापौष्ण्या
भेप्रथमार्तवा ॥२७॥"अथ संधिफलमाह । विवरमिति । तिथिभादीनांविवरंसंधिःनशु-
भम् । उक्तंच "दुर्भगासर्वसंधिषु" इति । रक्तफलमाह । अनरुणाल्पाधिकाक्तमिति ।
अरुणादन्यत् अनरुणम् अनरुणंच अल्पंच अधिकंच अनरुणाल्पाधिकंतच्चतत्
अक्तंच अनरुणाल्पाधिकाक्तंनसत्स्यात् अनरुणं नाम यत्कुरंगम् आरक्तंनभवति
अक्तंरक्तम् अन्यत्सुगमम् अर्थादन्यच्छुभम्। उक्तंच "प्रथमर्तौफलंस्त्रीणामुच्यतेरजसोऽधु-
ना । सुभगापुत्रसंयुक्ता शुक्लवर्णेतथार्तवे ॥ शशशोणितसंकाशे यद्वाऽलक्तकसंनिभे ।
पुत्रकन्याप्रसूतिःस्यान्नीलेतुस्यान्मृतप्रजा ॥ कर्बुरेम्रियतेसाच पिंगलेचमृतप्रजा । कृ-
ष्णेतुविधवानारी रजस्येवंविनिर्दिशेत् ॥ शोणितेबिंदुमात्रेतुस्वैरिणीचाल्पशोणिता । व-
राप्रध्यस्रवास्यात्तुदुर्भगाबहुशोणिता" इति । ग्रंथांतरेप्युक्तं "रक्तेरक्तेभवेत्पुत्रःकृ-
ष्णेचमृतपुत्रका । पिच्छलाभेभवेद्वन्ध्याकाकवन्ध्याचपांडुरे ॥ पीतेचस्वैरिणीप्रोक्ता
सुभगागुंजवर्णके । सिंदूराभेभवेत्कन्यारजःशोणितलक्षणम्" इति । करणफलमाह ।
गराष्टेति । गरात् अष्टगराष्टगराद्यष्टकरणानिबवपर्यंतानिनसंति न शुभानिस्युः अर्थाद-
न्यानिशुभानि । उक्तंच "ववेपुष्पवतीनारीवन्ध्यावाविधवाभवेत् । बालवेपुत्रिणीनारी
कौलवेप्रमदाभवेत् ॥ तैतिलेसन्मतवतीगरेनारीविनश्यति । नष्टप्रजावणिक्संज्ञेविष्ट्यां
वंध्यावनोज्झिता ॥ शकुनौचचतुष्पादे नारीवैधव्यमाप्नुयात् । नागेनरमतेरामाकिंस्तु-
घ्नेविधवाभवेत्" इति । अथोत्पातफलम् । उत्पातस्त्रिविधः सत् नस्यात् । तथाचनार-
दः "संध्यासूपप्लवेविष्ट्यामशुभंप्रथमार्तवे" इति । अथलग्नफलमाह । पापस्थलग्नमि-
ति । पापग्रहस्थलग्नंनसत्स्यात् क्षीणेंद्वर्कयमाराःपापास्तेषामन्यतमस्थलग्नमित्यर्थः । पा-
पग्रहस्थमेषसिंहवृश्चिकमकरकुंभाः एतानिलग्नानिनशुभानीत्यर्थः अर्थादन्यानिशुभानि
कर्कलग्नेशुक्लपक्षेशुभम् कृष्णपक्षेअशुभम् ।स्वामिवशात् लग्नस्वामिनोवक्ष्यमाणाः । उ-
क्तंच "आत्मघ्नीभ्रूणहामेषेवृषेपुत्रवतीभवेत् । द्वंद्वेकन्याप्रसूर्नारीमृतापत्याचकर्किणि ॥
सिंहेवैधव्यमाप्नोतिकन्यायांस्त्रीप्रसूर्भवेत् । तुलायांबहुपुत्राढ्या दुष्टकर्मरतालिनि ॥चा-
पेपुत्रधनाढ्यास्यान्मकरेदुःखिनीभवेत् । सकृत्प्रजावतीकुंभे मीनेचाल्पप्रजाभवेत्"॥ना

ऽप्योक्ति "कुलीरवृषचापांत्यनृयुक्कन्यातुलायनाः।राशयःशुभदाज्ञेया नारीणांप्रथमार्तवे" इति । अत्रापिकर्कलग्नस्यद्वैधेचंद्रस्यसौम्यत्वपापत्ववशाद्व्यवस्थाज्ञेया । अथ वस्त्रफल-माह । अरुणजरन्नीलचित्रांबरमिति नसत्स्यात् अरुणमारक्तं जरज्जीर्णं नीलंप्रसिद्धम् चित्रंनानावर्णेरंजितम् एवंविधमंबरंनसत्स्यात् नशुभंस्यादित्यर्थः अर्थात् दृढंशुभ्रंपीत वस्त्रंशुभम् । उक्तंच "सुभगाश्वेतवस्त्राचरोगिणीरक्तवाससा । नीलांबरधरानारी विध-वाप्रथमार्तवा ॥ भोगिनीपीतवस्त्राच दृढवस्त्रापतिव्रता । दुर्भगाजीर्णवस्त्राच सुभगाचारु-वस्त्रिणी" अत्रानुक्तमपित्याज्यं प्रकरणोक्तमन्यद्दुष्टंविचारणीयम् । अत्रास्मिन्नुक्ते निषिद्धकालेरजोदर्शनेसति अक्षततिलघृतैर्देव्याईज्ययायजनंस्यात् । केनदेव्यागायत्री-मंत्रेणसंख्यानुपादानादक्षततिलघृतानामष्टोत्तरशतंहोमःयथाशक्तिस्वर्णगोभूतिलदानंच कार्यम् ॥ १ ॥ ॥ इतिस्वोक्तनु० प्रथमार्तवप्रकरणम् ॥ ३ ॥

अब प्रथम ऋतुका फल कहतेहैं–

भा०–पौष–ज्येष्ठ–कार्तिक–चैत्र–अषाढ–भाद्रपद–ये मास–और विष्कुंभ–अतिगण्ड–शूल–गण्ड–व्याघात–वज्र–व्यतीपात–परिघ–वैधृति ये योग।।और पापग्रहोंका वार–और ४।९ १४ । ३० । १२ ।८।६ ये तिथों और दूसरेके घरमें अर्थात् पतिके घरसे बाहर और बुरेस्थानमें और रात्रिमें । और संध्यामें और दिनके तीजे भागमें–कृ० वि० पूर्वा ३ भ० म० मूलरहित-तीक्ष्ण–और तिथि नक्षत्रादिकोंकी संधिमें और रुधिरका रंग लाल कम व ज्यादा नहोना चाहिये पहिली बेरमें और गरसे आठकरणमें और उत्पातमें और पापग्रहोंके लग्नमें और लाल पुराण कृष्णविचित्ररंगके वस्त्रमें आद्यऋतुमें उक्तमासादिक सब अनिष्ट हैं ॥ इन्होंसे और मासादिक शुभ हैं ॥

प्रायश्चंद्रंत्यजांत्याष्टमरिपुतनुगंभांशकौमूढनाथौक्रूरैद्धातौखलांशंमृतिगतखचरंमृत्युतत्पौतनुस्थौ॥सौम्यःकेंद्रत्रिकोणेष्वरिभवसहजेष्वन्यखेटाःप्रशस्ताःसर्वत्रैतत्प्रयोज्यंप्रकरणपठितांस्तद्विशेषान्विदित्वा ॥ २ ॥

## इति साधारणलग्नबलप्रकरणम् ॥ ३ ॥

अथसाधारणलग्नबलंस्रग्धरावृत्तेनाह । प्रायइति।इहवक्ष्यमाणेगर्भाधानादिकृत्येप्रायो बाहुल्येनचंद्रमंत्याष्टमरिपुतनुगम् त्यज जहीति । अंत्यंद्वादशम् अष्टमंप्रसिद्धंरिपुः षष्ठंत-नुर्लग्नम् एतान्प्रतिगतंचंद्रंत्यजेति । तथाभांशकौत्यज किंलक्षणौभांशकौ मूढनाथौमूढः नाथोययोस्तौ तथाअस्तंगतस्यलग्ननवांशावित्यर्थः । पुनःकिंलक्षणौ क्रूरैद्धातौक्रूरग्रह-चंद्राणामन्यतमेन युक्तौ । तथाखलांशंत्यजयत्रकुत्रापिलग्नेपापग्रहनवांशंत्यज । तथामृ-तिगतखचरंत्यज । लग्नादष्टमंग्रहंत्यजेत्यर्थः । तथामृत्युतत्पौतनुस्थौत्यज मृत्युर्ज-न्मराशिजन्मलग्नाभ्यामष्टमंत्यज । तत्पस्तत्पतिस्त्यज एतौतनुस्थौत्यजेत्य-र्थः । लग्नगोचरमाह । सौम्याइति । सौम्याःसौम्यग्रहाःकेंद्राणिलग्नचतुर्थसप्तमदशमा-

नित्रिकोणेनवपंचमे एतेषुकेंद्रत्रिकोणेषु सौम्यग्रहाः प्रशस्ताः अरिभवसहजेषु अन्य-खेटाः अरिःषष्ठं भवः एकादशं सहजंतृतीयम् एषुस्थानेषु अन्येखेटाः सौम्येभ्योऽन्येपा-पग्रहाःप्रशस्ताःस्युः। सर्वत्रैतत्प्रयोज्यम्। एतच्छ्लोकोक्तंसर्वत्रगर्भाधानादिकृत्येप्रयो-ज्यम् साधारणत्वात्। किंकृत्वा प्रकरणपठितांस्तद्विशेषान् विदित्वा पृथक्कृत्येप्रकरण-पठितविशेषान्ज्ञात्वा ॥ २ ॥ ॥ इतिसाधारणलग्नबलप्रकरणम् ॥ ३ ॥

अब साधारण लग्नबल कहतेहैं-

भा०--१२। ८। ६। १। इन्होंमें चंद्रमा होय तो अशुभ है-और अस्तग्रहका लग्न और नवांश नहीं लेना ॥ और लग्न और लग्ननवांश क्रूरग्रहसे और चंद्रमासे युक्त होय तो नहीं लेना और पापग्रहका नवांशका लग्न नहीं लेना । और जन्मलग्नसे अष्टम ग्रहका नहीं लेना। और जन्मराशि वा जन्मलग्नसे अष्टमलग्नको और इन्होंके स्वामी लग्नमें होय तो त्याग करना। और १।४।७।१०।९।५। केंद्रत्रिकोणमें सौम्यग्रह होय तो शुभ हैं और ६।११। ३। पापग्रह होय तो शुभ है इन्होंको गर्भाधानादि सब कर्ममें देखना प्रकरणमें कहे जो विशेष इन्होंको जानके अर्थात् गर्भाधानादि विशेष लग्नबल कहा होय वहभी देखना ॥ २ ॥

**स्वस्त्रींप्राङ्क्दिचतुष्कासमदिनविवरश्राद्धतत्प्राग्दिनानित्यक्त्वा मूलंमघांत्येवसुकलिजनिभाहानिपर्वाणिचर्तौ ॥ याहीज्याकेंदु-लग्नैर्विषमभलवगैरुद्बलैर्भोःसुतार्थिन्व्यस्तैरेतैरिहैवायुगहनिमु-दितःकन्यकेच्छोसुचंद्रे ॥ १ ॥**

अथगर्भाधानंस्रग्धरावृत्तेनाह। भोःसुतार्थिन् ऋतौमुदितःसन्स्वस्त्रींप्रतियाहि गच्छइ-त्यन्वयः। सुतमर्थयतेऽसौसुतार्थीतस्यसंबोधनंभोःसुतार्थिन् ऋतौरजोदर्शनादारभ्यषो-डशरात्रयः ऋतुःतस्मिन्मुत्हर्षःसंजातोयस्यसमुदितः एवंविधःसन्स्वस्त्रींप्रतिगच्छेत्य-र्थः। यतोत्रस्त्रीगर्भधारणंकरोति अत्रस्त्रीअपिहर्षिताभाव्या। तथाचमनुः "ऋतुःस्वा-भाविकः स्त्रीणांरात्रयःषोडशस्मृताः" इति। किंकृत्वाप्राङ्क्दिचतुष्कासमदिनविवरश्राद्ध-तत्प्राग्दिनानित्यक्त्वा। प्राचांनिशांचतुष्कंप्राङ्क्दिचतुष्कंपूर्वरात्रिचतुष्टयम् असमदिनंविष-मदिनंविवराणि दिनरात्रितिथिभादीनांसंधयः श्राद्धंस्वपित्रोः श्राद्धदिनंतत्प्राग्दिनंतस्य-श्राद्धस्यपूर्वदिनं एतानित्यक्त्वेत्यर्थः। एवंमूलंत्यक्त्वा तथामूलमघांत्येत्यक्त्वा मूलम-घेप्रसिद्धे अंत्यरेवती एतानित्यक्त्वेत्यर्थः। तथावसुकलिजनिभाहानित्यक्त्वा। वसुरष्टमी कलिश्चतुर्दशी जनिभंजन्मनक्षत्रम् अहोदिवाएतानित्यक्त्वेत्यर्थः। तथापर्वाणिचत्यक्त्वाप-र्वाणिदर्शपौर्णिमाव्यतीपातवैधृतिसंक्रांतिमहापातादीनित्यक्त्वास्त्रियंप्रतिगच्छेत्यर्थः। त-थाचनारदः "रजोदर्शनतोऽस्पृश्यानार्योदिनचतुष्टयम् । ततःशुद्धाःक्रियास्वेताः सर्व-वर्णेष्वयंविधिः" इति। वसिष्ठः "उपप्लवेवैधृतिपातयोश्च विष्ट्यांदिवापारियपूर्वभागे। संध्यासुसर्वास्वपिमातृपित्रोर्मृतेह्निपत्नीगमनंविवर्ज्यम् ॥ दिनेषुयुग्मेषुचवक्ष्यमाणयोगैः

सुतार्थीस्वसतीमुपेयात् । दिनेष्वयुग्मेषुचकन्यकार्थी हित्वाचगंडांस्तिथिलग्नभागान्" ज्योतिषार्के "ऋतौयुग्मनिशिस्वस्त्रींगच्छेत्पुत्रार्थसद्धियौ । मघामूलांत्यपक्षांतभूतदर्शा- ष्टमीस्त्यजेत्" इति । कैःईज्यार्केंदुलग्नैः विषमभलवगैः इज्योगुरुः अर्कःप्रसिद्धः इंदुश्चंद्रःलग्नंप्रसिद्धम् एतैर्विषमभलवगैः भंराशिः लवोनवांशः विषमराशिर्विषमनवां- शस्थितैरित्यर्थः । न केवलं विषमभलवगैः अपितुउद्बलैः उत्उत्कृष्टंबलंयेषांतानितथा- तैः । अथ कन्याकामिनोविशेषमाह । भोःकन्यकेच्छो इहैव अनंतरोक्तलक्षणेकाले अयुग्महानिविषमेदिनेलुदितः सन्स्त्रींप्रतियाहि । कैः एतैर्व्यस्तैः एतैः ईज्यार्केंदुलग्नैः व्यस्तैरितिसमभलवगैः समराशिसमांशस्थैः । तथाचबृहज्जातके "ओजर्क्षपुरुषांशके षुबलिभिर्लग्नार्कगुर्विंदुभिः पुंजन्मप्रवदेत्समांशकगतैर्युग्मेषुतैर्योषितः" इति । कस्मि- न्सति सुचंद्रेशोभने चंद्रेसति गोचरेणचंद्रबलेसतीत्यर्थः । सुचंद्रेइति । अनन्यगतिकं विनासर्वत्र योज्यम् पूर्ववल्लग्नबलम् ॥ १ ॥

## अथ गर्भाधानका मुहूर्त कहतेहैं—

भा०--गर्भाधानमें ऋतुके पहिलेसे४ चार दिन त्यागके१६ सोल दिनोंमें आप प्रसन्न होय औरस्त्री प्रसन्नहोय जब गमन करे तो पुत्र होय--यदि छठा आठमा दशमा बारमा चौदमा सोलहमा ६ । ८ । १० । १२ । १४ । १६ दिनोंमें गमन करे तो पुत्र होय । और विषमदिनोंमें गमन नहीं करना । और दिनरात्रि नक्षत्रोंकी संधिमें त्याज्य है। और मातापिताके श्राद्धका दिन और- पूर्वदिन त्याज्य है। और मूल मघा रेवती त्याज्य हैं और ८। १२ । तिथी त्याज्य हैं और जन्म- नक्षत्र त्याज्य है । और दिन और ३०।१५। तिथी--व्यतीपात—वैधृति--महापात—संक्रांति ये सब त्याज्य हैं—और गुरु सूर्य चंद्र लग्न ये विषमराशिके और विषम नवांशके और बलवान् होंय तो पुत्र होय । और कन्याकी इच्छा करै तो विषम दिनमें ५ । ७ । ९ । ११ । १३ । १५ । और गुरु सूर्य लग्न समराशिके और सम नवांशमें होंय तो कन्या होय और चंद्रमा बलवान् होय॥१॥

**पुंभेऽर्केज्यारवारेविमिथुनविषमांगांशयोःपुंसवंस्यात्सीमंताख्यं चसत्सुव्ययसुतगृहयोःपर्वरिक्तोनतिथ्याम् ॥ मासेद्वित्रिप्रसंख्ये प्रथमकमपरंतुर्यषष्ठाष्टमेषु प्रोक्तंपुंगर्भलग्नंग्रहबलमनयोर्योज्यमा- वश्चपक्षः ॥ २ ॥**

अथपुंसवनसीमंतोन्नयनेस्रग्धरयाह । पुंभेति । पुंभे "पुन्नक्षत्राणिचैतानि पुष्योहस्तः पुनर्वसुः । अभिजित्प्रोष्ठपाच्चैवअनुराधाश्वियुक्तथा" इति । प्रोष्ठपात्पूर्वाभाद्रपदा एषा- मन्यतमेपुंनक्षत्रे अर्केज्यारवारे रविगुरुभौमवारे विमिथुनविषमांगांशयोःअंगंचअंशश्च अंगांशौविगतंमिथुनंयाभ्यांतौविमिथुनौतौचतौ अंगांशौचतथातयोः मिथुनरहितेविषम- लग्ने विषमनवांशेइत्यर्थः पुंसवंपुंसवनंसीमंताख्यंचसीमंतोन्नयनमिति सत्स्यात् । नामै- कदेशग्रहणेनामग्रहणम्। कयोः सतोः सुव्ययसुतग्रहयोः सतोः पापग्रहरहितयोः व्ययसुत-

अनयोः सतोरित्यर्थः। पर्वरिक्तोनतिथ्याम् पूर्णिमामारिक्तातिथिरहिततिथ्याम्। मासे द्वित्रिप्रसंख्ये प्रथमकम् । पाठोक्तयाप्रथमकंपुंसवनंगर्भाधानात्द्वित्रिप्रसंख्येमासिद्वितीये तृतीयेवामासिस्यात् । अपरंसीमंतोन्नयनम् । तुर्यषष्ठाष्टमेषु गर्भाच्चतुर्थषष्ठाष्टमेषु मासेषुसत्स्यात् यत्पुंगर्भायलग्नबलमुक्तम् ईज्याकेन्दुलग्नैरित्यादिकंतदनयोः पुंसवनसीमंतोन्नयनयोर्योज्यम् । आद्यः पक्षः शुक्लपक्षश्चयोज्यः न कृष्णः । अत्रगर्भाद्यन्नाशनांतेषु गुरुशुक्रमौढ्यादिकंनचिंत्यमित्यग्रेवक्ष्यति।लग्नबलंपूर्ववत्।जातूकर्ण्यः "द्वितीयेवातृतीये वामासिपुंसवनंभवेत् । व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवा"॥ नृसिंहः "रिक्तांचपर्वनवर्मीत्यक्त्वापुंसवनेशुभाः"। वृत्तशते "सीमंतोन्नयनंबुधैस्तुहिनगौपुन्नामधिष्ण्येस्थितेकुर्यात्पुंसवनंच सूर्यदिवसेभौमस्यजीवस्यवा" इत्यादि । बृहस्पतिः "कुलीरंमिथुनंकन्यांहित्वाशेषाःशुभावहाः" इति । नारदः "चतुर्थेमासिषष्ठेवाप्यष्टमेवातदीश्वरे । बलोपपन्नेदंपत्योश्चंद्रताराबलान्विते । अरिक्तापर्वदिवसेकुजजीवार्कवासरे । तीक्ष्णमिश्रोग्रवर्ज्येषुपुंल्क्षेपुंनवांशके ॥शुद्धेऽष्टमेजन्मलग्नात्तयोर्लग्नेननैधने ।शुभग्रहयुतेदृष्टेपापखेटायुतेक्षिते॥पंचभिर्केचतुर्भिर्वाइष्टैर्केंद्रीज्यपूर्वकैः।स्त्रीणांतुप्रथमेगर्भेसीमंतोन्नयनंशुभम् ॥ शुभग्रहेषुधीधर्मकेंद्रेष्वारिभवत्रिषु। पापेषुसत्सुचंद्रेत्यनिधनाद्यारिवर्जिते । क्रूरग्रहाणामेकेपिलग्नादंत्यात्मजाष्टगः । सीमंतिनीवातद्गर्भंबलीहंतिनसंशयः" इति ॥ २ ॥

अब पुंसवन और सीमंतके मुहूर्त कहतेहैं-

भा०-हस्त-पुनर्वसु-पुष्य-अभिजित्-पूर्वाभाद्रपदा-अनुराधा-अश्विनी यह नक्षत्र होंय और सूर्य गुरु भौम वार होय-और मिथुन रहित विषम लग्न और विषम नवांश होय तब पुंसवन और सीमंतकरण श्रेष्ठ है-और बारहवें१२ पांचवें ५ पाप ग्रह न होंय तब । और १५ । ३० । ४ । ९ । १४ । ये तिथि नहीं लेना । और गर्भसे दूजे तीजे मासमें करना शुभ है-और सीमंतोन्नयनको गर्भसे ४ । ६ । ८ वें मासोमें श्रेष्ठ है--और पुंगर्भके अर्थ लग्नबल पहले कहा है सो पुंसवन सीमंतमें लेना शुभ है और शुक्लपक्ष शुभ है ॥ २ ॥

**सूतौजातंविदध्यादपिजनिमरणाशौचकेवातदंतेद्विपैर्ब्राह्मोत्तराश्विस्वमृदुभिरथोनामवर्णाविदध्युः ॥ सूतेःसूर्याष्टिविंशाकृतिमितदिवसेजातभैर्नाचरांगंरिक्ताष्टम्यारमंदान्व्ययगतखचरंप्रोज्झ्यरात्रिंपराह्णम् ॥ ३ ॥**

अथजातकर्मादिविधिस्रग्धरावृत्तेनाह । सूतौप्रसूतौजातायांजातंजातकर्मविदध्यात्कुर्यात्।अथकदाचित् सूतकमध्येप्रसूतौजातायांसत्यांस्मार्तकर्मपरित्यागो "राहोरन्यत्रसूतक" इति शास्त्रेणजातकर्मणोवरोधेप्राप्तेतदपवादमाह। जनिमरणाशौचकेपि । अयमर्थः । कदाचिज्जातकमृतसूतकयोः प्रसूतिर्भवति । तदाजातकर्मविषयेसूतकांतरदोषोनास्तीतिभावः । सूतकांतरेसत्यपिजातेपुत्रेपितासचैलंस्नानंकुर्यात् इतिस्वस्वगृह्योक्तं

कर्मकुर्यादित्यर्थः । यतः पूर्वाशौचेनैवास्यशुद्धिः पितुरितिकर्तुरुपलक्षणं वातदंतेपूर्वा-
शौचांतेवाएतस्यांतेवाक्षिप्रादिभिर्नक्षत्रैः कुर्यात् क्षिप्राणि अश्विनीहस्ताभिजित्पुष्या
ब्राह्मंरोहिणी उत्तरास्तिस्रः चराणिश्रवणत्रयंपुनर्वसुस्वात्यः मृदूनिअनुराधारेवतीमृग-
चित्राः एभिरित्यर्थः । लग्नबलंपूर्ववत् । उक्तंच "तस्मिन्जन्ममुहूर्तेपिसूतकांतेथवा
शिशोः । जातकर्मचकर्तव्यंपितृपूजनपूर्वकम् ॥ क्षिप्रैश्चरैर्ध्रुवैर्मैत्रैर्द्वादशेप्रथमेह्निवा । केंद्रे
गुरौभृगौकार्यंजातकर्मसनातनम्" इति । प्रजापतिः "सूतकेतुसमुत्पन्नेपुत्रजन्मयदा
भवेत् । कर्तुस्तात्कालिकीशुद्धिः पूर्वाशौचेनशुध्यति" इति । संवर्तः "जातेपुत्रेपितुः
स्नानंसचैलंतुविधीयते" । तच्चशीतोदकेनकार्यम् । तत्रजाबालिः "कुर्यान्नैमित्तिकं
स्नानंशीताद्भिः काम्यमेवच" इति । एतच्चरात्रावपिकार्यम् । तत्रवसिष्ठः "पुत्रजन्मनि
यज्ञेचतथासंक्रमणेरवेः । राहोश्चदर्शनेस्नानंप्रशस्तंनान्यथानिशि । तच्चउत्तराभिमुखं
कार्यम् । तदुक्तंतेनैव "श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् । उत्तराभिमुखोभू-
त्वानद्यांवादेवखातके" इति । रात्रौउदकादिगमनाशक्तौविशेषमाह सांख्यायनः
"दिवाग्न्याहृततोयंकृत्वास्वर्णयुतंतुतत् । रात्रिस्नानेतुसंप्राप्तेस्नायादनलसन्निधौ" इति ।
अथनामकर्माह । अथोनाम वर्णाविदध्युः "सूतेः सूर्याष्टिविंशाकृतिमितदिवस" इति ।
अथोऽनंतरंवर्णाः ब्राह्मणाद्यः क्रमेणसूतेः प्रसूतेः सकाशात् सूर्या१२ष्टि१६विंशा२०-
कृति२२मितदिवसे द्वादशषोडशविंशद्वाविंशमितदिवसेनामविदध्युः कुर्युरित्यर्थः ।
अयमर्थःब्राह्मणोद्वादशदिवसे क्षत्रियः षोडशे वैश्योविंशतिमिते शूद्रोद्वाविंशतिदिवसे
नामकुर्यादित्यर्थः । तच्चोक्तं बृहस्पतिना "द्वादशेदिवसेवापिजन्मतोदिवसेशुभे ।
षोडशे विंशतौचैवद्वाविंशेवर्णतः क्रमात्" इति । अत्रान्येपि विकल्पाः संति । तत्र
व्यासः "नामधेयंदशम्यांतुकेचिदिच्छंतिसूरयः । द्वादशेह्न्याहुरन्येतुमासपूर्णेतथा
परे ॥ अष्टादशेहनितथावदंत्यन्येमनीषिणः" इति । प्राप्तकालेपिविशेषमाह गर्गः
"व्यतीपातेचसंक्रांतौग्रहणेवैधृतावपि । श्राद्धंविनाशुभंनैवप्राप्तकालेपिमानवः ॥ अमा-
संक्रांतिविष्ट्यादौप्राप्तकालेपिनाचरेत्" इति। यत्रकालनिरोधस्तत्रदोषोनास्ति "यस्यांक्रि-
यायांसर्वोक्ताः कालेमासदिनैरपि।तस्यांनदोषोमूढत्वंवक्रंवाजीवशुक्रयोः" इति ।अथका-
लातिक्रमेनक्षत्राण्याह । जातभैर्वांति । जातभैर्जातकर्मोक्तनक्षत्रैर्मैत्रैः क्षिप्रैरित्यादिभिर्वा
कार्यम् । तदुक्तंनारदेन "देशकालोपघाताद्यैःकालातिक्रमणंयदि । अनस्तगे
भृगावीज्येतत्कार्यंचोत्तरायणे ॥ चरस्थिरमृदुक्षिप्रनक्षत्रेशुभवासरे । चंद्रता-
राबलोपेतेदिवसेचशिशोः पिता" इति । अथात्रत्याज्यविशेषमाह । चरांग-
मिति । चरांगंलग्नंरिक्ताष्टम्यारमंदान् रिक्ताचतुर्थीनवमीचतुर्दश्यः । अष्टमीप्रसिद्धा
आरोभौमप्रसारः मंदः शनैश्चरः तान्व्ययगतखचरं खचरंव्ययभावगतं सौम्यमसौ-
म्यंवा रात्रिः प्रसिद्धा अपराह्णोदिनतृतीयांशएतान्प्रोज्झ्यत्यक्त्वा । लग्नबलंपूर्ववत् ।
तथाचबृहस्पतिः "पूर्वाह्णः श्रेष्ठइत्युक्तोमध्याह्नोमध्यमः स्मृतः । अपराह्णंचरात्रिंच

वर्जयेन्नामकर्मणि" इति । नृसिंहः "तायाहेदुष्टयोगेचशनिभूमिजवारयोः । रिक्तापर्वाष्टमीविष्टिः किंस्तुन्नंचविशेषतः ॥ एतेर्दोषयुतेकालेरात्रावपिनकारयेत" इति । बृहस्पतिः "शुभवारेचषड्वर्गेशुभानांनामसंपदे । राशयश्चस्थिराः श्रेष्ठा द्विःस्वभावाः शुभैर्युताः" । नृसिंहः "लग्नद्व्यायाष्टमेसर्वेनशुभानामकर्मणि"इति । केषांनामकार्यमिति । संग्रेहेउक्तम् "देवालयगजाश्वानांवृक्षाणांवापिकूपयोः । सर्वोपकारणानांचचिह्नानांयोषितांनृणाम् ॥ काव्यादीनां कवीनांचपश्वादीनांविशेषतः । राजप्रासादसंज्ञानांनामकर्मविशिष्यत" इति ॥ ३ ॥

### अब जातकर्मका मुहूर्त कहतेहैं ।

भा०--बालकके जन्मसमयमें जातकर्म करणो और जाताशौच मृताशौचमें होवे तो वो करणो अथवा सूतकके अंतमें करणो--जो सूतकके अंतमें करै तो जो मुहूर्त देखने करणो क्षिप्र-रे०--उत्त० ३ चर--मृदु ये नक्षत्र लेणा ।

### अथ नामकर्म ।

ब्राह्मण १२ में दिन पुत्रके वा कन्याके नाम करै-क्षत्रिय १६ सोलमें-वैश्य वीस २० में शूद्र २२ में करै-और काजपरो जायतो जात--कर्मोक्त क्षिप्रादि नक्षत्रमें करनो ॥ और १ । ४ । ७ । १० इन्हीं लग्नोंमें अशुभ है--और ४ । ९ । १४ । ८ मंगल शनि ये तिथीं ने वार नेष्ट हैं । और वारमें कोई ग्रह नहीं लेणो ॥ और रात्रिमें और दिनके तृतीय भागमें नहीं करनो ॥ ३ ॥

**जन्माहाद्द्वादशेह्निध्रुवमृदुलघुभैर्वान्यसेत्पालकेऽर्भंसौम्याश्वीज्यध्रुवैर्द्वैर्भुविशुभदिवसेपंचमेमासिदध्यात् ॥ एकत्रिंशेदिनेवाशननिगदितभैःकंबुनायोज्यमर्भंव्यग्वाशास्येपयोथास्यगमवदुदितोनिष्क्रमोमासितुर्ये ॥ ४ ॥**

अथपालकारोहणंभूम्युपवेशनंदुग्धपानंनिष्क्रमणंचेतिचतुष्टयंवृत्तेनाह । प्रसूतेः सकाशाद्द्वादशेदिवसेपालकेखट्वायांवा अर्भंबालकंन्यसेत् निदध्यात् । उक्तकालातिक्रमेध्रुवमृदुलघुभैर्वानक्षत्रैर्निदध्यात् । लग्नवलंपूर्ववत् "सूर्यभाच्चंद्रभंयावत् पंचपंचचतुर्दिशम् । मध्येचससदेयानिबालकस्यहितायवै ॥ पूर्वभागेतुरोगित्वंदक्षिणेमरणंध्रुवम् ॥ पश्चिमेविकृतीबालउत्तरेव्याधिसंभवः ॥ शेषेतुमध्यनक्षत्रेबालकस्यहितायवै ।" तथाचोक्तंबृहस्पतिनास्वसंहितायाम् "खट्वारोहस्तुकर्तव्योदशमेद्वादशेपिवा । षोडशेदिवसेवापिद्वाविंशेदिवसेपिवा ।" तथोक्तंभविष्योत्तरे "अभीष्टदिवसेपुण्येचंद्रतारावलान्विते । मृदुध्रुवक्षिप्रभेतुमातावाकुलयोषितः ॥ शेषशायिनमाचिंत्यप्राक्शीर्षंविन्यसेच्छिशुम्" इति । भूम्युपवेशनमाह । सौम्येति । सौम्योमृगः अश्विनी प्रसिद्धा इज्यः पुष्यः ध्रुवाणिपूर्वोक्तानि त्र्युत्तरारोहिण्यः इंद्रोज्येष्ठा एभिर्नक्षत्रैः शुभदिवसे रिक्तादिवर्जिते जन्मतः पंचमेमासि भुविभूम्याम् अर्भंनिदध्यात् उपवेशयेदित्यर्थः । तथाचोक्तंब्रह्मपुराणे "पंचमेचतथामासिभूमौतमुपवेशयेत् तत्रसर्वेग्रहाः शस्ताभौमोप्य-

अविशेषतः ॥ तिथिविवर्जितेरिक्तांशस्तान्याब्दपुण्यानिमे । उत्तरात्रितयंसौम्यंपुष्यर्क्षं शुक्रदैवतम् ॥ माजामत्यंचहस्तश्चशस्तमाश्विनमेवच । वराहंपूजयेदेवींपृथ्वींवाचनया द्विजान् ॥ भूभागमुपलिप्याथतत्रकृत्वातुमंडलम् । शंखपुण्याहशब्देनशिशुंतमुपवेश- येत्'' इति । उपवेशनमंत्रस्तत्रैवोक्तः ''रक्षैनंवसुधेदेविसदासर्वगतंशिशुम् । आयुःप्र- माणंसकलंनिक्षिपस्वहरिप्रिये'' इति । दुग्धपानमाह । एकत्रिंशेदिनइति । एकत्रिंशे दिवसेऽर्भेबालकेकंबुनाशंखेनपयः दुग्धंयोज्यंपाययेदित्यर्थः । अत्रनृसिंहः ''एक- त्रिंशद्दिनेचैवपयःशंखेनयोजयेत्'' इति । अथमातुः स्वल्पपथ्यत्वेपक्षांतरमाह । वाशन- निगदितभैरिति । अन्नप्राशननक्षत्रैर्योज्यम् भैरित्युपलक्षणम् । अन्नप्राशनोक्तम् अन्यद- पिविचार्यम् । किंलक्षणे अर्भे व्यग्वाशास्ये विगतः अगुः राहुर्यस्याः साव्यगुः साचासौ आशाचतस्याम् आस्यंमुखंयस्यसतथा तस्मिन् राहुवर्जितदिङ्मुखइत्यर्थः । लग्नबलं पूर्ववत् । व्यग्वाशास्यइति उपलक्षणं तेनरुद्रयोगिन्यादिकमपिवर्ज्यम् । तथाचोक्तंज्यो- तिर्निबंधे ''योगिनीराहुरुद्रादिमुखंचैवविवर्जयेत्'' राहुलक्षणं ''गुरुभान्वोर्वसेत्प्राच्या- मिंदौशुक्रेचदक्षिणे । कालराहुःकुजेमत्यगुत्तरेबुधमंदयोः'' लक्षणांतरम् ''इंद्रेवायौयमे रौद्रेतोयाग्निशशिराक्षसे । यामार्धमुदयाद्राहुर्भ्रमत्येवं दिगष्टके'' इति । उदयात्सूर्योदया- त् । रुद्रलक्षणं ''हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवम् । उदयादिभ्रमतिसदा- घटिकारुद्रोमहालयेत्यादि'' हरिरिंद्रः । अथ निष्क्रमणमाह । अथास्यगमवदुदितोनि- ष्क्रमोमासितुर्ये । तुर्येचतुर्थेमासि अस्यार्भकस्यनिष्क्रमोनिष्क्रमणंगमवत् गमनवदिति यावत् । उदितःउक्तःपूर्वःअत्रयात्राप्रकरणोक्तं सर्वयोज्यमित्यर्थः । निष्क्रमणंबृहस्प- तिनोक्तम् ''अथनिष्क्रमणं नाम गृहात्प्रथमनिर्गमः । अकृतायां क्रियायांस्यादायुः- श्रीनाशनंशिशोः'' इति । यमः ''उपनिष्क्रमणंकुर्याच्चतुर्थेमासिसावने'' इति । कारि- कायां ''चतुर्थेमासिपुण्यर्क्षेशुक्लेनिष्क्रमणंभवेत् । स्नातं स्वलंकृतंस्वाभिः कृतस्वस्त्य- यनंशिशुम्'' इति । ''आदायगेहान्निर्गम्यगच्छेद्युदेवतालयम् । अभ्यर्च्यदेवतांसम्य- गाशिषोवाचयेदथ ॥ कृत्वाप्रदक्षिणंगेहमानयंतिततः स्वकम् । मातृस्वसृगृहंगत्वामा- तुलादेर्गृहंनयेत् ॥ तदाशीर्वचनाद्यैश्चदीर्घायुरभिनंदितः । जयंतस्यमतेनायंलिखितः शिशुनिष्क्रमः'' स्वगृह्यानुसारं योजयेत् ॥ ४ ॥

## अब बालकको पालणामें सोरावणेरो ने पृथ्वीउपर बेठाणेरो ने दुग्धपानका और घरके बाहर निकालणेका मुहूर्त कहतेहैं ॥

भा०-जन्मसे बारवें दिन शिशुने पालनेमें वा मंचकमें सोरावनो शुभ है । यदि १२ मे दिन न करेतो यह मुहूर्तसे सोरावना-मृदु-लघु-इनोंमें शुभ होय ॥ और अश्विनी-पु- ष्य-ध्रुव-ज्येष्ठा नक्षत्र और शुभ दिनमें और पांचमें महीनामें शिशुको पृथ्वीपर बेठाना ॥ और अन्नप्राशनके नक्षत्रमें इकतिसमें दिनमें शिशुको शंखसे दूध पाणो शुभ है ॥ और राहुकी दिशामें बालकको मुख नहीं राखणो ॥

अथ राहुलक्षणम् ।

गुरु सूर्यके दिनमें राहु पूर्वमें रहैहै । और चंद्रशुक्रके दिन दक्षिणमें । और भौमवारके दिन पश्चिममें । और बुध शनिके दिनमें उत्तरमें राहु रहे है । और यात्राके मुहूर्तमें चौथे महीनेमें बालकको घरबार फेरणो शुभ है ॥ ४ ॥

**मैत्रैःक्षिप्रैःस्थिरभचरभैर्व्योमनिलांभःपकर्क्षैश्चैकाफापौष्विनशनिकुजर्क्षांशवारानपास्य ॥ रिक्तापर्वेश्वरवसुतिथीन्रात्रिसंध्येसमाब्दंपुंस्त्रीकर्णौसविधिपटुनादक्षवामादिवेध्यौ ॥ ५ ॥**

अथकर्णवेधंमंदाक्रांतयाह मैत्रैरिति।मैत्रैः अनुराधारेवतीमृगचित्राभिःक्षिप्रैःहस्ताकाभिजिदाज्यभैःस्थिरभचरभैः स्थिराणिउत्तरात्रयरोहिण्यः चराणि श्रवणत्रयपुनर्वसुस्वात्यः।तैःकथंभूतैः स्थिरभचरभैः व्योमनिलांभःपकर्क्षैः विगतानिअनिलांभःपकर्क्षाणियेभ्यस्तानितथातैः अनिलःस्वाती अंभःपः शततारका कःरोहिणी तद्रहितैरित्यर्थः।चैकाफापौषु चैत्रकार्तिकफाल्गुनपौषेष्वित्यर्थः। पुंस्त्रीकर्णौपुरुषास्त्रियोः कर्णौपटुनाकुशलेन सविधियथास्यात्तथादक्षवामादिवेध्यौ पुरुषस्यदक्षिणकर्णादिः स्त्रिया वामकर्णादिरित्यर्थः कर्णवेधनेसूचीमाह बृहस्पतिः "सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः । शूद्रस्यत्वायसी सूचीमध्यमाष्टांगुलात्मिका ॥" कर्णवेधविधिस्तुगृह्यपरिशिष्टेउक्तः । "अथकर्णवेधोवर्षे तृतीयेपंचमेवा पुष्येंदुहस्तचित्रारेवतीषुपूर्वाह्णे प्राङ्मुखउपविश्य दक्षिणंकर्णमभिमंत्रयेत् । भद्रंकर्णेभिरिति । वक्ष्यंतीवेदिति। कुमारायमधुरंदत्त्वाथाभिवेध्यातोब्राह्मणभोजनम्" इति । किंकृत्वाइनशनिकुजर्क्षांशवारानपास्य रविशनिकुजानांऋक्षाणिलग्नानि अंशानवांशाः वाराः प्रसिद्धास्तांस्त्यक्त्वेत्यर्थः । पुनः किंकृत्वा रिक्तापर्वेश्वरवसुतिथीनपास्य रिक्ताश्चतुर्थीनवमीचतुर्दश्यः पर्वपूर्णिमामावास्ये संक्रांतिश्च ईश्वरातिथिरेकादशी वसुरष्टमी एतानपास्य पुनः किंकृत्वा रात्रिसंध्येअपास्य स्पष्टम् । पुनः किंकृत्वा समाब्दमपास्य समवर्षंत्यक्त्वाविषमेवर्षेकर्तव्यमित्यर्थः । लग्नबलं प्राग्वत् । अत्र नृसिंहः "वेध्यौकर्णावब्दतस्याविषमेब्देपिवाशिशोः । शुक्लपक्षेशुभेवारेचैत्रपुष्योर्जफाल्गुने ॥ एकादश्यष्टमीपर्वरिक्तावर्ज्याःशुभावहाः । शिष्टाश्चतिथयः सर्वाः कृष्णेचांत्यत्रिकंविना ॥ कर्णद्वयादितिक्षिप्रमृदुभेष्वायगैः शुभैः । गुरौलग्नेचकेंद्येष्वाद्युत्तरासु श्रुतिव्यधेत्" इति। अगस्त्यः "द्वयोश्चसंध्ययोर्लग्नेनकुर्यात्कर्णवेधनम् । रात्रावपितथा लग्नेनक्षत्रतिथिसंधिषु ॥ कर्णवेधंनकुर्वीतकुर्याच्चेच्छेदनं भवेत्" इति । बृहस्पतिः "मंदार्कारारासवाराः स्युर्वर्ज्याः कर्णस्यवेधने । गुरुशुक्रबुधेंदूनांपूज्यवारांशकोदयात्" इति संग्रहे "शातकुंभमयीसूचीवेधनेपुशुभप्रदा । राजतीवायसीवापियथाविभवतः शुभा ॥ सुभूमौप्रांगणेरम्येशुचौदेशेऽवरेरवौ । संस्थितेवेधयेत्कर्णौस्त्रीपुंसोर्वामदक्षिणौ । शुक्लसूत्रसमायुक्ततास्रसूच्याथवेधयेत् । वेधात्तृतीयनक्षत्रेक्षालयेदुष्णवारिणा" इति । देवलः "कर्णरंध्रेरवेश्छायानविशेदग्रजन्मनः । तंदृष्ट्वाविलयंयांतिपुण्यौघाश्चपुरातनाः" इति॥५॥

अथ कानविंदावणरो मुहूर्त कहतेहैं ।

भा०–अनुराधा–रेवती–मृग–चित्रा–अश्विनी–हस्त–अभिजित्–पुष्य–उत्तरा ३–श्रवण–धनिष्ठा–पुनर्वसु–ये नक्षत्र–और कार्तिक–चैत्र–फाल्गुन–पौष–ये मास शुभ हैं। सूर्य और भौम इन्होंका लग्न और नवांश और वार अशुभ हैं–और संक्रांति ४।९।१४। ३०।१५।११ ८। ये तिथियां अशुभ हैं–और रात्रिदिनकी संधि और समवर्ष द्वितीयादिक नेष्ट हैं और पुरुषके प्रथम दक्षिणकर्ण और कन्याके प्रथम वामको वेध शुभ है ॥ ५ ॥

**मासेषष्टेष्टमेनुर्निगदितमशनंपंचमेसप्तमेवाभीरोरुज्झंतिनंदाहरिवसुरजनीरिक्तकाःस्वर्क्षमेके॥ सद्दक्कांशाह्निचांद्रेध्रुवमृदुचरभंक्षिप्रभेजालिमीनोनांगेकेंद्रत्रिकोणांत्यमृतिषुविमलास्विंदुरिष्टोखिलोंगे॥ ६ ॥**

अथअन्नप्राशनंवृत्तेकेनाह । जन्मतःषष्ठमासे अष्टमेवामासे नुः नरस्यअशनम् अन्नप्राशनंनिगदितंप्रोक्तम । भीरोःकन्यायाः पंचमेसप्तमेवामासे अशनंप्रोक्तम्। अत्रनंदाहरिवसुरजनीरिक्तकाः उज्झंतिमुनयः नंदाः प्रतिपत्षष्ठ्येकादश्यः हरिर्द्वादशी वसुरष्टमी रजनीरात्रिः रिक्ताश्चतुर्थीनवमीचतुर्दश्यः ताः स्वर्क्षंजन्मनक्षत्रंच एके आचार्या अत्र उज्झंति । तथाचोक्तं "जन्मर्क्षेश्रीक्षयंविंद्यात्" इति । जन्मर्क्षंतुपुंविवाहान्नप्राशनादिषुबहुभिर्गृह्यते तदग्रेवक्ष्यते पुनः कस्मिन् सद्दक्कांशाह्नि दृक्कोदृक्काणः अंशोनवांशः अहोदिनम् एषांसमाहारः दृक्कांशाहः सतोग्रहस्यदृक्कांशाहः सद्दक्कांशाहः तस्मिन्कथंभूतेसद्दक्कांशाह्नि अचांद्रे न विद्यते चांद्रदृक्कांशोयस्मिंस्तदचांद्रं तस्मिन् चंद्रस्यदृक्कांशाहानिनिंद्यानिक्षीणश्चेत् पूर्णेतुनदोषः । अन्यशुभग्रहणांशुभानीत्यर्थः । पुनःकस्मिन् ध्रुवमृदुचरक्षिप्रभे ध्रुवादीनिप्रसिद्धानि पूर्वमेवोक्तानि तत्रेत्यर्थः । पुनः अजालिमीनोनांगे अजोमेषः अलिर्वृश्चिकः मीनः प्रसिद्धः एभ्योन्यलग्ने मेषवृश्चिकमीनलग्नान्यन्नप्राशने नशुभानीत्यर्थः । कासुसतीषु केंद्रत्रिकोणांत्यमृतिषु विमलासुसतीषु केंद्राणिप्रथमचतुर्थसप्तमदशमानि त्रिकोणेनवपंचमे अंत्यंद्वादशं मृतिरष्टमम् । "परवल्लिंगं द्वंद्वतत्पुरुषयोः" एतासुविमलासु पापग्रहरहितासु सतीषु पापग्रहोत्र अनिष्टकारीत्यर्थः । इंदुश्चंद्रः अखिलः पूर्णः अंगेलग्नेइष्टः अन्नप्राशनेपूर्णचन्द्रोलग्नेशुभइत्यर्थः । अन्यल्लग्नबलंपूर्ववत् । अत्रनारदः "षष्ठेमास्यष्टमेवापिपुंसांस्त्रीणांतुपंचमे । सप्तमेमासिवाकार्यनवान्नप्राशनंशिशोः ॥ रिक्तांदिनक्षयंनंदांद्वादशीमष्टमीसमाम् । त्यक्त्वान्यातिथयःश्रेष्ठाःप्राशनेशुभवासराः" इति । ज्योतिर्विवरणे "जन्मर्क्षेश्रीक्षयंविंद्यात्कर्मर्क्षेचातिसौख्यकृत् आधानर्क्षेचबालानांप्राशनेरोगनाशनम्"॥ वृद्धनारदः "जीवसौम्यसितानांतद्दक्काणादिवर्गांशकाः । बालान्नप्राशनेशस्तानचंद्रार्कार्किजासृजाम्" इति । अर्णवे "गोश्चौकुंभस्तुलाकन्या सिंहःकर्किमृगोयमः । एताश्चराशयश्शस्तानमेषझषवृश्चिका" इति नारदः "चरस्थिरमृदुक्षिप्रनक्षत्रेषुननैधन" इति । रवौलग्नेकुष्ठीत्याह ॥ ६ ॥

अब अन्नप्राशनका मुहूर्त कहतेहैं ।

भा०-पुरुषने छटे आठमें मासमें अन्नप्राशन कराना । और कन्याके पांचमें वा सातमें मासमें कराना । जिसमें ये नक्षत्र लेना-ध्रुव-मृदु-चर-क्षिप्र शुभ है ॥ और ४ । ९ । १४ । १ । ६ । ११ । १२ । ८ ये तिथियाँ और रात्रि और जन्मनक्षत्र अशुभ हैं-और शुभको द्रेष्काण नवांश दिन शुभ है । और क्षीणचंद्रका द्रेष्काण नवांश और दिन अशुभ है और १ । ८ । १२ । ये लग्न अशुभ है ॥ और १ । ४ । ७ । १० । ९ । ५ । १२ । ८ । लग्नसे इन स्थानोंमें कोई ग्रह न चाहिये-और पूर्ण चंद्रमा लग्नमें होय तो श्रेष्ठ है ॥ ६ ॥

**गर्भाद्यन्नाशनांतेपुनगुरुसितयोर्बाल्यवार्द्धच्येचमौढ्यंजह्यात्काल-स्यरोधाद्धरिगुरुमयनंयाम्यमूनाधिमासौ ॥ एतच्चौलादिपूज्झे-द्वथगुरुसितयोर्बाल्यवार्द्धच्येनगाहेचाथोशाखेशमौढ्येव्रतमपिनि-गमारंभमार्योनकुर्यात ॥ ७ ॥**

अथयेषुसंस्कारेषुगुरुशुक्रास्तादिदोषाभावः येषुदोषः बालत्ववृद्धत्वप्रमाणं शाखेश-स्यमौढ्येकिंनकार्यमिति चतुष्टयं वृत्तेनाह । गर्भाद्यन्नाशनांतेषुगर्भाधानाद्यन्नप्राश-नांतेषु कर्मसु गुरुसितयोर्बाल्यवार्द्धच्येच परंमौढ्यंगुरुशुक्रमूढत्वंजह्यात् । कस्माद्धेतोः कालस्यरोधात् यतःशास्त्रेगर्भाधानाद्यन्नप्राशनांतानांकर्मणांकालनिरोधः कृतोस्ति तः स्माद्धेतोः तथाचमांडव्यः "नित्ययानेगृहेजीर्णे प्राशनांतेषुसप्तसु । वधूप्रवेशमांगल्ये नमौढ्यंगुरुशुक्रयोः" इति । हरिगुरुं सिंहस्थितम् बृहस्पतिम् याम्यमयनंदक्षिणा-यनम् । ऊनाधिमासौक्षयमासाधिमासौनत्यजेत् । कालस्यरोधादित्येतत्पदंबुद्ध्या-वगंतव्यम्। तद्यथा प्रसूतिसमयएवजातकर्मविहितम् तत्रकालनिरोधात् किमप्यस्तादि-कंनचिंत्यम् । अन्नप्राशनंतु मासेषष्ठेऽष्टमेवेतिविकल्पेनमासद्वयेविहितम् तत्रयस्मिन्मासे मौढ्यादिकंनस्यात्तत्रकर्तव्यं कालस्यसावकाशत्वात् । तयोरपिमासयोर्यदि सिंहस्थगु-र्वादिनिरोधःस्यात् सोप्यत्रानुचिंतनीयः ।एवंगर्भाद्यन्नाशनांतेषुविचारणीयम्।"अनन्य-गतिकंकुर्यान्नित्यंनैमित्तिकंतथा" इतिस्मरणात् । संस्कारक्रमस्तुकात्यायनगृह्यकारि-कायामुक्तः "गर्भाधानंपुंसवनंसीमंतोन्नयनंततः । जातकर्माभिधेयंच निष्क्रमप्राशनेक्र-मात् ॥ चूडोपनयनंवेदव्रतानांचचतुष्टयम् । गोदानंमेखलामोको विवाहःषोडशक्रियाः" इति । अनेनक्रमेणगर्भाद्यन्नाशनांतेषुमौढ्यादिकंबुद्ध्यावलोकयेदित्यर्थः । तथाचबृह-स्पतिः "मासप्रयुक्तकार्येषुमूढत्वंगुरुशुक्रयोः । नदोषकृत्तदामासलक्षणोवलवानिति" यमोपि "गर्भेवार्धुषिकेभृत्ये श्राद्धकर्मणिमासिके। सपिंडीकरणेनित्येनाधिमासंविवर्ज-येत्" भृगुः "सीमंतजातकादीनिप्राशनांतानिचक्रमात् । कर्तव्यानिनदोषोस्तिपंचा-ननगतेगुरौ" इति । कात्यायनस्मृतौ "गर्भाधानादिकाअन्नप्राशनांतामृडिच्छचे। आ-कर्णवेधाःकर्तव्यानान्याइत्याहभास्कर " इति । अस्तादिकंचूडादिषुवर्जनीयमित्याह

एतच्चौलादिषूज्झेदिति एतद्गुरुसितास्तादिकंचूडादिषुकर्मसुउज्झेत्त्यजेत्॥ अथबालत्ववृ-द्धत्वप्रमाणमाह । अथगुरुसितयोरिति । गुरुसितयोर्गुरुशुक्रयोर्बाल्यवार्द्धक्येबालत्ववृ-द्धत्वे नगाहे सप्ताहे सप्ताहंबाल्यंसप्ताहंवार्द्धक्यमिति । बालत्ववृद्धत्वं बहुविधमस्तितत्रस-र्वप्रमःपक्षोत्रांगीकृतः । अथशाखेशस्यअस्तेवर्ज्यमाह॥ अथोशाखेशमौढ्यइति । शाखे-शोवेदपतिर्वक्ष्यमाणः तस्यमौढ्येअस्तेव्रतं मौंजीबंधनंनिगमारंभमपिआर्यः श्रेष्ठोनकुर्या-त् । तस्यास्तेव्रतादिकृतेसति बटोर्मूर्खत्वंस्यात् । ननुवेदारंभेमूर्खत्वंघटतेवेदपतित्वात् व्र-तेमूर्खत्वंकिमुक्तम् । उच्यते-व्रतबंधस्तुवेदाध्ययनार्थंक्रियते । तस्मात्तत्रापिमूर्खत्वंघटते । तथाचयाज्ञवल्क्यः"उपनीयगुरुःशिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौ-चाचारांश्चशिक्षयेत्॥ प्रतिवेदंब्रह्मचर्यं द्वादशाब्दानिपंचवा । ग्रहणांतिकमित्येके केशां-तश्चैवषोडशे" इति ॥ "यज्ञानांतपसांचैव शुभानांचैवकर्मणाम् । वेदएवद्विजातीनां निःश्रेयसकरःपरः"॥तथा कात्यानगृह्यसूत्रे "वेदंसमाप्यस्नायाद्ब्रह्मचर्यंवाष्टाचत्वारिंश-कं द्वादशकेप्येकेगुरुणानुज्ञातः" इत्यादि ॥ ७ ॥

**अब जिन संस्कारोंमें गुरुशुक्रके अस्तादिकदोष नहींहैं और जिनोंमें हैं सो और बालत्ववृद्धत्वका प्रमाण और शाखेशके मौढ्यमें क्या नहीं करणा सो कहतेहैं ॥**

भा०-गर्भाधानसे अन्नप्राशनतक गुरु शुक्रके बाल्य वृद्धत्व अस्तका त्याग नहीं करना काल निरोधसे । और सिंहके गुरुको दक्षिणायनको अधिमास क्षयमासकोभी त्याग नहीं करनो । और ये गुरुशुक्रास्तादिकोंको चौलादिकमें त्याग करना । गुरुशुक्रका बाल्यत्व वृद्धत्व सात ७ दिनतक होता है । और शाखापति अस्त होय तो यज्ञोपवीत नहीं करना । और वेदारंभ भी नहीं करनो ॥ ७ ॥

**चौलंमाघादिपंचस्वमधुषुगदितंद्वित्रिपंचोन्मितेऽब्देस्वाचाराद्वा सगर्भायदिभवतिजनन्यत्रनोकार्यमेतत्॥ साकंयत्रोपनीत्याक्रि-यतइहतदायन्निरोधोनहिस्याज्जह्यादंबार्तवेदोव्रतमुपयमनंचावि-शुद्धेःशुभार्थी ॥ ८ ॥**

अथ चौलंसनिर्णयंवृत्तेकेनाह ।चौलमिति । कार्यवर्णैरित्यग्रिमश्लोकेनान्वयः।चूडा-करणं माघादिपंचसुमासेषु अमधुषुचैत्ररहितेषुगदितमुक्तम् । तथाचोक्तंनारदेन "मा-घादिपंचकेचौलं हित्वाक्षीणविधुंमधुम्" इति । द्वित्रिपंचोन्मितेब्दे द्वितीयेतृतीयेपंचमे वर्षेस्वाचाराद्वा स्वकुलाचारतोवा।उक्तंचकात्यायनगृह्ये "सांवत्सरिकस्यचूडाकरणंतृ-तीयेवाप्रतिहतेषोडशवर्षस्यकेशांतोयथामंगलंवासर्वेषाम्" इति । सांवत्सरिकस्यअति-क्रांताब्दस्येति हरिहरमिश्रैर्व्याख्यानंकृतम् । तथाचसद्गुरुशिष्यः "आद्येऽब्देकुर्वतेके-चित्पंचमेन्येद्वितीयके । उपनीत्यासहैवेति विकल्पःकुलधर्मत" इति । सगर्भायदिभ-

वतिजनन्यत्रनोकार्यमेतत् । अत्रउक्तवर्षेशुद्धित्रिपंचाब्दकेषुजननीकुमारस्यमातायदिस- गर्भाभवतिस्यात्तदा एतच्चौलंनोकार्यम् पंचमाब्दादूर्ध्वंगर्भिण्यांसत्यामपिकार्यमित्यर्थ- सिद्धम् ॥ अत्रनारदः "सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् । पंचाब्दात्प्रागथोर्ध्वं तुगर्भिण्यामपिकारयेत् ॥" उपनयनेनसहक्रियमाणेनदोषइत्याह । "साकंयत्रोपनी- त्याक्रियतइतदायन्निरोधोनहिस्यात् " इति । यत्रउपनीत्यासाकमुपनयनेनसहक्रियते तदाइहास्मिन्चौले अयमुक्तोनिरोधश्चैत्रमासमातृगर्भलक्षणोनह्येवस्यात् । तदुक्तं तेनैव "सहोपनीत्याकुर्याच्चेत्तदादोषोनविद्यते" इति । अंबार्तवेनिषेधमाह "जह्यादंबार्तवेऽदो व्रतमुपयमनंचाविशुद्धेःशुभार्थीति ।" अंबार्तवेमातृरजसि अदः अनंतरोक्तं चौलमित्यर्थः व्रतंमौंजी उपयमनंविवाहः आविशुद्धेः शुद्धिपर्यंतं शुभार्थीनरःएतत्रयंजह्यात् नकुर्यादि- त्यर्थः । तथाच मनुस्मृतौ "उद्वाहव्रतचूडासुमातायदिरजस्वला । तदानमंगलंकार्यं शुद्धौकार्यंशुभेप्सुभिः" अन्यमुहूर्तालाभेकारिकानिबंधेशांतिकमुक्तम् "अलाभेसुमुहूर्तस्य रजोदोषेतुसंस्थिते । श्रियंसंपूज्यतत्कुर्याद्दृष्ट्वात्यामयंकरी ॥ हैमींमाषमितांपद्मांश्री- सूक्तविधिनार्चयेत् । ऋत्यूचंपायसंहुत्वाऽभिषिच्यशुभमाचरेत् ॥ सूतिकोदक्ययोः शुद्धौगांदद्याद्धेमपूर्वकम् । मासेकर्मणिशुद्धिःस्यादितरास्मिन्नशुद्ध्यति" इति । उदक्या रजस्वला ॥ ८ ॥

## अब चौलका मुहूर्त कहतेहैं ॥

भा०-माघ-फाल्गुन-वैशाख-ज्येष्ठ इन्हों मासोंमें चौल करना शुभ है । और २ । ३ । ५ इन्हों वर्षोंमें करना शुभ है । अथवा कुलाचारसे करना । और माता गर्भिणी होय तो नहीं करना । और पांचवर्ष५ ऊपरसे माता गर्भिणी होय तो बी करना । और व्रतबंधके साथ करै तो चैत्रमास और माता गर्भिणी होय तो बी करना-और माता रजस्वला होय तो चौल व्रतबंध विवाह नहीं करना शुद्धिके बाद करनो ॥ ८ ॥

**कार्यंवर्णैरिनारार्किशनिषुनिखिलैर्ज्ञत्रयेशुक्लसोमेद्व्यंत्यद्व्यादि- त्यशार्केंदुभिरिनहरितास्त्रित्रिभैश्चौलकर्म ॥ द्यूनेर्कारार्किशुक्राग- तकविनिखिलामृत्युगामृत्युदाःस्युर्व्यब्जाः संतोंत्यइष्टास्त्यज गुरुशशिनौरात्रिसंध्येचारिक्ताः ॥ ९ ॥**

अथवर्णविशेषेणवारविशेषंतथानक्षत्राणिलग्नबलंचवृत्तेनाह । कार्यमिति । वर्णैर्ब्रा- ह्मणादिभिः यथाक्रमेण इनारार्किशनिषुचौलकर्मकार्यमित्यन्वयः । इनः सूर्यः आरो भौमः आर्किःशनिः शनिःप्रसिद्धः तेष्वित्यर्थः । एतदुक्तंभवति। विप्रेणरविवारे क्षत्रि- येणभौमवारे वैश्येनशनिवारे शूद्रेणापिशनिवारे चौलंकर्तव्यमित्यर्थः । शूद्रस्यद्वादश- संस्काराउक्ताः । "वेदोव्रतोपनयनंमहानाम्नीमहाव्रतम् । विनाद्वादशशूद्राणांसंस्कारा- णाममंत्रतः" इति । निखिलैश्चतुर्भिर्वर्णैरविशेषेण ज्ञत्रयेबुधत्रये शुक्लपक्षगतसोमवारे कार्यम् । कृष्णपक्षेसोमवारोतिनिंदितः क्षीणत्वात् । अत्रनारदः "अपर्वरिक्तातिथिषु

शुक्रेज्यशेंदुवासरे'' इति । बृहस्पतिः "सोमवारःसितेपक्षे कृष्णपक्षेतिगर्हितः । बुधवारःशुभःप्रोक्तः पापग्रहयुतेबुधे ॥ पापग्रहाणांवारादौविप्राणांशुभदोरविः । क्षत्रियाणांक्ष्मासूनुर्विट्शूद्राणांशनिःशुभः'' इति । कैः॰ध्रुवंत्यद्यादित्यशार्केंदुभिः अंत्याद्वेइवि॰ध्रुवंत्यंरेवत्यश्विन्यौ आदित्यंपुनर्वसुपुष्यौ शाक्रंज्येष्ठा इंदुर्मृगः तैः पुनःकैः इनहरितत्त्रि-त्रिभिः इनोहस्तः हरिःश्रवणःताभ्यांत्रित्रिभिः हस्तात्रिभिः श्रवणात्रिभिरित्यर्थः। तथाचनारदः "दस्रादितीज्यचंद्रेंद्रपूषभानिशुभान्यतः । चौलकर्मणिहस्तर्क्षात्रीणित्रीणिचविष्णुभात्'' इति । द्यूनेर्कारार्किशुक्राः अत्रचौलेमृत्युदाःस्युः द्यूनेसप्तमेअर्कारार्कि-शुक्राः अर्कःसूर्यः आरो भौमः अर्कस्यापत्यमार्किःशनिः शुक्रःप्रसिद्धः एतेचत्वारोमृत्युदाइति । चतुर्णांसमानंफलमुक्तम् । वसिष्ठेनात्रविशेषफलमुक्तम् "जामित्रेभास्करे शौरेमृत्युः स्याद्भूमिजेतथा । शुक्रेसौख्यविनाशःस्यान्मंदभाग्यंशनैश्चरे''इति । अत्रचतुर्णामपिसामान्येनमृत्युफलमुक्तम्। तदारिद्र्यान्मरणंवरमितिन्यायेननदोषः ।गतकविनिखिलामृत्युगामृत्युदाः स्युः गतःकविःशुक्रःयेभ्यस्तेगतकवयःतेचतेनिखिलाश्चशुक्ररहिताः सर्वेमृत्युगाःअष्टमगामृत्युदाः । अत्रबृहस्पतिः " अष्टमस्थानगाःसर्वेनेष्टाः शुक्रविवर्जिताः । शुक्रस्तुनिधनेक्षौरेसर्वसंपत्प्रदःशिशोः'' इति । व्यब्जाःसंतोत्यइष्टाः विगतःअब्जः चंद्रोयेभ्यस्तेव्यब्जाः एवंविधाः संतोसद्ग्रहाः चन्द्ररहिताः सद्ग्रहाः अंत्येद्वादशे इष्टाःशोभनाः स्युः । तथाचनारदः "चौलान्नप्राशनेशस्ताःसौम्यारंध्रव्ययोपगाः'' इति । अन्यत्र"ननैधनेभेशीतांशौषष्ठाष्टांत्यविवर्जिते'' इति । तस्यैववचनम् । अन्यद्बलंपूर्ववत् । त्यजगुहशशिनौरात्रिसंध्येचरिक्ताः ।गुहः षष्ठी शशी पौर्णिमा । स्पष्टमन्यत् । "क्रूरवारंनिशांरिक्तांषष्ठींसंध्यांचजन्मभम् । सद्भिर्विवर्जयेदेतन्नारदस्य वचोयथा'' इति ॥ ९ ॥

भा०-ब्राह्मण सूर्य वारको और क्षत्रिय भौमको और वैश्य शूद्र शनिवारको चौल करैं तो शुभ होय । और ब्राह्मणादि संपूर्णवर्ण बुध गुरु भृगुवारोंमें तथा शुक्लपक्षमें सोमवारके दिनमें चौल करैं तो शुभ होय । और रेवती--अश्विनी--पुनर्वसु--पुष्य--ज्येष्ठा--मृग--हस्त चित्रा--स्वाती--श्रवण--धनिष्ठा--शतभिषा--ये नक्षत्र शुभ हैं--(अथ लग्नशुद्धिः ) और सातमें शुक्र शनि सूर्य भौम होंय तो मृत्यु करैं--और शुक्र विना सारे ग्रह ८ आठमें मृत्युदायक हैं। और चंद्र विना शुभग्रह बारमें १२ श्रेष्ठ है॥ और ६ । १५ । ४ ।९ । १४ ये तिथी और रात्रिसंध्या अशुभ है ॥ ९ ॥

**भुक्ताभ्यक्तोपवासीश्वरजनयुवतीप्राग्वयस्काश्वयोगीयात्रायुद्धोन्मुखायेकृतदिनविधयोस्त्यंबकास्तेनमुंड्याः ॥ सीमंतोर्ध्वंन पत्युर्नखकचलवनंदूरदेशप्रयाणंवृक्षच्छेदःसमुद्राप्लुतिमृतहरणे स्याद्धतेवश्यकार्यात् ॥ १० ॥**

**क्षौरंचौलोक्तभादौगदितमथरविक्षेत्रगंगाध्वरागन्याधानेपित्रोर्विनाशेद्विजनृपकथनेसर्वदाक्षौरमिष्टम् ॥**

**मित्रत्र्यर्कादितीन्द्रांतिमहरितुरगैः पंचमेऽब्देव्रतात्प्राग्विद्यारंभोक्त-
कालेऽक्षरविधिरघटेसौम्यसंज्ञेऽयनेऽर्के ॥ ११ ॥**

अथप्रसंगात् क्षौरनिर्णयंसार्द्धवृत्तेनाह । भुक्तइति । भुक्तःकृतभोजनःअभ्यक्तःकृता-भ्यंगः उपवासीप्रसिद्धः ईश्वरजनोराजसेवकः समर्थोवा युवतिःस्त्रीसौभाग्यवती प्राग्वय-स्काः प्रथमवयस्काः पंचाशद्वर्षपर्यंतंपूर्ववयः योगी राजयोगीगीतादौप्रसिद्धः यात्रायु-द्धोन्मुखाः यात्राप्रयाणं युद्धंप्रसिद्धंतौप्रतियेउन्मुखाःप्रचलिताः यात्रोन्मुखायुद्धोन्मु-खाश्चेत्यर्थः । कृतःदिनविधिःआह्निकंयैस्तेकृतदिनविधयः अस्त्यंबकोजीवत्पितृकः ते न मुंड्याः मुंडनार्हा न भवंति । अवश्यकार्याहृते इत्युत्तरार्द्धोक्तमत्रानुसंधेयम् यत्रावश्य-मुंडनकारणंभवति तत्रावश्यंमुंड्याः । अथक्षौरनिषेधप्रसंगाद्गुर्विणीपतेर्निषिद्धं साप-वादमाह । सीमंतोर्ध्वमिति । सीमंतोर्ध्वं सीमंतोन्नयनादूर्ध्वं पत्युःकृतसीमंतसंस्का-रायाःपत्युः भर्तुरवश्यकार्याहृतेनखकचलवनादिकंनस्यात् । नखकचलवनंनखकेशच्छे-दनम् । अन्यत्सुगमम् । आवश्यकार्याहृतेनस्यादित्यनेनआवश्यके नदोषइत्यर्थात्सि-द्धम् । यथापितृमरणेक्षौरादिदेशविप्लवेदेशांतरगमनमित्यादिविचारणया आवश्यके न दोषइत्यर्थः । कृताग्न्याधानस्यमुंडनपक्षांगीकारेमुंडनमावश्यकं "मासिमास्युपासनी-कस्यपक्षेपक्षेऽग्निहोत्रिण" इति ॥ १० ॥ अथोक्तेभ्योन्येषांक्षौरार्थंनक्षत्रादिकमाह । क्षौरमिति । चौलोक्तभादौक्षौरंगदितंप्रोक्तम्। चौलार्थमुक्तश्चौलोक्तःसचासौभादिश्चत-स्मिन्नक्षत्रतिथ्यादिकाले क्षौरंगदितंप्रोक्तम् । अथक्षौरनिमित्तान्याह। रविक्षेत्रगंगाध्वरा-ग्न्याधानेपित्रोर्विनाशइत्यादि रविक्षेत्रंभास्करक्षेत्रं गंगाप्रसिद्धा अध्वरोयागः अग्न्या-धानमग्निहोत्रंतस्मिन्पित्रोर्विनाशोमरणंतस्मिन् द्विजनृपकथनेब्राह्मणाज्ञायांराजाज्ञायां चसत्यांसर्वदाक्षौरमिष्टंस्यात् । क्षौरेनक्षत्रादिनियमोनास्तीत्यर्थः । तदुक्तंवृत्तशते "भुक्ताभ्यक्तनिरासनैः" इत्यादि । रत्नमालायाम् "आज्ञायानरपतेर्द्विजन्मनाम्" इत्यादि । बृहस्पतिः "राजकार्येनियुक्तानांनराणांभूपसेविनाम् । श्मश्रुलोमनखच्छेदे नास्तिकालविशोधनम्" ॥ ज्योतिर्निबंधे "राजायोगीपुरंध्रीचमातापित्रोश्चजीविनोः । मुंडनंसर्वतीर्थेषुनकुर्याद्गुर्विणीपतिः" ॥ स्मृत्यंतरे "सिंधुस्नानंद्रुमच्छेदं वपनंप्रेतवाह-नम् । विदेशगमनंचैव नकुर्याद्गुर्विणीपतिः ॥ क्षौरंनैमित्तिकंकुर्यान्निषेधेसत्यपिध्रुवम् ॥ पित्रोःप्रेतविधानंच न दोषस्तत्रविद्यते ॥ गंगायांभास्करक्षेत्रे मातापित्रोर्मृतेहनि । आधानेसोमपानेच षट्सु क्षौरंविधीयते ॥ अंतर्वत्न्यांतुजायायां तीर्थेक्षौरंनकारयेत् । प्रेतवाहादिकंनैव सीमंतोन्नयनादनु ॥ पंचाशद्वायनात्पूर्वं क्षौरंनैमित्तिकंविना । नकुर्यात्ततऊर्ध्वंतुस्वेच्छयावपनं चरेत्" इति । अथाक्षरारंभंवृत्तार्द्धेनाह । मित्रत्र्यर्केति। मित्रादिभिर्नक्षत्रैःजन्मतःपंचमेवर्षे व्रतात्व्रतबंधात् प्राक् प्रथमंविद्यारंभोक्तकालेवक्ष्य-माणलक्षणेअक्षरविधिः शुभः स्यादित्यभ्याहारः । कस्मिन्सति सौम्यसंज्ञेअयनेअर्के

सति कथंभूतेसौम्यसंज्ञेअयने अघटे नविद्यतेघटोयस्मिन्तथातस्मिन् कुंभरहितउत्तरायणे इत्यर्थः । अन्नतुल्ये अयनलक्षणं "कर्किमृगादिषट्केतेचायनेदक्षिणसौम्यायनेस्त" इति । मित्रमनुराधा त्र्यर्कहस्तत्रयम् अदितिःपुनर्वसुः इंद्रोज्येष्ठा अंतिमंरेवती हरिःश्रवणः तुरगोऽश्विनी । शेषं प्रथममेवव्याख्यातम् । व्रतात्प्रागित्यनेनव्रतबन्धादूर्ध्वनिषेधोर्थसिद्धः । पंचमेवर्षेपठनरुच्याव्रतबंधोप्येवक्ष्यति । तथाचोक्तंबृहस्पतिना "द्वितीयजन्मतः पूर्वमारभेताक्षरान्सुधीः" इति । नृसिंहः "अक्षरस्वीकृतिःप्रोक्ता प्राप्तेपंचमहायने । उत्तरायणगेसूर्येकुंभमासंविवर्जयेत्" इति ॥ ११ ॥

## अब क्षौरका मुहूर्त कहते हैं ॥

भा०-भोजन करके-तैल लगाके-उपवासकरके और राजसेवक-सौभाग्यवती स्त्री पचास वर्षके भीतरके-राजयोगी-यात्राजाणेवाला-युद्धमें जाणेवाला-और नित्यकर्म करके-जिसका पिता विद्यमान होय वह-इतना जिणा अवश्य कार्य विना मुण्डन नहीं होवे-और गर्भिणीपति सीमंत होणेरेबाद नखकेश कटावे नहीं-और वृक्षको नहीं काटे और दूर देशमें जावे नहीं और समुद्रमें स्नान नहीं करै-और प्रेतानुगम नहीं करै ॥ १० ॥

भा०-चौलमें कहेभये नक्षत्रोंमें क्षौर करावणो ॥ और भास्करक्षेत्रमें गंगापर यज्ञमें अग्निहोत्रमें मातापिताकी मृत्यु होनेपर ब्राह्मणकी वा राजाकी आज्ञासे सदैव क्षौर करावणो ॥

## अब बालकको अक्षर मांडावणेका मुहूर्त कहते हैं ।

भा०-अनुराधा-हस्त-चित्रा-स्वाती पुनर्वसु-ज्येष्ठा-रेवती-श्रवण-अश्विनी ये नक्षत्र लेना व्रतबंधसे पूर्व पांचमें वर्षमें विद्यारंभके मुहूर्तमें अक्षरारंभ कराणा श्रेष्ठ है-और कुंभसंक्रांति विना उत्तरायणमें कराणा ॥ ११ ॥

**विप्रादेर्गर्भतोऽब्देऽष्टशिवरविमितेजन्मतोवाव्रतंस्यादत्रानिष्टेपि जीवेऽनिमिषरविमधौकार्यमब्दस्यदार्ढ्यात् ॥ स्वाब्दादूर्ध्वक्रमादाद्विगुणितशरदोनिंद्यमब्दक्रमेण पंचाष्टांकाब्दतोवाप्रपठनरुचितःशस्तमेषांतदाहुः ॥ १२ ॥**

अ०-ब्रह्मक्षत्रविशांमुख्यंगौणंचव्रतबंधकालंवृत्तेनैकेनाह । विप्रादेरिति । गर्भतःगर्भाधानाज्जन्मतोवा अष्टशिवरविमितेअब्देविप्रादेर्व्रतंस्यात् । विप्रस्याष्टमे क्षत्रियस्यशिवमिते एकादशेवर्षेस्यात् वैश्यस्यरविमितेद्वादशेवर्षेस्यात् । अत्रस्वस्ववर्षे जीवेगुरौअनिष्टेअशुभेसत्यपिव्रतंकार्यम् । क्वअनिमिषरविमधौ अनिमिषेरविः अनिमिषरविः अनिमिषरविणाविशिष्टोमधुःअनिमिषरविमधुःतस्मिन्मीनस्थेरवौसति चैत्रेव्रतंकर्तव्यमित्यर्थः । अब्दस्यदार्ढ्यात्वर्षबलात्।तदुक्तंसंग्रहे "शुद्धिर्नविद्यतेयस्य वर्षेप्राप्तेऽष्टमेयदि।चैत्रेमीनगतेभानौतस्योपनयनंशुभम् ॥जन्मभादष्टगेसिंहे नीचेवाशत्रुभेगुरौ।मौंजीबंधःशुभःप्रोक्तश्चैत्रेमीनगतेरवौ॥अशुभेऽब्देग्रहाःसर्वे शुभगोचरगाअपि॥शांतिभावाच्छुभंनैव यात्यब्दः

कालमृत्युवत्'' इति। अथगौणकालफलमाह । स्वाब्दादूर्ध्वक्रमादिति । स्वाब्दात्स्ववर्षादूर्ध्वक्रमात् आद्विगुणितशरदः द्विगुणिताचासौशरच्चद्विगुणितशरद्वर्षतांमर्यादीकृत्येति तथातस्याःअब्दक्रमेणनिंद्यम् । तद्यथाब्राह्मणस्याष्टमंवर्षमुख्यं तद्विगुणितंषोडशम् अष्टवर्षान्षोडशवर्षपर्यंतंब्राह्मणस्य एकादशवर्षाद्द्वाविंशतिवर्षपर्यंतंक्षत्रियस्य द्वादशवर्षाच्चतुर्विंशतिवर्षपर्यंतंवैश्यस्य । अब्दक्रमेणोत्तरोत्तरंनिंद्यम् ।अर्थादतऊर्ध्वमनाधिकारिणोभवंति। तदुक्तंसंग्रहे '' नृपा १६ कृति २२ जिना २४ ब्दांतं नातिकालस्ततःपरम् । पातित्यंस्यादग्रजादेर्व्रात्यस्तोमोविशोधनम्'' इति । तथाचकात्यायनगृह्ये ''आषोडशाद्ब्राह्मणस्यानतीतःकालआद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यातऊर्ध्वंपतितसावित्रीका भवंति । नैनानुपनयेयुर्नाध्यापयेयुर्नयाजयेयुर्नचैभिर्व्यवहरेयुः कालातिक्रमेनियतवत् त्रिपुरुषंपतितसावित्रीकाणामपत्यसंस्कारोनाध्यापनंतेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वाकाममधीयीरन्व्यवहार्याभवंति'' इति । वचनादिति अथस्वाब्दात्प्रागपिअध्ययनौत्सुक्याद्युपनयनकालमाह । पंचाष्टांकाब्दतोवेति । पंचमाष्टमनवमवर्षेभ्यःसकाशादेषांब्रह्मक्षत्रविशांक्रमेणप्रपठनरुचितः वेदादिपठनरुच्यातद्व्रतंशस्तमाहुर्मुनयः। उक्तंचसंग्रहे ''ब्रह्मवर्चसमूर्जश्चविद्यायुःश्रीर्यशःसुखम् । विप्रादेरुपनीतस्यपंचाष्टांकाब्दतःफलम्'' ॥ १२ ॥

अथ व्रतबंधका मुहूर्त कहते हैं ।

भा०--ब्राह्मण क्षत्रिय वैश्योंके जन्मसे वा गर्भसे क्रमसे ८ । ११ । १२ । वर्षमें उपवीत होवे--और उक्त समयमें गुरु अनिष्ट होय तो बी शुभ है--और मीनका सूर्य चैत्रमें होय तो व्रतबंध शुभ है--इन वर्षोंसे जो दुगुणा काल निकले तो गौण है--और बालकके पठनकी रुचि होय तो ब्राह्मणादि क्रमसे पांचमें आठमें नवम वर्षमें उपवीत शुभ है ॥ १२ ॥

**राशेःषट्त्र्याद्यखस्थोगुरुरिहशुभदः पूजयास्यात्तयापिप्रांत्योंबुस्थोऽष्टमोनोयदिनिजगृहगस्तुंगगोवापिशस्तः ॥एवंकन्यर्क्षतःस्याददतितरगुणिनोलब्धयेवातिकालेऽनिष्टोपीहद्विरर्च्योष्टमभवनगतःशोभनःस्यान्निरर्च्यः ॥ १३ ॥**

अथात्रगुरुबलाबलंवृत्तेनाह । राशेरिति । राशेःजन्मराशेः सकाशात् षट्त्र्याद्यखस्थोगुरुः इहास्मिन्व्रतबंधेपूजयाशुभदःस्यात् । षट्षष्ठं त्रितृतीयम् आद्यंजन्मराशिः खंदशमम् एषुतिष्ठतीतितथा तयापिपूजयापि प्रांत्योद्वादशः अंबुचतुर्थः अष्टमःनशुभदः स्यात् पूजयापिअशुभदःस्यादित्यर्थः । स यदिनिजगृहगः स्वगृहगः धनुर्मीनगइत्यर्थः । तुंगगोवायदिभवति । तदाइहदुष्टस्थानेषुवर्तमानःशस्तःस्यात् अस्यतुंगंकर्कटः । तदुक्तंबृहज्जातके ''अजवृषभमृगांगनाकुलीरांझषवणिजौचदिवाकरादितुंगाः । दश १० शिखि ३ मनुयुक् २८ तिथीं १५ द्रियांशै ५ स्त्रिनवक २७ विंशतिभिः २० श्चतेस्तनीचाः''इति। अर्थादुक्तस्थानेभ्योन्यस्थानगःशुभदः स्यात् एवंकन्यर्क्षतःस्यात् कन्यर्क्ष-

तः कन्याराशेःसकाशात् एवमुक्तवत् शुभाशुभःस्यात्। अतितरगुणिनोवरस्यलब्धयेअ-तिकालेवाअनिष्टोपिगुरुर्द्वादशचतुर्थाष्टमःद्विरर्च्यः षट्त्र्याद्यवस्थस्यशास्त्रेयापूजोक्तात-त्प्रमाणतोद्विरर्च्यः तेनद्विगुणार्चनेनशोभनःस्यात् एवंसामान्येनोक्त्वाअष्टमस्यविशेषमा-ह । अष्टमभवनगतःत्रिरर्च्यः तेनशोभनःस्यात् । अत्रबृहस्पतिः " झषचापकुलीरस्थो जीवोप्यशुभगोचरः। अतिशोभनतांदद्याद्विवाहोपनयादिषु ॥ व्रतेजन्मत्रिखारिस्थो जी-वोपीष्टोर्चनात्सकृत् । शुभोतिकालेतुर्याष्टव्ययस्थोद्विगुणार्चनात्" ॥ उद्वाहतत्त्वे "कन्य-र्क्षाद्विसुतद्युनायनवमेश्रेष्ठोगुरुश्चान्यथापूज्योष्टांत्यसुखेतिकालइहतुप्राज्ञैर्द्विरर्च्यःशुभः । रिष्फांबत्रिधनाभ्रगैर्यदिग्रहैः श्रेष्ठोपिविद्धोव्यसन्वामाद्विदइहेष्टदोननिधनेवेधात्त्रिरर्च्यः-शुभः" इति ॥ १३ ॥

अब गुरुका बल कहते हैं ।

भा०-जन्मराशिसे ३ । ६ । १ । १० । इन्हीं स्थानोंमें गुरु होय तो पूजासे शुभ है और १२ । ४ । ८ । इन्हीं स्थानोंमें होय तो पूजासेवी शुभ नही होय ॥ और ४ । ८ । १२ इन्हीं स्थानोंमें गुरु जो धनका वा मीनका वा कर्कका होके होय तो शुभ होता है--ऐसे कन्याकी राशिसेवी देखणा- और वरप्राप्तिके लिये वा अवस्था निकलजानेके बाद ४ । ८ । १२ इन्हीं स्थानोंमें वा द्विगुणपूजासे अच्छा होता है और आठमें ८ होय तो त्रिगुणितपूजासे शुभ होता है ॥ १३ ॥

द्वीष्वायागांकसंस्थोव्ययजलनिधनत्र्यभ्रगैश्चेन्नविद्धः शस्तोनि-ष्टोपिवामंशुभइहखचरैर्वेधितोनोऽष्टमस्थः ॥ शुक्रेमाघादिपंच-स्विनशुभदिवसेप्राग्दलेह्नोव्रतंसत्त्यक्त्वानध्यायरिक्तातिथिमुनि-मदनांश्चंद्रभागंप्रदोषम् ॥ १४ ॥

अथगुरोर्वामवेधमाह । द्वीष्विति । द्वीष्वायागांकसंस्थोगुरुस्तदाशुभःस्यात् तदाक-दायदिव्ययजलनिधनत्र्यभ्रगैःखचरैर्नोविद्धः स्यात् द्विर्द्वितीयम् इषुपंचमम् आयएकाद-शम् अगाःसप्तमम् अंकःनवमम् एतत्संस्थोगुरुः व्ययंद्वादशं जलंचतुर्थं निधनमष्टमं त्रिस्तृतीयम् अभ्रंदशमम् एतत्संस्थैः खचरैः यदिनोविद्धोभवति तदाशुभःस्यात् । २ । ५ । ११ ।७। ९ स्थः । १२ । ४ । ८ ।३।१० स्थैश्च वेधितश्चेदशुभइत्यर्थः । अनिष्टो-पिव्ययजलनिधनत्र्यभ्रगोपिवामंविद्धः सन्द्वीष्वायागांकसंस्थैः खचरैर्वेधितः सन्नित्यर्थः इह अस्मिन्व्रतबंधेविवाहेवाशुभः नोष्टमस्थः अष्टमस्थो वेधितोनशुभदःस्यादित्यर्थः । सोतिकालादौत्रिगुणार्चनेनैवशुभः स्यात । तथाचबृहस्पतिः । " रजस्वलायदाकन्या गुरुशुद्धिंनचिंतयेत् । अष्टमेपिप्रकर्तव्योविवाहस्त्रिगुणार्चनात्" ॥ अथोपनयनेमासादि-कमाह । शुक्रइति । शुक्रेशुक्लपक्षेमाघादिपंचमासेषु ज्येष्ठांत्येषु इनशुभदिवसे इनः सूर्यःशुभाःवर्धमानेंदुगुरुबुधशुक्राःएषांदिवसे तस्मिन् अह्नःप्राग्दले दिवसस्यपूर्वार्द्धे

व्रतमुपनयनंसत्शुभंस्यात् । किंकृत्वा अनध्यायरिक्तातिथिमुनिमदनान् चंद्रभागंप्रदो- षंत्यक्त्वा अनध्यायाःवक्ष्यमाणाः रिक्तातिथयश्चतुर्थीनवमीचतुर्दश्यः मुनिःसप्तमी मद- नस्त्रयोदशी एतान्चंद्रभागःकर्कांशःपापांशादिकंपुरैवनिषेधितम् प्रदोषोऽनध्यायप्रकर- णोक्तःतंत्यक्त्वा ॥ १४ ॥

## अब गुरुका वामवेध कहतेहैं ।

भा०-यदि जो गुरु २ । ५ । ११ । ७ । ९ इन्हीं स्थानोंमें होय तो शुभ होता है परंतु १२ । ४ । ८ । ३ । १० इन्हीं स्थानोंमें रहनेवाले ग्रहसे विद्ध नही होय तो शुभ होय अर्थात् द्वादशादि स्थानोंमें कोई ग्रह नहीं होय तो द्वितीयादि स्थानोंमें शुभ होय-और १२ । ४ । ८ । ३ । १० इन्हीं स्थानोंमें गुरु अनिष्ट होके २ । ५ । ११ । ७ । ९ इन्हीं स्थानोंमें बैठनेवालेसे विद्ध होय तो वामवेध होताहै यह वामवेध शुभ है ॥ और जो गुरु आठमें होय तो वामवेधसे शुभ नहीं होताहै यह वामवेध व्रतबंधमें और विवाहमें देखना चाहिये और उपनयनको शुक्ल पक्षमें करना और माघसे पांच महीनोंमें व्रतबंध करणे-और सूर्य गुरु बुध शुक्र पूर्णचंद्रका वार लेना-और पूर्वाह्न लेना-और वक्ष्यमाण अनध्याय-और रिक्तातिथि ४ । ९ । १४ और कर्कका नवांश और प्रदोष इन्होंका व्रतबंधमें त्याग करना ॥ १४ ॥

शस्तोद्रीशाग्निशाक्रांतकपितृरहितैः सर्वभैर्मौंजिबंधोवेदेशैज्ञब- लाढ्येगुरुसितकुजवित्संज्ञकावेदपाःस्युः ॥ स्वर्क्षोच्चांशेषुसौम्याः श्रुतिपतिरपिचेत्केंद्रकोणस्थिताःस्युर्वर्णीवेदार्थवेत्तापशुगृहधन- वानत्रमंदेंत्यसेवी ॥ १५ ॥

अथव्रतबंधेनक्षत्राण्याह । स्पष्टम् ।उक्तंच "मघाचभरणीज्येष्ठाविशाखाचैवकृत्तिका । नक्षत्रपंचकंप्राज्ञैर्नग्राह्यंव्रतबंधने" । वेदेशेवेदपतौज्ञेबुधेबलाढ्येसति स्थानादिनाबल- समृद्धेसति । तेकेवेदेशाइत्यपेक्षायामाह। गुरुसितकुजवित्संज्ञकाः क्रमात्वेदपाःवेदाधि- पतयःस्युः । गुरुः ऋग्वेदस्य शुक्रोयजुर्वेदस्यकुजः सामवेदस्यवित्बुधोऽथर्ववेदस्य पतिरित्यर्थः । लग्नगोचरबलमाह । स्वर्क्षोच्चांशेषुसौम्याइति । सौम्याः स्वोच्चस्वभा- गांशेवर्तमानाः श्रुतिपतिरपिवेदपतिरपि स्वोच्चस्वभांशेवर्तमानश्चेद्यदिकेंद्रकोणेस्थिताः स्युस्तदावर्णीब्रह्मचारीवेदार्थवेत्तास्यात् । नकेवलंवेदार्थवेत्तास्यात् अपितु पशुगृहधन- वान्स्यात । अत्रकेंद्रकोणेशनौमंदेसतिअंत्यसेवीअंत्यजसेवकः स्यात् । तस्मात्केंद्रको- णेशनिर्नभवितव्यः । उक्तंचसंग्रहे "केंद्रस्थितैरिनाद्यैर्नृपसेवीविद्क्रियःश्ववृत्तिश्च । वेदा- भ्यासीयज्वाक्रतुकर्ताहीनसेवकोभवति" इति ॥ १५ ॥

## अब व्रतबंधके उपयोगी नक्षत्रोंको कहतेहैं ।

भा०-विशाखा-कृत्तिका-ज्येष्ठा-भरणी-मघा- इन्हीं नक्षत्रों विना और नक्षत्र शुभ हैं और वेदस्वामी ने बुध बलवान् होय तो श्रेष्ठ है-ऋग्वेदका स्वामी गुरु है-और यजुर्वेदका शुक्र-

और सामवेदका भौम-और अथर्ववेदका बुध है और सौम्यग्रह और वेदपति स्वराशिके वा उच्चके वा स्वनवांशके होके १। ४। ७। १०। ९। ५ इन्हीं स्थानोंमें होवें तो ब्रह्मचारी वेदार्थवक्ता होय और पशुधनवाला होय-और जो केंद्रत्रिकोणमें शनि होय तो ब्रह्मचारी नीच सेवक होय ॥१५॥

चंद्रक्रूराविलग्नेशशिसिततनुपाःषष्ठगेहेसितोंत्येसर्वेरंध्रेवटुघ्नाः क्वचतनुगइनःश्रेष्ठउच्चेंदुरेके॥ विद्यांमौंज्युक्तकालेस्थिरचरहरिज-त्र्युत्तरब्राह्महीनेमौंज्याऊर्ध्वंगणेशंगिरमपिविधिवत्पूजयित्वारभेत॥

अथलग्नभंगानाह। चंद्रइति। चंद्रः क्रूराः क्रूरग्रहाः विलग्नेतनौ शशिसिततनुपाः षष्ठगेहे शशीचंद्रः सितः शुक्रः तनुपोलग्नपः षष्ठगेहे सितः शुक्रः अंत्येद्वादशस्थाने शेषंसुगमम्। सर्वेरंध्रे अष्टमस्थानेएकेमत्येकं वटुघ्नाःवटुमारकाभवंति। किंच क्वचित् अन्यलग्नाभावे तनुगः इनः रविः श्रेष्ठः। उक्तंचमौंजीपटले॥ "शुभदोबलवान्भानुर्लग्नगोदशमस्तथा। सर्वशाखाधिपोयस्मात्सर्वेषांव्रतबंधने ॥ सर्वशाखाधिपोभानुः केचिदूचुर्महर्षयः। तस्मादत्यंतराभावेलग्नस्थोर्कः प्रशस्यते"॥ उच्चेंदुरेकइति। एकेमुनयः उच्चेंदुः उच्च-स्थश्चंद्रः तनुगश्चश्रेष्ठइतिवदंति तद्वाक्यं "चंद्रोदयेभिशस्तः स्यात्क्षयरोगीसितेतरे॥ सितेपक्षेभवेद्यज्वास्वभेतुंगेविशेषतः" इति। अस्यार्थः सितेतरेकृष्णपक्षे चंद्रोदयेचंद्रयु-क्तलग्नेसति व्रतीअभिशस्तः स्यात् क्षयरोगीचस्यात् अभिशस्तोनाममिथ्याभिशस्तः मिथ्याभिशंसी अनेनेदंपातकंकृतमिति यल्लोकामिथ्यावदंतिसोऽभिशस्तः क्षयरोगी स्यादिति कृष्णपक्षेलग्नस्थचंद्रफलमुक्तं सितपक्षेभवेद्यज्वेतिवाक्यंस्पष्टम्। अयंश्लोकः पुनःसंस्कारविषयइवभाति। यतः कृष्णपक्षेव्रतबंधेचंद्रस्यफलमुक्तम् तस्यदिवाअसंभ-वात्। पुनः संस्कारार्हस्यतुकर्मलोपभयाद्रात्रावपिसंस्कारोविहितोनान्यस्य। प्रथमव्रत-बंधस्तुसर्वैर्ग्रंथकारैर्दिवैवपूर्वाह्णेविहितोनरात्रौ। अतः कारणादिदंवचनंपुनःसंस्का-रविषयंप्रतिभाति। पुनःसंस्कारनिमित्तानिरासभारोहणादीनिधर्मशास्त्रप्रसिद्धानि। तादृशंवाक्यंरत्नमालायाम्॥ "त्रिषट्खगोर्कस्त्रिधनास्तकर्मगश्चंद्रस्त्रिषष्ठाः शनिराहु-भौमाः॥ सर्वेचलाभेद्वित्रिकोणकेंद्रगाः शुभाशुभाः स्युर्व्रतबंधकाले" इति। अत्रतृतीयस्यषष्ठस्यसूर्यस्यराशिगतलग्नेसंभवः। नारदेनतु लग्नस्थचंद्रोनिंदितएव तद्वाक्यमेवं "स्वोच्चसंस्थोपिशीतांशुर्व्रतिनोयदिलग्नगः। तंकरोतिशिशुंनिःस्वंसततंक्ष-यरोगिणम्" इति। कन्यालग्नबलंपूर्ववत्। अथविद्यारंभंवृत्तार्द्धेनाह। विद्यांमौंज्युक्त-कालेइति। मौंज्याऊर्ध्वंमौंज्युक्तकालेविद्याप्रारभ्यते मौंज्यर्थमुक्तःमौंज्युक्तः सचासौ कालश्चतस्मिन्विद्यांवेदमारभेत। मौंज्याऊर्ध्वमित्यनेनमौंज्याः प्रागनधिकारः सूचितः। किंकृत्वा गणेशंगिरमपिसरस्वतीमपिविधिवद्विध्युक्तमार्गेणपूजयित्वा। कथंभूतेमौंज्यु-क्तकाले स्थिरचरहरिजत्र्युत्तरब्राह्महीने स्थिरचरहरिजंस्थिरलग्नं चरलग्नं तिसृणामुत्त-

राणांसमाहारस्तुत्तरंब्राह्मंरोहिणी एभिर्हीनैरहिते मौञ्ज्यर्थमेतानिगृहीतानि विद्यारंभे अग्राह्याणीत्यर्थः। "जाड्यंस्थिरेद्व्यंगलग्ने सुविद्यातिश्चरेभ्रमः" इति श्रवणात्॥१६॥

## अथ लग्नभंगाः।

भा०-चंद्र और क्रूर ग्रह लग्नमें होंय-और चंद्र शुक्र लग्नपति ६ छठे होंय-और शुक्र १२ में होय-और आठमें कोई बी ग्रह ब्रह्मचारीको मारक होय-और दूसरा लग्न नहीं होय तो लग्नमें सूर्य कोईके मतमें श्रेष्ठ है-और कोईके मतमें वृषका चंद्र लग्नमें होय तो श्रेष्ठ होय

## अथ विद्यारम्भमुहूर्तम्॥

गणेश सरस्वतीका पूजन करके व्रतबंधके मुहूर्तमें व्रतबंधके पश्चात् विद्यारंभश्रेष्ठ है-और विद्यारंभमें स्थिरचर लग्न और उत्तरा ३ नेष्ट हैं॥१६॥

केशांतंचौलवत्स्यान्नृपमितशरदीत्याहुरार्याव्रतोक्तेकालेमौंजी-विमोक्षंगुरुबलमनयोर्नावलोक्यंसुधीभिः॥ शूद्राणांमौंज्यभा-वात्तदुदिततिथिभेऽनस्तभौमेज्यशुक्रेव्यारेवारेलवेमास्युपयमवि-हितेच्छूरिकाबंधमाहुः॥१७॥

## इति मुहूर्तमार्तण्डेउपनयनसंस्कारप्रकरणम्।

अथकेशांतंमौंजीविमोक्षंचवृत्तार्द्धेनाह। केशांतमिति। तदुक्तंमनुना "केशांतः षोडशेवर्षेब्राह्मणस्यविधीयते। राजन्यबंधोर्द्वाविंशेवैश्यस्यद्व्यधिकेततः" इति। केशांतंकर्म नृपमितशरदि षोडशेवर्षेचौलवत्स्यादित्यार्याआहुः। सर्वंचौलोक्तमत्रग्राह्यमि-त्यर्थः। व्रतोक्तेकालेमौंजीविमोक्षमाहुः। स्पष्टम्। अनयोः केशांतमौंजीविमोक्षयोः गुरुबलंसुधीभिर्नावलोक्यम्। अथशूद्राणांमौंज्यभावाच्छूरिकाबंधंवृत्तार्द्धेनाह। शू-द्राणांमौंज्यभावात्तदुदिततिथिभेमौंज्युक्तनक्षत्रे अनस्तभौमेज्यशुक्रे उदितैःभौमगुरु-शुक्रैः व्यारेवारे आरोभौमः तद्रहितवारे लवेनवांशे यत्र कुत्रापिलग्ने भौमनवांशवर्जि-तइत्यर्थः। उपयमविहितेमासि विवाहोक्तमासे "विवाहोपयमौसमौ" इत्यमरः। आरोभौमइत्यर्थः। छूरिकाबंधंकटिप्रदेशेच्छूरिकाबंधनमाहुः। तथाचसंग्रहे "शूद्राणां राजपुत्राणांमौंज्यभावेऽस्त्रबंधनम्। मौंजीबंधोक्ततिथ्यादौ कार्यंभौमदिनंविना॥" नारदः "छूरिकाबंधनंवक्ष्येनृपाणांप्राकरग्रहात्॥ विवाहोक्तेषुमासेषुशुक्लपक्षेप्यनस्तगे॥ जीवशुक्रेचभूपुत्रेचंद्रताराबलान्विते॥ मौंजीबंधर्क्षतिथिषुकुजवर्जितवासरे॥ तेषांनवां-शकेकर्तुरष्टमोदयवर्जिते। शुद्धेऽष्टमेविधौलग्नषडष्टांत्यविवर्जिते॥ धनत्रिकोणकेंद्रस्थैः शुभैस्त्र्यायारिगैः परैः॥ छूरिकाबंधनंकार्यमर्चयित्वासुरान्पितॄन्॥ अर्चयेच्छूरिकां सम्यग्देवतानांचसन्निधौ॥ ततः सुलग्नेबध्नीयात्कट्यांलक्षणसंयुताम्॥ तस्यास्तुल-क्षणंवक्ष्येयदुक्तंब्रह्मणापुरा॥ संमितंछूरीकायामंविस्तारेणैवताडयेत्॥ भाजितंग-जसंख्यैश्चअंगुलान्परिकल्पयेत्। शेषंचैवफलंवक्ष्येध्वजायेधनवान्भवेत्। धूम्रायेमरणं

सिंहेजयंश्वायेतिरोगिता ॥ धनलाभोवृषेत्यंतदुःखीभवतिगर्दभे ॥ गजाद्येत्यंत संप्रीतिर्ध्वांक्षेवित्तविनाशनम्'' इति । सर्वत्रत्याज्यप्रकरणोक्तंविलोक्यम् । अस्मिन्प्रकरणेकर्णवेधवृत्तंविनासर्वाणिस्रग्धरावृत्तानि ॥ १७ ॥

इति स्वोक्तमुहूर्तमार्तण्डटीकायांमार्तंडवल्लभायांगर्भाधानादिसंस्कारप्रकरणम् ॥

## अब केशांतका और मौंजीत्यागका मुहूर्त कहते हैं ।

भा०–केशांत कर्म सोलमें वर्षमें चौलके मुहूर्तमें करणा–और व्रतबंधके मुहूर्तमें मौंजीका त्याग करणा–और इन्हों दोनोंमें गुरुका बल नहीं देखणा–और भौम गुरु शुक्र इतने ग्रह उदय होंय तो श्रेष्ठ है–और मंगलवार नेष्ट है–और मंगलके नवांशका लग्न नेष्ट है–और शूद्रोंके नहीं होती है इसमें विवाहके मासमें छूरिका बंधन श्रेष्ठ है ॥ १७ ॥

इति मुहूर्तमार्तण्डभाषाटीकायां गर्भाधानादिसंस्काराः ॥

---

## अथ विवाहप्रकरणम् ।

**शुद्धांगोत्रकुलादिभिर्गुणयुतांकांतांवरश्चोद्वहेद्वर्णोवश्यभयोनिखेचरगणाःकूटंचनाडीक्रमात्॥वर्णाद्याबलिनोयथोत्तरमहींदूर्ध्वंगुणैक्यंशुभंवर्णाविप्रमुखाझषादिहवरोवर्णोत्तमःस्याच्छुभः ॥१॥**

अथविवाहप्रकरणंविवक्षुस्तावत्घटितगुणविचारंद्वादशभिर्वृत्तैराह । अतःपरमत्रग्रंथेसर्वाणिशार्दूलविक्रीडितानि । वरः गोत्रकुलादिभिः शुद्धांकांतांकमनीयाकन्यांमुद्वहेत् चकाराद्वरोपिएवंविधोभाव्यः गोत्रशुद्धिर्ग्रंथांतराज्ज्ञातव्या । कुलमपिपंचसप्तनिर्णयमपि एतद्द्वयंग्रंथांतराज्ज्ञात्वाअन्यदत्रावलोकयेत् । अथयथोत्तरंबलिष्ठंघटितक्रममाह । वर्णइति । वर्णः १ वश्यं २ भं ३ योनिः ४ खेचरः ५ गणः ६ कूटं ७ नाडी ८ क्रमाद्यथोत्तरंबलिनः स्युः अहींदूर्ध्वमष्टादशाधिकंगुणैक्यंयथोत्तरंस्याच्छुभम् । तत्रादौवर्णलक्षणमाह । झषात्मीनात्सकाशात् विप्रमुखाः ब्राह्मणाद्योवर्णाः पुनर्गणनयाज्ञेयाः तद्यथा मीनोब्राह्मणः मेषः क्षत्रियः वृषो वैश्यः मिथुनः शूद्रः पुनः कर्कोब्राह्मणः सिंहः क्षत्रिय इत्यादि इहास्मिन्राशिमेलनेवर्णोत्तमोवरः शुभः स्यात नान्यथेत्यर्थात्सिद्धम् ॥ १ ॥

## अब गुणविचार करते हैं ।

भा०–प्रथम तो कन्याका शुद्ध गोत्रकुलादिक देखके गुणयुक्त सुंदर कन्यासे विवाह करणा ऐसेही गोत्रादिक वरकाबी देखणा–और वर्ण १ वश्य २ भ ३ योनि ४ खेचर ५ गण ६ कूट ७ नाडी ८ये क्रमसे एकसे दूजा बलवान् है–जैसे वर्णसे वश्य बलवान् है और वश्यसे भ बलवान है इत्यादिक समझणा ॥ और गुणोंका ऐक्य १८ अठारहसे ऊपर शुभ होय–और मीनसे ब्राह्मणादिक वर्ण गिणना–जैसे मीन १२ ब्राह्मण है–मेष १ क्षत्रिय–वृष २ वैश्य–मिथुन३ शूद्र ऐसे त्रिरावृत्ति करणी–ऐसे पुरुषका उत्तम वर्ण चाहिये हीनवर्णकी कन्या चाहिये ॥ १ ॥

नुर्भक्ष्याजलजावशाविहरयोवश्याविकौर्प्याहरेरस्यालिर्नशुभो-नुरब्जहरयोनेष्टाःस्युरन्यज्जनात् ॥ भेगण्येंकहृतेमिथस्त्र्यगशराः शेषंनसच्चाश्विभादश्वेभाव्यहिभोगिनःश्वृषभुङ्मेषाखुभुग्व्यंदुराः२

अथवृत्तार्द्धेनवश्यमाह-नुः नृराशेः मनुष्यराशेः जलजा जलचराभक्ष्याः । तस्यैव विहरयः सर्वेवशाः विगतः हरिः सिंहोयेभ्यस्तेविहरयः सिंहरहिताः सर्ववश्याइत्यर्थः । हरेः सिंहस्यविकौर्प्यावश्याः कौर्प्योवृश्चिकः विगतः कौर्प्यो येभ्यस्तेविकौर्प्याः सिंहस्यवृश्चिकरहिताः सर्वेराशयोवश्याः अथानंतरोक्तस्यहरेः अलिर्वृश्चिकोनशुभः वैरीत्यर्थः । नुः मनुष्यराशेः अब्जहरयः नेष्टाः स्युः । अब्जाः जलजाः हरिः सिंहः एतेनेष्टाः मेलनंनकर्तव्यमित्यर्थः । अन्यज्जनात् अन्यत्अस्यभक्ष्यादिकं जनाज्ज्ञेयम् । तद्यथा नुः पुरुषस्यगौर्वश्याभवति । अत्रपरस्परंमित्रत्वंदृश्यते तस्मादनयोर्मेलनंशुभं स्यात्। इदमेवम्लेच्छजातीयवधूवरयोर्नशुभम् म्लेच्छानांगौर्भक्ष्यम् ।इत्येवंलोकप्रचारतो विचारणीयमित्यर्थः।राशिस्वरूपंबृहज्जातकवशादवगंतव्यम्। बृहज्जातके"मत्स्यौघटीनृमिथुनंसगदंसवीणंचापीनरोश्वजघनोमकरोमृगास्यः ॥तौलीससस्यदहनाप्लवगाच कन्या शेषाः स्वनामसदृशाः खचराश्चसर्वे" ॥ अथभयोनीद्वावपिवृत्तेनाह-भेगण्येइति । मिथः परस्परंवधूवरयोर्भेनक्षत्रे वधूनक्षत्राद्वरनक्षत्रंगण्यं वरनक्षत्रात्कन्यानक्षत्रं गण्यम् उभे अपिनवभिर्भाजितेकार्ये।शेषंत्र्यगशराः त्रिसप्तपंच भवंति तदानसत्स्यात्।अथयोनिमाह-अश्विभादिति । अश्विभात्सकाशाद्भानांनक्षत्राणामश्वादयोयोनयोभवंति । अश्वोऽश्विन्याः इभोभरण्याः अविर्मेषःकृत्तिकायाः अहिःसर्पोरोहिण्याः भोगीसर्पोमृगस्य श्वाश्वानआर्द्रायाःवृषमुंदुरुंभुनक्तीतिवृषभुग्मार्जारःपुनर्वसोः मेषःप्रसिद्धः पुष्यस्य आखुभुग्मार्जारआश्लेषायाः द्व्युंदुरौद्वौउंदुरौमघापूर्वाफाल्गुन्योः ॥ २ ॥

### अब वश्य कहतेहैं ।

भा०-मनुष्यराशिके जलचरराशितो भक्ष्य है । और मनुष्यके सिंह विना सब वश्य हैं ॥ और सिंहके वृश्चिक विना सब वश्य है मनुष्यके जलजसे और सिंहसे मिलाना नेष्ट है । अर्थात् वरकन्याके परस्पर वैरराशि नहीं लेणी -और विचार लौकिकसे देखणा ॥

### अब भयोनि कहतेहैं ।

वरके नक्षत्रसे कन्याके नक्षत्रतक गणके-कन्याके नक्षत्रसे वरके नक्षत्रतक गणना, फेर दोनोंको नवका भाग देणा सो ३ । ५ । ७ । शेष रहै तो अशुभ है ॥ २ ॥

गौःकालीपशुभुङ्कहिव्यथपशुद्विड्द्वौमृगौश्वाकपिद्वौबभ्रूकपिसिंहवाजिहरिगोनागाःक्रमाद्योनयः ॥ सिंहेभंमहिषाश्वमोतुखनकंश्वैणंचकीशाविगोव्याघ्रंबभ्रुफणीतिभीरुवरयोःप्रेष्येशयोश्चत्यजेत् ॥ ३ ॥

गौरुत्तराफाल्गुन्याः कालीमहिषीहस्तस्य पशुर्मुगव्याघ्रश्चित्रायाः महिषीस्वात्याः पशुर्द्विद्विर्व्याघ्रोविशाखायां द्वौमृगौअनुराधाज्येष्ठयोः श्वामूलस्य कपिर्वानरःपूर्वाषाढायाः द्वौवभ्रूउत्तराषाढाभिजितोः बभ्रूर्नकुलौ कपिर्वानरःश्रवणस्य सिंहोधनिष्ठायाः वाजी अश्वःशततारकायाः हरिःसिंहःपूर्वाभाद्रपदायाः गौरुत्तराभाद्रपदायाः नागोहस्ती रेवत्याः । इतियोनिमभिधाययोनिवैरमाह सिंहश्चइभश्चसिंहेभंसिंहगजं महिषाश्वम् ओतुंखनकंमार्जारोंदुरु श्वैणंश्वानमृगौ कीशाविवानरमेषं गोव्याघ्रं वभ्रुफणिनकुलसर्पं इतिवैरं भीरुवरयोः वधूवरयोः प्रेष्येशयोः प्रेष्यः सेवकः ईशःस्वामी एतयोश्चत्यजेद्वर्जयेत् ॥ ३ ॥

॥ योनिचक्रम् ॥

भा०—और योनि वैरयोनिचक्रमें देखणी । वर कन्याके और स्वामीसेवकके—वैरयोनि नहीं लेना

| वै. | यो. | न. |
|---|---|---|
| भैसा | अश्व | अ. |
| सिंह | गज | भ. |
| बंदर | मींढा | कृ. |
| नाळिया | सर्प | रो. |
| नाळिया | सर्प | मृ. |
| हिरण | श्वान | आ. |
| उंदर | मार्जार | पु. |
| वानर | मींढो | पु. |
| उंदर | मार्जार | आ. |
| मार्जार | उंदरा | म. |
| मार्जार | उंदरा | पू. |
| व्याघ्र | गौ | उ. |
| अश्व | भैसा | ह. |
| गौ | व्याघ्र | चि. |
| अश्व | भैसा | स्वा. |
| गौ | व्याघ्र | वि. |
| श्वान | हिरण | अ. |
| श्वान | मृग | ज्ये. |
| हिरण | श्वान | मू. |
| मींढो | वानर | पू. |
| सर्प | नकुल | उ. |
| सर्प | नकुल | अ. |
| श्वान | कपि | श्र. |
| मींढो | वानर | ध. |
| गज | सिंह | श. |
| भैसा | अश्व | पू. |
| सिंह | गज | उ. |
| व्याघ्र | पशु | रे. |

भेशामंशुबुचंरबूशुमशुशाःशोगुःक्रियात्स्यूरवेर्मित्राणीज्यकुजेंदवःशनिसितौशत्रूविधोर्नोरिपुः॥ मित्रेसूर्यबुधौकुजस्यविदरिःसूर्येंदुजीवाहिताज्ञस्यार्कास्फुजितौहितौविधुररिःसूरेःसितज्ञावरी ॥ ४ ॥ मित्राण्यर्ककुजेंदवोथभृगुजस्यारीरवींदूहितौमंदज्ञौचशनेःकुजेंदुरवयोनेष्टाःसितज्ञौहितौ॥पूर्वार्द्धांतककोत्तरंनरिसुरेकांत्यादितीज्यानिलेंदुश्रुत्यश्विनिमित्रमन्यदसुरेदैत्यैर्नृणांस्यान्मृतिः ॥ ५ ॥

अथग्रहवैरावैरंविवक्षुस्तावद्राशिनाथानाह—क्रियान्मेषाद्भानांराशीनामीशाः भेशाःएतेक्रमेणस्युः । मंमंगलोमेषस्य शुशुक्रोवृषभस्येत्यादिस्पष्टम् । रवेःसूर्यस्यइज्यकुजेंदवोमित्राणि इज्योगुरुःकुजोभौमः इंदुश्चंद्रः एतेरवेर्मित्राणि सुहृदः स्युः । शनिसितौशत्रू शनिःप्रसिद्धः सितःशुक्रः एतौशत्रूवैरिणौ अर्थादन्येउदासीनाः विधोर्नोरिपुः विधोश्चंद्रस्यरिपुर्नास्ति सूर्यबुधौमित्रे अन्येसर्वेउदासीनाः ।कुजस्यभौ-

अस्यवित् बुधः अरिः । सूर्येंदुजीवाः हिताः मित्राणि अन्यौसमौ । ज्ञस्यबुधस्य अर्कास्फुजितौरविशुक्रौहितौमित्रे विधुश्चंद्रः अरिः वैरी अन्ये समाः । सूरेः गुरोः सितज्ञौशुक्रबुधौअरीवैरिणौ ॥ ४ ॥ अर्ककुजेंदवःरविभौमचंद्राःमित्राणिअन्येसमाः । भृगोःजातःभृगुजःतस्यभृगुजस्यशुक्रस्यरवींदूसूर्यचंद्रौशत्रू मंदज्ञौशनिबुधौहितौमित्रे अन्येसमाः । शनेःकुजेंदुरवयः अरयः सितज्ञौमित्रे अन्येसमाः । अथगणमाह-पूर्वार्द्रांतकेति । पूर्वास्तिस्रः आर्द्राप्रसिद्धा अंतकोभरणी कःरोहिणी उत्तरास्तिस्रः एतन्नक्षत्रनवकंनरिभवति नृगणाइत्यर्थः । अर्कोहस्तः अंत्यंरेवती अदितिःपुनर्वसुः इज्यः पुष्यः अनिलःस्वाती इंदुर्मृगः श्रुतिः श्रवणः अश्विनीप्रसिद्धा मैत्रमनुराधा एतन्नक्षत्रनवकंसुरेदेवेभवति देवगणइत्यर्थः । अन्यत्कृत्तिका आश्लेषा मघा चित्रा विशाखा ज्येष्ठा मूलं धनिष्ठा शततारका एतन्नक्षत्रनवकमसुरेभवति रक्षोगणइत्यर्थः । दैत्यैर्नृणांमृतिर्भवति ॥ ५ ॥

भा०-मेषका १ स्वामी भौम है । ऐसे वृषका २ शुक्र है-मिथुनका ३ बुध।४ का चंद्रमा । ५का सूर्य । बुध ६ का।शुक्र ७का । मंगल८का । गुरु ९का । शनि १०-११ का। गुरु१२का स्वामी है-और ग्रहोंके मित्र सम शत्रुका विचार चक्रमें देखणा-कन्यावरके राशिपतिकी शत्रुता न चाहिये-पू० ३ आ० भ० रो० उत्तरा ३ यह ९ नक्षत्र मनुष्यगणके हैं, ह० रे० पु० पुष्य-स्वा० मृ० श्र० अश्वि० अनु० यह ९ देवगणके हैं-और कृ० आश्ले० म० चि० वि० ज्ये० मू० ध० श० राक्षसगण हैं-कन्यापुरुषके दैत्यमनुष्य होय तो मृत्यु होय ॥ ४ ॥ ५ ॥

मैत्रीचक्रम् ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| बृ.मं.चं. | सू. बु. | सू.चं.गु. | सू. शु. | सू.चं.मं. | बु. श. | बु.शु. | मित्राणि. |
| बु. | मं. शु. गु. श. | शु. श. | मं.गु.शु. | श. | मं. गु. | गु. | समाः |
| श. शु. | ० | बु. | चं. | शु. बु. | चं. सू. | सू. चं. मं. | शत्रवः |

स्याद्देवासुरयोःकलिर्नृसुरयोर्मध्यंस्वयोःसौहृदंनैःस्व्यंद्विव्ययके षडष्टसुविपद्वैपुत्र्यमर्थाककके ॥ शेषेर्थाविविधाविभैकचरणेभिन्नर्क्षराश्यैककंभिन्नांघ्र्येकभमेतयोर्गणखगौनाडीनृदूरंनच ॥ ६ ॥

देवासुरयोर्देवदैत्ययोःकलिःस्यात् । नृसुरयोर्नृदेवयोर्मध्यंस्यात् । स्वयोर्मेलनेसौहृदंस्यात् । अथकूटमाह नैःस्व्यमिति । द्विव्ययकेद्विर्द्वादशेनैःस्व्यंनिःस्वस्यभावोनैःस्व्यंनिर्धनत्वंस्यात् । षडष्टसुविपत्मरणंस्यात् । वैपुत्र्यमर्थांकके अर्थांककेपंचमेनवमे वैपुत्र्यमनपत्यत्वंस्यात् । शेषेउर्वरितेतृतीयैकादशेचतुर्थदशमेउभयसप्तमे एकर्क्षेविविधार्थाःधनपुत्रपश्वादयःस्युः।कथंभूतेशेषे विभैकचरणे विगतंभैकचरणं नक्षत्रैकचरणं यस्मात् तथातस्मिन्नक्षत्रैकचरणे कूटे अनिष्टंफलं श्रूयते "एकराशौशुभोद्वाह एकभांशेमृतिप्रदः" इति । एकऋक्षस्यचत्वारोभेदः एकराशिभिन्नर्क्षमेकर्क्षभिन्नराशिःएकराशिनक्षत्रभिन्नचरणम् एकराशिनक्षत्रचरणंचेतिचत्वारोभेदाः तत्रएकराशिनक्षत्रचरणंनिंदितम् । विभैकचरणइति । अथशुभकूटेयद्भिन्नर्क्षंराश्यैककंराश्यैकत्वंयत्रभिन्नांघ्र्यैकभमेतयोर्गणखगौनाडीनृदूरंच न अत्रकिमपिनावलोक्यं शुभमित्यर्थः । नृदूरंवक्ष्यमाणम् । भिन्नांघ्र्यैकभमित्यत्रभेदद्वयमागतंभवति । एकर्क्षभिन्नराशिकम् अपरमेकराशिनक्षत्रभिन्नचरणंतस्मात् एकराशिनक्षत्रचरणंत्यक्त्वात्रिषुभेदेषुगणादिकंनाचिंतयेत् तत्रगणादिदोषेसत्यपिशुभंस्यादित्यर्थः । उक्तंचबृहस्पतिना"एकराशौपृथग्धिष्ण्ये पृथग्राशौतथैकभे।गणनाडीनृदूरंच ग्रहवैरंनचिंतयेत् ॥" कालनिर्णये "दंपत्योरेकनक्षत्रे भिन्नपादे शुभावहम् । दंपत्योरेकपादेतुवर्षांतेमरणंध्रुवम् ॥" इति ॥ ६ ॥

भा०-और देवदैत्योंके कलह होय-और देवमनुष्योंके मध्य है-वरकन्याका एक गण होय तो प्रीति होय । अब कूट कहते हैं-वरकन्याकी दूजी बारमी २।१२।राशि होवे तो निर्धन होय ॥ और ६ । ८ छठी आठमी होवे तो मरण होय-और नवी पांचमी ९ । ५ होय तो संतान नहीं होय । और ३ । ११ । ४ । १० । और दोनोंकी सातमी वा एकमी शुभ है. और दोनोंका एकनक्षत्रका एक चरण नहीं होय तो ३ । १० । ११ । ४ । १ । ७ । यह शुभ हैं-और जो शुभकूटमें भिन्न नक्षत्र होय ने राशी एक होय तो-और जो नक्षत्र एक होय ने चरण पृथक् होय तो गण खग नाडी नृदूरोंको नहीं देखणा । नृदूरको आगे कहेंगे ॥ ६ ॥

**द्व्यष्टेसमभंचषष्ठसहितंचेच्छोभनंस्यात्समंभंद्विर्द्वादशकेद्वितीयसहितंश्रेष्ठंस्त्रियायुग्घरिः ॥ मूलेंद्रार्कभपाश्यजैकचरणादित्यायमेशाश्विभैर्याम्यैंद्रीज्यभमित्रभाग्यवसुभत्वाष्ट्रांब्वहिर्बुध्न्यभैः ॥७॥**

अथग्राह्यषट्काष्टकंद्विर्द्वादशंचाह षट्काष्टे इति । समभंकर्ककन्यादि चेद्यदिषष्ठसहितंस्यात्तदाशोभनंस्यात् ग्राह्यंस्यादित्यर्थः । तद्यथा वृषःसमभंतस्मात्सकाशात् षष्ठेनतुलाधारेणसहितंयदिभवतितदाग्राह्यंस्यादित्यर्थः।तत्स्वामिनोर्मैत्र्यभावात् समभम् अष्टमेनसमंनग्राह्यम् । एवमेवग्राह्याग्राह्यंविलोकयेत् । अथग्राह्यंद्विर्द्वादशंचाह- द्विर्द्वादशकेसमभंद्वितीयसहितंयदाभवतितदाश्रेष्ठंशोभनंस्यात् विपरीतमसत् । अत्रसिंहेविशेषमाह-स्त्रियायुग्घरिरिति । विषमोपिसिंहःस्त्रियाकन्यययायुग्युक्तःश्रेष्ठः । अथनाडीमाह मूलेति।

अत्रश्लोकेतृतीयांतैस्त्रिभिःपदैःतिस्रोनाड्यःसूचिताः । मूलंप्रसिद्धम् इंद्रोज्येष्ठा अर्कभं हस्तः पाशीशततारका अजैकचरणंपूर्वाभाद्रपदा आदित्यंपुनर्वसुः अर्यमाउत्तराफाल्गुनी ईशआर्द्रा अश्विभमश्विनी एभिर्नवनक्षत्रैरेकनाडीभवति । याम्यंभरणी इंदुर्मृगः इज्यभंपुष्यः मित्रमनुराधा भाग्यभंपूर्वाफाल्गुनी वसुभंधनिष्ठा त्वाष्ट्रंचित्रा अंबुपूर्वाषाढा अहिर्बुध्न्यमुत्तराभाद्रपदा एभिर्नवनक्षत्रैरेकनाडीभवति ॥ ७ ॥

भा०–सम षट्काष्टकका दोष नहीं है–जैसे वृष सम है इससे छठा तुला है इससे जो षट्काष्टक होयतो दोष नहीं है ॥ और द्विर्द्वादशमें २ । १२ । सम जो दूजासहित होयतो दोष नहीं है ॥ जिहमें विशेष कहते हैं–विषम जो सिंह, कन्या जो स्त्री उससे युक्त श्रेष्ठ है ॥

## अब नाडीको कहतेहैं ।

भा०–मू० ज्ये० ह० श० पूर्वाभाद्रपदा–पुन० उत्तराफाल्गुनी–आर्द्रा–अश्विनी यह एकनाडीके ९ नक्षत्र हैं ॥ भ० मृ० पुष्य–अनु० पूर्वाफा० ध० चि० पूर्वाषाढा–उत्तराभाद्रपदा यह दूजी नाडीके ९ नक्षत्र हैं ॥ ७ ॥

अन्यैर्नाड्यइहैकनाडिनवकेस्यातांद्विभेचेन्मृतिर्गोदादक्षिणतः
क्वचिन्नृपमुखेपार्श्वैकनाडीहिता॥मैत्र्याद्विर्व्ययमर्थनंदमपिसत्षट्‌
काष्टकंवश्यतःषड्भिःस्त्रीनृगणावरोस्त्रपगणःसत्कूटमैत्र्योस्तदा॥८॥

अन्यैरुर्वरितैर्नक्षत्रैरेकनाडी एवंतिस्रोनाड्योभवंति । इहविवाहविषयेयदाएकनाडीनवकेद्विभेवधूवरयोर्भनक्षत्रेचेत्स्यातांतदामृतिर्मरणंस्यात् । अथगौतम्यादिदक्षिणेदेशेक्षत्रियादीनांचअन्यवध्वाअलाभेगतिमाह गोदादक्षिणतः गोदागौतमीतस्याःदक्षिणतः दक्षिणेदेशेसर्ववर्णेनृपमुखेक्षत्रियादौसर्वदेशस्थेक्वचित् अन्यकन्याया अलाभेसतिपार्श्वैकनाडीहिताशुभास्यान्नमध्यनाडी । उक्तंचरत्नकोशे "अग्रनाडीव्यधेभर्ता मध्यनाडीव्यधेद्वयम् । पृष्ठनाडीव्यधेकन्या म्रियतेनात्रसंशयः ॥ समासन्नेव्यधेशीघ्रं दूरवेधेचिरेणतु । व्यधांतरभमानेन वर्षेदुष्टंप्रजायते" इति ब्राह्मणविषयम् ॥ "जठरे निर्धनत्वंच गर्भे मरणमेवच । पृष्ठेदौर्भाग्यमाप्नोति तस्मात्तांपरिवर्जयेत्" इति ॥ ज्योतिःप्रकाशे "निधनंमध्यनाड्यांचदंपत्योर्नैवपार्श्वयोः" इति॥ अथव्यवस्थातत्रैवोक्ता "करग्रहेपृष्ठनाड्यौ ननिंद्येइतियद्वचः । तत्क्षत्रियादिविषयंगौतमीयाम्यतस्तथा" इति॥ अथपूर्वोक्तानां द्विर्द्वादशानांशुभत्वमाह मैत्र्येति । मैत्र्याग्रहमैत्र्या द्विर्व्ययंद्विद्वादशं अर्थनंदंपंचमनवमं सत्शुभंस्यात् वश्यादिषड्भिःषट्काष्टकंशुभंस्यात् । वश्यभयोनिखेचरगणनाडीभिःषडष्टकंशुभंस्यादित्यर्थः । अथयदास्त्रीनृगणावरोऽस्त्रपगणोरक्षोगणः स्यात्तदातन्मेलनंसत्कूटमैत्र्योःसत्योःशुभंस्यात् ॥ ८ ॥

भा०–और शेष रहे कृ० रो० आश्ले० म० स्वा० वि० उत्तराषाढा श्र० रे० इन्हों ९ नक्षत्रोंकी तीजी नाडी है ॥ विवाहमें स्त्रीपुरुषका नक्षत्र एकनाडीमें होवेतो मृत्यु होय ॥ और

दूसरी कन्या नहीं मिले तौ गौतमीनदीके दक्षिणवासी क्षत्रियादिकोंके मध्यनाडी विना दोनोंके एकनाडी शुभ होती है-और कन्यापुरुषके राशिस्वामियोंके परस्पर मित्रता होयतो २ । १२ । ५ । ९ । यह अशुभकूटवी शुभ होय-और वश्यादि छसे ६ षडष्टक ६ । ८ शुभ होता है ॥ और स्त्री मनुष्यगणकी होय ने वर राक्षसगणका होयतो सत्कूट मित्रतासे शुभ होता है ॥ ८ ॥

**रक्षःस्त्रीनृपुमान्यदावशमुखैःषड्भिर्युतंशोभनंस्त्रीभान्नानिकटेनृदूर-मशुभंखेटोडुमैत्र्योःशुभम् ॥ द्व्यर्केताम्रसुवर्णमष्टरिपुकेगोयुग्मम-थांकके रौप्यंकांस्यमथैकनाडियुजिगोस्वर्णादिदत्त्वोद्वहेत् ॥ ९ ॥**

अथयदारक्षःस्त्रीरक्षोगणास्त्री नृपुमान्नृगणःपुरुषःस्यात् तदावशमुखैःषड्भिःवश्यभयोनिखेचरकूटनाडीत्येतैःषड्भिर्युतंतन्मेलनंशुभंस्यात् । अथनृदूरंसापवादमाह । स्त्रीभात्स्त्रीनक्षत्रात्नाइतिनृनक्षत्रं यदिनिकटेसमीपेभवति तदानृदूरंस्यात् । कथंभूतंनृदूरम् अशुभम् अशुभफलदम् । इदंनृदूरंखेटोडुमैत्र्योःसत्योःशुभंस्यात् उडुमैत्रीनक्षत्रमैत्रीयोनिमैत्रीतियावत् । अथसंकटेदुष्टकूटादौदानमाह । द्व्यर्केइति । द्व्यर्केद्विर्द्वादशेताम्रसुवर्णादि दत्त्वाउद्वहेत् । अष्टरिपुकेषडष्टकेगोयुग्मंमिथुनंदत्त्वाउद्वहेत् अथांककेपंचमनवमेरौप्यंकांस्यंचदत्त्वोद्वहेत् । अथएकनाड्यांदानमाह । एकनाडीयुजिगोस्वर्णादिदत्त्वोद्वहेत् एकनाडीयोगेगोस्वर्णान्नवस्त्राणिवहूनिदत्त्वोद्वहेत् । राजमार्तंडे-"षडष्टकेगोमिथुनंप्रदद्यात्कांस्यंसरौप्यंनवपंचमेच । नाड्यांतुधेन्वन्नसुवर्णवस्त्रं द्विर्द्वादशेब्राह्मणतर्पणं च" इति ॥ उद्वाहतत्त्वे "ताम्रंहेमधनव्ययेरजतयुक्कांस्यंशरांकेवृषं गांदद्यात्त्वषडष्टके द्विजभुजिस्वर्णंच नाडीयुतौ" इति ॥ ९ ॥

भा०-और रक्षोगणकी स्त्री और मनुष्यगणका पुरुष होय तोबी वश्यभयोनिखेचरकूटनाडियोंसे युत मेलन शुभ है ॥ और स्त्रीके नक्षत्रसे पुरुषका नक्षत्र नजीक होयतो उनको नृदूर कहते हैं-नृदूर अशुभ है-और खेटमैत्रीसे और योनिकी मैत्रीसे नृदूर शुभ होता है ॥ अब संकटमें दुष्टकूटादिकोंका दान कहते हैं-दूजा बारमा कूट होयतो तांबा सोनाको देके विवाह करणा-और ६ । ८ होयतो गौमिथुनका दान देके विवाह करणा ॥ और ९ । ५ होयतो रूप्य कांसी देके विवाह करणा ॥ और एकनाडीमें होयतो गौ सुवर्ण वस्त्र अन्नादिक बहुत दान करके विवाह करणा ॥ ९ ॥

**भूर्वर्णैक्यवरोत्तमेथवशभक्ष्येऽर्द्धद्वयंमित्रयोःखंवैराशनकेधरारिव-शकेथोसद्वयोरग्नयः ॥ मिश्रेतच्छकलंत्वथातिसुहृदोर्वेदास्त्रयोमि-त्रयोरेकःस्याद्विषतःस्वभावगुणयोर्द्वौखंमहद्वैरिणोः ॥ १० ॥**

अथगुणविचारंत्रिभिर्वृत्तैराह । तत्रादौवर्णगुणविचारमाह । वर्णैक्यवरोत्तमेभूरेकोगुणोज्ञेयः वर्णयोरैक्यंयस्मिन्वटिते तद्वर्णैक्यंवरउत्तमोयस्मिंस्तद्वरोत्तमंच उभयत्रापिएकैकोगुणोज्ञेयः अर्थाद्धीनवरेगुणाभावः । उक्तंच ज्योतिर्निबंधे "एकोगुणः समेवर्णेतथाव-

र्णोत्तमेवैरं ॥ हीनवर्णे गुणः शून्यंकेप्याहुः सद्दशेदलम्" इति । अथवश्यगुणविचार-माह । वशभक्ष्येअर्द्धमेकस्यार्द्धगुणः वशभक्ष्यंयथामनुष्याणांजलजा वशा भक्ष्याश्च तत्रअर्द्धगुणोग्राह्यः । एतत्तुद्विजादौज्ञेयं द्विजातयस्तुकदाचिच्छ्राद्धेपाठीनजातीयमत्स्य-भक्षकाभवंति नसर्वेषाम् । तस्माद्वधूवरजातिं विचार्ययोजनीयम् हीनजातौशून्यंयतः खंवैराशनकेइत्यस्मिन्नेवश्लोकेउक्तत्वात् एवमेवसिंहस्यसर्वेवश्याः भक्ष्याश्चभवंति । तत्र मनुष्याः वैरभक्ष्यं वृश्चिकस्तुवैरी अन्येवशभक्ष्यम् अथमित्रयोः परस्परंसुहृदोः द्वयंगु-णद्वयंज्ञेयम् । तत्र विचारः । स्वजातौमित्रत्वंप्रकटं मनुष्याणांमिषवृषाश्वमृगैः सहमित्रत्वं तत्रहीनजातीयानां पशवोवशभक्ष्यं तत्रार्द्धगुणः अन्यत्रद्वयम् । अथअरिवशकेधरा एकोगुणः अरिवशकंयथा मनुष्याणांवृश्चिकः सिंहवृश्चिकयोर्नित्यंवैरम् वृश्चिकदष्टः सिंहोमरणमाप्नोतीतिलोकेप्रसिद्धम् तस्मादत्रगुणाभावः । प्रथमंवशभक्षणे अन्यज्जना-दित्युक्तम् तस्मात्सुबुद्धिभिर्विचार्यवक्तव्यम् । ममात्रवश्यविचारणेबुद्धिरेवंस्फुरिता अत्र-यद्विरुक्तंतद्बुधैः शोधनीयम् । ननुवश्यभक्षणेकौप्योंनवश्योर्हरेरित्येवोक्तम् । त्वयाकथ-मुक्तंसिंहस्यमनुष्यावैरिभक्ष्यमिति सत्यम् । तच्छ्लोकोक्तलक्षणंसर्वसामान्यमस्ति । अतएवोक्तंग्रंथकर्त्रा अन्यज्जनादिति । सिंहस्तुनरगजादिप्रतापिमारणेऽत्युत्सुकः अन्ये-षांमारणेउदासीनः असद्दशत्वात् । उक्तंच "वैरवश्येगुणाभावो द्वयोः सख्येगुणद्वयम् । वशवैरेगुणश्चैकोवशभक्ष्येगुणार्द्धकम्" इति । अथतारागुणविचारमाह । सद्वयोः उभ-यतः सत्तारयोः सतोः अग्नयः त्रयोगुणाः एतदुक्तंभवति भेगणयेंकहृतेइत्यनेन प्रकारे-णउभयतोपियदिसत्तारेभवतस्तदात्रयोगुणाइत्यर्थः । मिश्रेतच्छकलमिति । मिश्रेएकतः शुभातारा एकतः अशुभा एवंविधेमिश्रेसति तच्छकलंतेषांत्रयाणांशकलं सार्द्धैकोगु-णइत्यर्थः । अन्यथागुणाभावइत्यर्थात्सिद्धम् । उक्तंच "एकतोलभ्यतेतारा शुभाचैवा-शुभान्यतः ॥ तदासार्द्धोगुणश्चैकस्ताराशुद्धौमिथस्त्रयः ॥ उभयोर्नशुभातारातदाशून्यंस-मादिशेत्" इति ॥ अथयोनिगुणविचारमाह । अतिसुहृदोर्वेदाश्चत्वारोगुणाः मित्रयोस्त्रयः द्विषतोर्वैरिणोरेकः स्वभावगुणयोर्द्वौ महद्वैरिणोः खंशून्यंगुणः स्यात् । एवंपंचप्रकारे-णयोनिगुणाः । अस्यविवेकः अष्टाविंशतिनक्षत्राणाम् अश्वादयःसर्वाश्चतुर्दशयोनयः तत्र सिंहेभंमहिषाश्वमित्यादियदुक्तं तन्महद्वैरं तत्रापिमहद्वैरमहिषाश्वं वानरमेषकम् एतद्वय-मुदासीनं स्वभावगुणं परस्परघाताभावात् । अथैकयोनिषुअतिमित्रत्वंज्ञेयम् एकयोनि-ष्वपिगजयोः श्वानयोः मार्जारयोः व्याघ्रयोः सिंहयोः एकयोनित्वेपिनमित्रत्वं परस्प-रकलहकारणात् एतद्युग्मपंचकंस्वभावगुणम् एतद्युग्मपंचकंतुमहद्वैरस्थं महिषाश्ववान-रमेषम् एतद्वयमित्येतद्युग्मसप्तकंस्वभावगुणं व्याघ्रस्तुसर्पोंदुरुर्नकुलेषुउदासीनः सिंहो-प्येवमेवउदासीनः तथाएतौव्याघ्रसिंहौ अन्येषांवैरिणौ सर्पमार्जारयोर्वैरं श्वमेषयोः मैत्रं गोमहिष्योर्मैत्रमुंदुरुसर्पयोर्वैरम् एवंशत्रुमित्रादिकम् उदासीनत्वंचविचार्यउक्तवद्गुणाज्ञा-तव्याः । औदासिन्ये स्वभावगुणवत्गुणग्रहणम् उदासीनानांगुणायद्यपिनोक्तास्तथापि

स्वभावगुणे महिषाश्वेमेषवानरेचऔदासीन्यंदृश्यते तस्मादेतद्द्वयम् उदासीनेगुणग्रहणं कर्तव्यमित्यर्थाज्ज्ञायते । उक्तंच "महावैरेचवैरे च स्वभावेचयथाक्रमम् ॥ मैत्रेचैवातिमैत्रेचखेंदुद्वित्रिचतुर्गुणाः" इति ॥ १० ॥

। भा०–जो वर उत्तमवर्णका होय अथवा दोनोंका एक वर्ण होवे तो गुण एक १ होय ॥ और वर हीनवर्णका होयतो गुण नहीं होय ॥ अथ वश्यगुणविचारः ॥ जो एकका वश्य और दूसरेका भक्ष्य होयतो अर्द्ध गुण होय ॥ और दोनों मित्र होवें तो गुण २ होंय ॥ और शत्रुवश्य होयतो एक गुण होय ॥

## अथ तारागुणविचारः ॥

जो दोनोंकी शुभतारा होंय तो तीन ३ गुण होय ॥ और एककी शुभ और एककी अशुभ होयतो डेढ़ १॥ गुण होय ॥ अथ योनिगुणविचारः ॥ दोनोंके अत्यंतमित्रतासे ४ चार गुण होय और मित्रतासे तीन गुण होय ॥ और दोनोंके वैर होयतो १ गुण होय ॥ और स्वभाव गुणसे २ गुण होय ॥ और दोनों महद्वैरी होंयतो शून्य गुण होय ॥ १० ॥

**एकेशोभयमित्रयोःशरमिता अर्द्धंसमारातिकेचत्वारः सममित्रके रिपुहितेभूमिद्वयुदासेत्रयः ॥ नादेवोमनुजावधूरिहरसास्तद्वैपरीत्येशराःषट्साम्येस्रपपूरुषःसुरवधूस्त्वैककोन्यत्रखम् ॥ ११ ॥**

अथखेचरगुणविचारमाह । एकः ईशोयस्मिन्नतदेकेशम् उभयत्रमित्रंयस्मिन्नतदुभयमित्रम् एकेशंचउभयमित्रंचएकेशोभयमित्रे तयोः शरमिताः पंचगुणाग्राह्याः उभयत्रापिपंचपंचग्राह्याइत्यर्थः । अर्द्धंसमारातिकेसमः उदासीनः अरातिः शत्रुः एवंयस्मिन्मेलनेतत्समारातिकं तत्रअर्द्धमेकस्यार्द्धगुणाः स्युः । रिपुहितेअरिसुहृदिभूमिः एकः द्व्युदासेत्रयः द्वौउदासीनौयस्मिन् तत्रत्रयोगुणाः अनुक्तेगुणाभावः । उक्तंच "यत्रैकाधिपतित्वेचमित्रत्वेगुणपंचकम् ॥ चत्वारः सममित्रेचद्वयोःसाम्येत्रयोगुणाः ॥ मित्रवैरे गुणश्चैकः समवैरेगुणार्द्धकम् ॥ परस्परंखेटवैरेगुणः शून्यंसमादिशेत्" इति । अथगुणविचारमाह । नादेवइति । यत्रनरोदेवगणः वधूर्मनुजामनुष्यगणाभवति । इहरसाः षट्गुणाग्राह्याः तद्वैपरीत्येतयोर्वैपरीत्यंतद्वैपरीत्यंतस्मिन्शरमिताः पंचगुणाग्राह्याः एतदुक्तंभवतिपत्रनरोमनुष्यगणः वधूर्देवगणा अत्रपंचगुणाग्राह्याइत्यर्थः । षट्साम्येगणसाम्ये षट्गुणाग्राह्याः यत्रअस्रपः पूरुषः दैत्यगणः पुरुषः सुरवधूर्देवगणास्त्रीभवतितत्रैकः एकगुणोग्राह्यः अन्यत्रउक्तादन्यत्रखंशून्यंस्यात् ॥ ११ ॥

## अथ खेचरगुणविचारः ।

भा०–दोनोंका स्वामी एक होय अथवा परस्पर मित्रता होवे तो पांच ५ गुण होंय ॥ और सम शत्रु होवेतो अर्द्धगुण होय ॥ और शत्रुमित्रसे १ गुण होय ॥ और परस्पर समतासे तीन गुण होंय ॥ अनुक्तमें गुण नहीं होता है ॥

अथ गणगुणविचारः ।

भा०-जो पुरुष देवगणका और कन्या मनुष्यगणकी होयतो छ ६ गुण होय ॥ विपरीतसे पांच ५ गुण होय ॥ समगणसे ६ गुण होय ॥ और राक्षसगणका पुरुष होय ने कन्या देवगणकी होयतो एक गुण होय अन्यथा शून्य गुण होय ॥ ११ ॥

दुष्कूटेयदियोनिमैत्रमबलादूरंतदांभोधयोनोचेत्खंत्वनयोर्यदैकमिहभूर्भांघ्र्यैक्यकेखंगुणः ॥ सत्कूटेवरदूरताभरिपुताषड्भिन्नराश्यैकभेपंचान्यत्रसुकूटकेचगिरयोथोनाडिभेदेगजाः ॥ १२ ॥

इति श्रीमुहूर्तमार्तण्डेविवाहप्रकरणेघटितंसमाप्तम् ॥

अथकूटेगुणविचारमाह। दुष्कूटेद्विर्द्वादशादौसतियदियोनिमैत्रमबलादूरंस्त्रीदूरंस्यात्तदांभोधयश्चत्वारोगुणाग्राह्याःनोचेद्यदियोनिमैत्रमबलादूरंनस्यात्तदाखंशून्यंगुणःस्यात् अनयोर्योनिमैत्रस्त्रीदूरयोर्मध्ये यत्रएकंस्यात् इहभूरेकोगुणः भांघ्र्यैक्यकेनक्षत्रैक्यचरणेखंशून्यंगुणोग्राह्यः। अथसत्कूटेसति यदिवरदूरताभरिपुताउभयोर्वैरं योनिवैरंचस्यात् तदारसाः षड्गुणा ग्राह्याः भिन्नराश्यैकभेपंचभिन्नराशिश्चएकभर्ता च अत्रपंचगुणाग्राह्याः उर्वरितेसुकूटेगिरयः सप्तगुणाग्राह्याः। अथनाडीविचारमाह । अथोनाडीति। नाडिभेदेगजाः अष्टौगुणाग्राह्याः। अनुक्तेगुणाभावः॥ इतिमुहूर्तमार्तण्डेघटितम्॥१२॥

अथ कूटगुणविचारः ।

भा०-और जो कूट २ । १२ होय ने योनिकी मित्रता होय और स्त्रीदूर होयतो ४ चार गुण होय ॥ और योनिकी मित्रता ने स्त्रीदूर नहीं होयतो ० शून्यगुण होय ॥ और जो योनिमित्र और स्त्रीदूरमेंसे एक होयतो एकगुण होय ॥ और दोनोंके एकनक्षत्रका एक पाद होयतो ० शून्य गुण होय ॥ और जो सत्कूट होवे ने वर दूर होय और नक्षत्रकी शत्रुता होय ने दोनोंकी योनिमें वैर होयतो ६ गुण होय ॥ और दोनोंकी भिन्नराशि होवै ने नक्षत्र एक होयतो ५ पांच गुण होय ॥ और शेष सत्कूट होयतो ७ सात गुण होय ॥

अथ नाडीविचारः ।

भा०-भिन्ननाडीसे अष्ट ८ गुण होय ॥ और अनुक्त होवेतो गुणभी नहीं ॥ १२ ॥

स्त्रीणामष्टमवर्षतस्त्रिषुनृणांचीर्णव्रतानामयुक्ष्वब्देष्वत्रचराधमाघयुगयोर्मार्गेविवाहःशुभः ॥ ज्येष्ठंपूर्वजयोस्त्यजेद्धिमरुचिंइज्यो नखेटान्वितंयन्मासादिजनुर्भवंप्रथमकेगर्भंत्यजेन्नानुजे॥ १३ ॥

अथस्त्रीणांविवाहकालमाह । स्त्रीणामष्टमवर्षतःसकाशात्त्रिषुवर्षेषुविवाहःशुभः स्यात् । अष्टमनवमदशमेषुशुभःस्यादित्यर्थः। तथाचसंवर्तः "अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी। दशवर्षाभवेत्कन्याह्यादशेवृषलीमता ॥ गौरीदानान्नाकलोकेवैकुंठेरोहिणींददत् । कन्यादानाद्ब्रह्मलोकेरौरवंतुरजस्वलाम्" इति ॥ रजस्वलेतिवृषलीपर्यायः । तथाच

कारिकायामुक्तम् "षडब्दमध्येनोद्वाह्याकन्यावर्षद्वयंयतः ॥ सोमोभुंक्तेततस्तद्वद्गंधर्वश्च तथानलः" इति । अस्यवाक्यस्यसहायिनीश्रुतिरपि "सोमःप्रथमोविविद" इत्युपक्रम्य "सोमोददद्गंधर्वायगंधर्वोददद्ग्नये" इत्यंता । नन्वस्यविरोधोब्रह्मपुराणेगौतमीमाहात्म्ये भानुतीर्थवर्णनेविष्टिभानुसंवादेदृश्यते विष्टिभानुरुवाच "चतुर्थाद्वत्सरादूर्ध्वयावन्नदशमात्ययः । तावद्विवाहःकन्यायाःपित्राकार्यःप्रयत्नतः ॥" इति । सत्यम् । अत्रपुराणवाक्यं शूद्रादिविषयं श्रौतंस्मार्तंब्राह्मणादिविषयमित्यविरोधः सप्तमवर्षविषमत्वान्नारदादिभिः स्त्रीविवाहेनांगीकृतम् तस्माच्छास्त्रतत्त्ववेदिनाआचार्येणसर्ववर्णानामविरुद्धमेवोक्तम् । स्त्रीणामष्टमवर्षतास्त्रिष्विति । कथितकालादूर्ध्वंकदाचिद्वरालाभनिमित्ताद्वौसमवर्षेषुद्वादशचतुर्दशषोडशेषुविवाहोग्रंथांतरेउक्तः । कालनिर्णयदीपिकाविवरणेस्वयंवरार्थकालद्वयमुक्तम् । जीवत्पितृकायाऋतौवर्षत्रयानंतरंस्वयंवरकालः अदातृकायाअपिऋतौवर्षत्रयानंतरंस्वयंवरकालः । अदातृकायाइत्येतत्सर्ववर्णसाधारणम् । कन्याप्रदातारःकालनिर्णयदीपिकायामुक्ताः "पितापितामहोभ्रातामाताबंधुर्यदानाहि । ऋतौवर्षत्रयादूर्ध्वंकन्याकुर्यात्स्वयंवरम् ॥" इति । बौधायनोप्याह "वर्षाणित्रीण्यृतुमतीकांक्षेतपितृशासनम् ॥ ततश्चतुर्थेवर्षेतुविंदेतसदृशंपतिम्" इति । अथपुंसांविवाहकालमाह । नृणां चीर्णव्रतानां कृतविसर्गाणाम् अयुग्मेषुविषमेषु अब्देषुवर्षेषु विवाहःशुभःस्यात् । विशेषतउक्तवर्षेषुकर्तव्यइत्याह । अत्रराधमाघयुगयोः अत्रविषमवर्षेषु राधोवैशाखः माघः प्रसिद्धःअनयोर्युगेयुगले राधयुगंवैशाखज्येष्ठौ माघयुगं माघफाल्गुनावित्यर्थः । मार्गे मार्गशीर्षेविवाहःशुभःस्यात् । एतेपंचमासाःबहुसंमताःएषुज्येष्ठंज्येष्ठमासंपूर्वजयोःप्रथमजातयोःद्वयोस्त्यजेत् । अर्थादेकतरेज्येष्ठेसतिनत्यजेत् । दोषांतरमाह । हिमरुचिचंद्रं ज्ञेज्योनखेटान्वितंबुधगुरुरहितान्यग्रहयुक्तं पापग्रहयुक्तं शूद्राणाम् अन्यतमयुक्तंत्यजेत् आनिष्टफलश्रवणात् "मासाद्यंजनिसंभवम्" इति त्याज्यप्रकरणोक्तंयत्तस्यविशेषनिर्णयमाह । यन्मासादितिस्पष्टार्थम् । नारदः "नजन्ममासेनक्षत्रेनजन्मदिवसेपिवा । आद्यगर्भसुतस्यापिदुहितुर्वाकरग्रहः" इति ॥ १३ ॥

## अब कन्याका विवाहकाल कहतेहैं ।

भा०-कन्याके विवाह आठमें वर्षमें वा नवमें वर्षमें वा दशमें वर्षमें करना । पुरुषके व्रत समाप्त होनेसे विषमवर्षमें विवाह करणा ॥ और वैशाख, माघ, ज्येष्ठ, फाल्गुन, मार्गशीर्ष ए मास विवाहमें श्रेष्ठ हैं ॥ जो वर कन्या दोनों प्रथम संतानका होय तो ज्येष्ठमासमें विवाह नहीं करणा । और एक ज्येष्ट होयतो ज्येष्ठमास अशुभ नहीं है और जो चंद्रमा बुध विना दूजे ग्रहोंसे संयुक्त होयतो अशुभ है ॥ और प्रथम संतानके विवाहमें जन्ममासादिकोंको नहीं लेना ॥ दूजे संतानके दोष नहीं है ॥ १३ ॥

**मूलांत्यार्कमघास्थिरेंद्वनिलयुङ्मैत्रंविवाहेशुभं**
**पापत्यक्तमनिंदुभुक्खलयुतंभोग्यंचविद्धंचभम् ॥**

विश्वेंद्वोर्यममित्रयोर्द्विकभयोः पैत्र्यर्क्षहर्योर्मिथो-
त्यार्यम्णोःपुनरस्त्रपोर्वरुणभस्वात्योरुभाहस्तयोः ॥ १४ ॥

अथ विवाहनक्षत्राणिसवेधान्याह । मूलांत्यार्केति ॥ मूलंप्रसिद्धम् अंत्यंरेवती अर्को हस्तः मघाप्रसिद्धा स्थिराणिरोहिण्युत्तरात्रयम् इंदुर्मृगःअनिलंस्वाती एभिःसहितंमैत्र-मनुराधा विवाहेशुभंशुभफलदम् । अथएतेषूक्तेषुनियमाह । पापत्यक्तमसत् अनिंदुभुक्तं चंद्राभुक्तंनशुभम् एतदुक्तंभवति । पापग्रहत्यक्तंनक्षत्रंचंद्रभुक्तिरहितंनशुभंस्यात् । खल-युक्तंपापग्रहयुक्तंभोग्यंविद्धंनशुभंस्यात् । अथवेधमाहविश्वेंद्वोः उत्तरामृगयोः यममित्रयोः भरण्यनुराधयोः द्विकभयोः कस्यभेकभेद्वेचतेकभेचद्विकभेरोहिण्यभिजितौतयोः पैत्र्य-र्क्षहर्योः मघाश्रवणयोःमिथःपरस्परम् अंत्यार्यम्णोःरेवत्युत्तराफाल्गुन्योः पुनरस्त्रपोः पुनर्वसुमूलयोः वरुणभस्वात्योः शततारकास्वात्योःउभाहस्तयोः उत्तराभाद्रपदाहस्तयो-र्मिथः परस्परंवेधः स्यादित्युत्तरश्लोकेनान्वयः ॥ १४ ॥

अब विवाहनक्षत्रोंको कहतेहैं ।

भा०-मू०रे०ह०म०स्थिर-मृ०स्वा०अनुराधा-ये नक्षत्र शुभ हैं ॥ और जो नक्षत्र पाप-ग्रहसे युक्त होय अर्थात् पापग्रहने छोडा होय वह अशुभ है ॥ और चंद्रमाने नहीं भोगा होयतो अशुभ है और पापयुक्त होय और पापभोग्य होय वा विद्ध होयतो अशुभ है ॥

अथ वेधविचारः ।

भा०-उत्तरा और मृगके परस्पर वेध होय ॥ ऐसेही भरणीके और अनुराधाके रोहिणी अभिजितके-मघाश्रवणके-रेवती उत्तराफाल्गुनीके-पुनर्वसुमूलके-शतभिषास्वातीके उत्तराभा-द्रपदा हस्तके-वेध हैं ॥ १४ ॥

वेधोयंकरपीडनेनिगदितोनान्येषुतेषुस्मृतोवेधःसप्तशलाककेशि-
वदिशःकार्शानवाद्यैर्युते ॥ वेधोंऽत्यादिमयोर्द्विकत्रिमितयोरंघ्र्यो-
र्मिथःसद्ग्रहैर्विद्धेभेचरणंत्यजेत्खलखगैःसर्वेत्त्विहांघ्रिक्वचित् ॥ १५ ॥

अथकर्मविशेषेणवेधनिर्णयमाह । वेधोयमिति । अयंवेधःकरपीडनेविवाहेपूर्वमुनि-भिर्निगदितः । नान्येषुअन्येषुशुभकर्मसुअयंवेधोनोक्तइत्यर्थः । तेषुविवाहान्यकर्मसुसप्त-शलाककेस्मृतः किंभूतेसप्तशलाककेचक्रे शिवदिशःईशान्याःसकाशात् कार्शानवाद्यैर्युते कृशानुर्देवतायस्येतिकार्शानवंकृत्तिकासाआद्यायेषांतानितैर्युते ईशान्यादिमदक्षिणंकृत्ति-कादिनक्षत्रयुक्तइत्यर्थः । विवाहादृतेसर्वकर्मसुसप्तशलाकाचक्रेवेधोऽवलोकनीयइति । अथपादवेधमाह । वेधोंत्यादिमयोरिति । अंत्यादिमयोः चतुर्थप्रथमयोः द्विकत्रिमितयोः द्वितीयतृतीययोः अंघ्र्योश्चरणयोः मिथः परस्परं वेधः स्यात् । अथास्यनिर्णयमाह । सत्खगैःशुभग्रहैः भेनक्षत्रेविद्धेसतिचरणंत्यजेत् खलखगैः पापग्रहैः विद्धेसतिसर्वनक्षत्रंत्य-

जेदित्यर्थः । इहास्मिन्पापविद्धेकचिदन्यमुहूर्तालाभेसतिआंघ्रिचरणंविद्धंत्यजेदित्यर्थः । उक्तंचमांडव्येन "धिष्ण्यंसौम्यग्रहैर्विद्धंपादमात्रंपरित्यजेत् ॥ क्रूरैस्तुसकलंत्याज्यमितिवेधविनिश्चयः" इति । वैद्यनाथः "वेधमात्रंतयोरंघ्र्योरन्योन्यद्वितृतीययोः ॥ क्रूरैरपित्यजेत्पादंकेचिदूचुर्महर्षयः" इति ॥ १५ ॥

भा०—इन वेधको विवाहमें देखणा ॥ अन्यत्र नहीं देखणा—और कर्ममें सप्तशलाकाका वेध है सो ईशानमें कृत्तिकाको देके एकएक दिशामें सातसात नक्षत्र देणा । सो विवाह विना संपूर्ण काममें देखणा ॥ अब पादवेध कहते हैं ॥ प्रथम चतुर्थपादको वेध होय—और द्वितीय तृतीय पादके वेध होंय—जो शुभग्रहोंसे वेध होयतो चरण शुभ है—और पापोंसे विद्ध होय तो सारे नक्षत्र अशुभ होय ॥ १५ ॥

**लग्नेशेभवगेथवाशशिनिसद्दृष्टेशुभेवांगगेहोरायांचशुभस्यवाव्यधभयंनास्तीतिपूर्वेजगुः ॥ भौमात्र्याकृतिषड्जिनाष्टनखभंहंत्यग्रतोलत्तयाखेटोर्कोर्कमितंशशीमुनिमितंपूर्णोनसन्मालवे ॥ १६ ॥**

अथवेधभंगमाह । लग्नेशइति । लग्नस्वामिनिभवगेएकादशगेसतिवेधस्यदोषोनास्तीति एकोभंगः अथवाशशिनिसद्दृष्टेसतिद्वितीयोभंगः वाइत्यथवा शुभेशुभग्रहेचंद्रवर्जितेअंगे सतितृतीयोभंगः शुभस्यहोरायांचेतिचतुर्थोभंगः एषामन्यतमेसतिव्यधोनास्तीतिपूर्वेमुनयोजगुः आहुः । तथाच वसिष्ठः "लग्नेशुभेसौम्ययुतेक्षितेवालग्नादिनाथोभवगस्तथावा ॥ कालाख्यहोराचतथाशुभस्यभवेद्धिदोषस्यतथाविभंगः" इति । उद्वाहतत्वेपि "सद्युग्दृष्टकृतुगेशुभेव्यधभयंनोवायगेलग्नपेहोरायांचशुभस्यवाशशिनिसद्दृष्टेऽपिचार्यैरुक्तोः" इति । अथलत्तामाह । भौमादिति । भौमातसकाशात्खेटोग्रहोराद्वंतः क्रमात्र्याकृत्यादिभंनक्षत्रमग्रतोलत्तयाहंति । भौमस्तृतीयं बुधः आकृतिर्द्वाविंशतिमितं गुरुः षष्ठं शुक्रः जिनमितंचतुर्विंशं शनिरष्टमं राहुर्नखमितंविंशंलत्तयाहंति । अर्कः सूर्यः अर्कमितंद्वादशं शशीपूर्णचंद्रमाः मुनिमितंसप्तमम् अग्रतोलत्तया हंति । तत्हतंनक्षत्रंमालवे मालवदेशेनसत्नशुभंस्यात् । उक्तंच "लत्तामालवकेदेशेपातंकौशलकेतथा ॥ एकार्गलंतुकाश्मीरेवेधंसर्वत्रवर्जयेत्" ॥ १६ ॥

अब वेधभंग कहतेहैं ।

भा०—यदि लग्नस्वामी एकादशमें होयतो वेधदोष नहीं होय ॥ १ ॥
और चंद्रमाको शुभग्रह देखते होंयतो वेधदोष नहीं होय ॥ २ ॥
अथवा चंद्र विना शुभग्रह लग्नमें होय तौबी वेधदोष नहीं होय ॥ ३ ॥
अब लातको कहते हैं ॥ भौम अपने सामने तीजा नक्षत्रको लात देता है ॥
ऐसे बुध बावीस २२ माको लात देता है ॥ गुरु ६ छठाको लात देता है ॥ और शुक्र चौवीस २४ माको लात देता है ॥ और शनि ८ आठमाको लात देता है ॥ राहु २० वीसमाको लात देताहै ॥ सूर्य बारमा नक्षत्रको लात देताहै ॥ और पूर्णचंद्र सातमा ७ नक्षत्रको लात देताहै या लात मालवामें अशुभ है ॥ १६ ॥

षण्मासंग्रहणोडुचंद्रतनुगंविद्धर्क्षंजन्मर्क्षकेत्याज्येजन्मभलग्नकेत-
नुगतेसूर्यान्मनूडुत्यजेत् ॥ दंतद्वयंकदशोर्कतोयुगगजास्तर्काः
खबाणेंदवोनाडीःसंक्रमणेत्यजेद्दिविषदांप्रायोरवेर्दूषिताः ॥ १७ ॥

अथदोषांतराण्याह । षण्मासमिति । षण्मासंषण्मासपर्यंतं ग्रहणोडुग्रहणनक्षत्रं चंद्रतनुगं चंद्रगतंलग्नगतंचत्याज्यम् चंद्रगतमिति यस्मिन्दिनेचंद्रमसायुक्तंभवति तच्चंद्रगतंदिननक्षत्रमितियावत् । तनुगंयथा अश्विन्यांग्रहणेजातेतत्र्यंशत्रयोदशभागांतमेषलग्ने सतिअश्विनीलग्नस्थास्यात् । एवंभरण्याद्यपि ग्रहणोडुइत्यनेनैवअन्यान्यपिउडूनिदुष्टानि त्याज्यानि । विद्धर्क्षंविद्धनक्षत्रंजन्मनक्षत्रमेतेउभेतनुगेत्याज्ये भंचलग्नंचभलग्नं जन्मनिभलग्नेजन्मभलग्नेतएवजन्मभलग्नके जन्मराशिजन्मलग्नेतनुगेत्याज्ये । लग्नांतर्गतनक्षत्रज्ञानायस्वकल्पितसूत्रं "नवघ्नंतनुवेदाप्तंसैकंस्यात्तारकंतनौ" अर्कनक्षत्रात्सूर्यनक्षत्रात् मनूडुचतुर्दशनक्षत्रंत्यजेत् । अथसूर्यादीनांराशिसंक्रमणेत्याज्यघटिकाआह । त्याज्याइति । रविचंद्रकुजसौम्यगुरुशुक्रमंदानांसंक्रमणेरदद्वयंकदङ्नाड्यस्त्याज्याः तद्यथा रविसंक्रमणेरदनाड्योद्वात्रिंशद्घटिकावर्ज्याः संक्रमणकालात्पूर्वतः षोडशघटिकाः परतः षोडशघटिकाः एवंद्वात्रिंशद्घटिकास्त्याज्याइत्यर्थः । तथाच चंद्रसंक्रमणेद्वेनाड्यौ भौमसंक्रमणेनवघटिकाः बुधसंक्रमणेद्वेघटिकेत्याज्ये गुरोः संक्रमणेअष्टाशी ८४ चतुरशीतिघटिकाः शुक्रस्यषड्घटिकाः शनेः संक्रमणेखतिथयः १५० पंचाशदधिकशतंघटिकाः त्याज्याइत्यर्थः । अत्रबाहुल्येनसर्वापेक्षयारवेः संक्रमणनाड्योबहुभिराचार्यैर्दूषिताइत्यर्थः ॥ १७ ॥

भा०-ग्रहण नक्षत्र छ महीनोंतक अशुभहै सो चंद्रगतहोय वा लग्नगत होय तो त्याग करणा ॥ विद्ध नक्षत्र वा जन्मनक्षत्र लग्नगत होयतो त्याग करणा ॥ और जन्मराशि जन्मलग्न लग्नगत होय तो अशुभ होय ॥ और सूर्यनक्षत्रसे चौदसा नक्षत्र अशुभहै ॥

अब संक्रांतिकी त्याज्यघटियोंको कहतेहैं ।

भा०-सूर्यसंक्रांतिकी सोलेसोले मिलके ३२ घडियों अशुभ हैं ॥ ऐसेही चंद्रमाकी मिलके दोय २ त्याज्यहैं ॥ और भौमकी ९ । और बुधकी २ गुरुकी ८४ शुक्रकी ६ । और शनिकी १५० । बहुत आचार्योंने सूर्यसंक्रांतिकी नाडियोंको अशुभ कहाहै ॥ १७ ॥

षट्षष्टिर्ऋतुसंधितस्तिथिभयुक्संधौद्विनाड्यौग्रहा-
त्तत्पादैर्दिवसांस्त्रिवेदषडिभान्प्रागर्द्धितान्संत्यजेत् ॥
उत्पातेध्यहमुद्गमंचशिखिनोराकाष्टमीप्राग्दले
विट्प्रांत्येकृतरुद्रयोरबहुलेकृष्णेनिरेकेष्विह ॥ १८ ॥

अथसंधिदोषमाह । षडिति । ऋतुसंधितः वसंतादिऋतुप्रवृत्तेः षट्षष्टिः षड्भिरधिकाषष्टिः ६६ घटीनांषट्षष्टिस्त्याज्येत्यर्थः । ऋतुप्रवृत्तिलक्षणंरत्नमालायाम् "मृगादिराशिद्वयभानुभोगात्षडर्तवः स्युः शिशिरोवसंतः । ग्रीष्मश्चवर्षाचशरच्चतद्वद्धेमंतनामाकथितोत्रषष्ठः" इति । तिथिभयुक्संधौतिथिनक्षत्रयोगानांसंधौद्विनाड्यौपृथक् द्वेद्वेघटिकेत्याज्ये । अथपूर्वमुक्तंग्रहजनिर्भ्रांतोर्द्ध्वंसूतकमिति । तत्रग्रहणसूतकलक्षणमाह । ग्रहादिति । ग्रहात्ग्रहणतः सकाशात्उपरितत्पादैस्तच्चरणैः ग्रहपादैः त्रिवेदषडिभान् ३ । ४ । ६ । ८ दिवसान्त्यजेत् । एतदुक्तंभवति "पादैकमात्रग्रहणेत्रीन्दिवसान्त्यजेत् अर्धग्रहणेचतुरोदिवसान्त्यजेत् त्रिपादग्रहणेषट्दिवसान्त्यजेत्सर्वग्रहणेअष्टदिवसान्त्यजेत्" प्राग्ग्रहणात् प्राक्प्रथमःअर्द्धितान्त्रिवेदादीन्दिवसान्त्यजेत् एतदुक्तंभवति । पादग्रहणेत्रयाणामर्द्धं तद्यथा पादग्रहणेग्रहणात्पूर्वंसार्द्धैकदिवसं ९० नवतिघटिकास्त्याज्याः अर्द्धं ग्रहणेचतुर्णामर्द्धम् द्वौदिवसौ पादत्रयग्रहणेषण्णामर्द्धंत्रीन्दिवसान् सर्वग्रहणेअष्टानामर्द्धंचतुरोदिवसान्ग्रहणात्पूर्वंत्यजेत् "उपरागोग्रहोराहुग्रस्तेत्विंदौचपूष्णिच" इत्यमरः ॥ शार्ङ्गीयविवाहपटले "सर्वग्रासेदिनान्यष्टौशुभकार्येषुवर्जयेत् ॥ त्रिभागोनेषट्दिवसानर्द्धग्रासेचतुर्दिनम् ॥ चतुर्थांशेत्रिरात्रंतुग्रहणेचंद्रसूर्ययोः" इति । अत्राप्यंतरालेतुपातोज्ञेयः । तथाचार्ष्टिषेणः "ग्रहणात्त्रिदिनंपूर्वंपरतोदिनसप्तकम्" इतिसर्वग्रहणविषयम् । ज्योतिःप्रकाशेपि "खग्रासेसर्वपादोनेखंडाध्यल्पेतुवासराः । गजाश्वेष्वब्धिरामाब्जेनेष्टाः स्युः प्राग्दलेगृहाः" इति । अथोत्पातेवर्ज्यकालमाह । उत्पातेद्र्यहमिति । उत्पातेभूकंपनिर्घातमहोल्कानिपातादिके अद्र्यहमद्रिमितानामह्नां समाहारः अद्र्यहंसप्ताहमित्यर्थः । उत्पातेजातेसतिसप्ताहंशुभकर्मणित्यजेदित्यर्थः । दोषांतरमाह । उद्गमंचशिखिनः शिखिनः केतोः उद्गमसुदयंत्यजेत् यावत्केतूदयस्तावन्मंगलंनकुर्यादित्यर्थः । तथाचार्ष्टिषेणः "परंसप्ताहमुत्पातेत्यजेत्केतूदयेशुभम्" इति । भद्राकालमाह । राकाष्टमीप्राग्दलेविट्स्यात् । राकापौर्णिमा अष्टमीप्रसिद्धा अनयोस्तिथ्योः प्राग्दलेपूर्वार्द्धे विट्विष्टिः स्यात् । कृतरुद्रयोः प्रांत्येकृतंचतुर्थीरुद्रएकादशी अनयोः प्रांत्ये विट्स्यात् । एतद्भद्राचतुष्टयमबहुलेशुक्लपक्षेस्यात् । कृष्णेनिरेकेष्विह उक्तेषुतिथिषुनिरेकेषुएकरहितेषुकृष्णेकृष्णपक्षेविट्स्यात् । भद्रापवादः शार्ङ्गीयविवाहपटलेदूषितोतःकारणान्नोक्तः ॥ १८ ॥

## अब संधिदोषको कहतेहैं ।

भा०-ऋतुसंधिकी ६६ घडियों अशुभहैं ॥ तिथि, नक्षत्र और योगोंके संधिकी दोय दोय घडी अशुभहैं ॥ पादग्रहण होयतो पीछेके तीनदिन अशुभहैं ॥ और अर्द्धग्रास होय तो चार दिन पीछेके अशुभहैं ॥ और त्रिपाद होयतो छ दिन पीछेसे अशुभहैं । और संपूर्ण ग्रास होयतो आठदिन पीछेका त्याज्यहै ॥ और पादग्रासादिकोंके पूर्वका आधादिन त्याज्यहै ॥ जैसे पादग्रासमे १॥ दिन पूर्वका अशुभहै ऐसे सर्वत्र समझ लेणा ॥ और उत्पातसे होय तो ऊपरके सातदिन अशुभहैं । और केतुदीखे जहांतक अशुभहोय ॥

## अब भद्राको कहतेहैं।

भा०-शुक्लपक्षमें ८ अष्टमी १५ पूर्णिमाको पूर्वार्ध भद्रा होताहै॥ शुक्लपक्षमें चतुर्थी एकादशीको परार्द्ध भद्रा होताहै॥ और कृष्णपक्षमें ७। १४ पूर्वार्द्ध और ३। १०। को परार्द्ध होताहै॥ १८॥

**सार्पैंद्रांतिमभात्ततोऽब्धिघटिकंपूर्णांततोऽध्यर्द्धकंकीटांत्यालिविरामतः कुघटिकंगंडांतमूर्ध्वाधरम्॥ साव्वैशूव्यहगाख्ययोगविरतौभंतत्रचंडायुधंदुर्योगेदिनभाच्चसाभिजिदयुग्भेर्कस्तदैकार्गलः १९**

अथगंडांतलक्षणमाह। सार्पैंद्रांतिमभेति। सार्पमाश्लेषा इंद्रोज्येष्ठा अंतिमभंरेवती एषामंतः तस्मात्कालात्प्राक्परंपूर्वापरतः अब्धिघटिकंगंडांतकंस्यात। अब्धयश्चतस्रोघटिकायस्मिन्नित्यब्धिघटिकं चतुर्घटिकमित्यर्थः। एतदुक्तंभवति। उक्तनक्षत्रात्पूर्वतो घटिकाद्वयं परतोघटिकाद्वयम् एवंघटिकाचतुष्टयंनक्षत्रगंडांतम्। अथतिथिगंडांतमाह। पूर्णांततोऽध्यर्द्धकम् पूर्णापंचमीदशमीपूर्णिमातासामंततः अध्यर्द्धकं द्विघटिकंगंडांतं पूर्वापरतः स्यात्। अथलग्नगंडांतमाह। कीटांत्यालिविरामतः कुघटिकं कीटःकर्कटकः अंत्योमीनः अलिर्वृश्चिकः एषांविरामोवसानंतस्मात् कुघटिकं प्रागर्द्धघटिका। परतोर्द्धघटिका एवमेकघटिकंलग्नगंडांतंस्यात्। अथचंडायुधमाह। साव्वैइति। सासाध्ययोगः वैवैधृतिः शूशूलः व्यव्यतीपातः हहर्षणः गगंडः एतदाख्ययोगानां विरतिरवसानंतत्रयद्भंनक्षत्रंतस्माच्चंडायुधंस्यात्। चंडंप्रचंडंमहत् एवंविधमायुधंस्यात्। आयुधंघातकंस्यात्। तस्मात्तन्नक्षत्रवर्ज्यमित्यर्थः। अथैकार्गलमाह। दुर्योगेदिनभादिति। विष्कंभातिगंडशूलगंडव्याघातवज्रव्यतीपातपरिघवैधृतयोनवदुर्योगाः एषामन्यतमेसतिदिनभाद्दिननक्षत्रात्साभिजिदयुग्मेअभिजितासहअयुग्मेविषमनक्षत्रेयदार्कः सूर्योभवतितदाएकार्गलःस्यात्। एकाअर्गलाशुभावरोधिनीयस्मिन्नित्येकार्गलः शुभफलावरोधकइत्यर्थः॥ १९॥

## अब गण्डांतको कहतेहैं।

भा०-आश्ले० ज्ये० रे० इन्हों नक्षत्रोंके पूर्वापरकी दोयदोय घडियों मिलके ४ घडी अंतकी नक्षत्रगंडांत होय॥ और ५। १०। १५। इन्हीं तिथियोंके अंतकी २ घडी पूर्वापरकी तिथिगण्डांत हैं॥ और ४। १२। ८। इन्होंलग्नोंके अंतकी पूर्वापरकी १ घडी लग्नगण्डांत होय॥

## अब चंडायुध कहतेहैं।

भा०-साध्य, वैधृति, शूल, व्यतीपात, हर्षण, गण्ड इन्हीं योगोंके अंतका नक्षत्र चण्डायुध है सो वह चंडायुधाख्य नक्षत्र त्याज्य हैं॥

## अब एकार्गल कहतेहैं ।

भा०-विष्कंभ, अतिगण्ड, शूल, गण्ड, व्याघात,वज्र, व्यतीपात, परिघ, वैधृति योगोंमेंसे कोई योग होय और दिननक्षत्रसे अभिजित्सहित विषम नक्षत्रपर सूर्य होवै तो एकार्गलयोग होय ॥ यह एकार्गल त्याज्य है ॥ १९ ॥

**सूर्याद्यामदलंदिवैवनिगमव्यश्वीषुनागत्रिषट्संख्याकंकुलिकंदिवेंद्रविदिङ्नागर्तुवेदद्विकम्॥व्येकंतन्निशिषोडशांशमपरेतिथ्यंशमुज्झंतितैःकालंकंटकमैनिघंटममरेज्यज्ञास्फुक्षिद्भ्यःक्रमात्॥२०॥**

अथवारदोषमाह । सूर्यादिति । सूर्यात्सकाशाद्वारेषुक्रमेण निगमादिकंयामदलंयामार्द्धमुज्झंतित्यजंति मुनयइतिशेषः । निगममितंरवौ सप्तमितंसोमे अश्विनौद्वौतन्मितं भौमे इषुमितंबुधे नागाष्टौतन्मितंगुरौ त्रिमितंशुक्रे षण्मितंशनौ एतद्यामदलंदिवैवउज्झंतिनरात्रौ । अथकुलिकादीनाह । इनादौसूर्यादौवारे दिवाइंद्रादिकंषोडशांशंदिनमानस्यषोडशांशोग्राह्यः तेनगण्यास्तेषोडशांशाग्राह्याइत्यर्थः । तंकुलिकमुज्झंति अपरेतिथ्यंशंपंचदशांशंकुलिकमुज्झंति तन्निशितद्रात्रौ चव्येकमेकरहितचंद्रादिकंषोडशांशंपंचदशांशमुज्झंति । तद्यथा "रवौदिवाइंद्रमितंचतुर्दशं तद्रात्रौत्रयोदशं सोमेदिवाद्वादशं तद्रात्रौएकादशम्" इत्यादि । अथतैरेवइंद्रादिभिर्मुहूर्तैः अमरेज्यज्ञास्फुजिद्भ्यःसकाशात क्रमात्कालंकंटकम्ऐनिघंटम् इनस्यापत्यंपुमानैनिःयमःतस्यघंटोयमघंटइत्यर्थः । तमुज्झंति। एतदुक्तंभवति । अमरेज्योगुरुः तस्मात्सकाशात्तैरेवइंद्रादिभिर्मुहूर्तैःकालमुज्झंति ज्ञाद्बुधात्तैरेवेंद्रादिभिःकंटकम्आस्फुजिच्छुक्रःतस्मात्सकाशात्तैरेवेंद्रादिभिर्मुहूर्तैरैनिघंटंयमघंटमुज्झंति ॥ २० ॥

## अब वारदोषको कहतेहैं ।

भा०-सूर्यवारके दिन चोथाप्रहरका आधा प्रहर और चंद्रके दिन ७ मेका और भौमके दिन २ जेका-बुधके दिन ५ का गुरुके दिन ८ मेका शुक्रके दिन ३ का, शनिके दिन छठेका आधाप्रहर दिनमें त्याग करणा ॥

## अब कुलिकको कहतेहैं ।

## दिनमानके षोडशांशको वा पंचदशांशको मुहूर्त कहते हैं ॥

भा०-सूर्यके दिनमें १४ चौदमा मूहूर्त और रात्रिमें १३ तेरमा मुहूर्त कुलिकका है ॥ सोमके दिनमें १२ रात्रिमें ११ कुलिकका मुहूर्त है । भौमके दिनमें १० रात्रिमें ९ मुहूर्त कुलिकका है ॥ बुधके दिनमें ८ रात्रिमें ७ और गुरुके दिनमें ६ रात्रिमें ५ ॥ और शुक्रके दिनमें ४ रात्रिमें ३ शनिके दिनमें २ रात्रिमें १ कुलिक हैं ॥ सो कुलिक त्याज्य है ॥ और गुरुसे उक्त इंद्रादि मुहूर्त करिकै काल होता है ॥ और बुधसे उक्त इंद्रादि मुहूर्तकरिके कंटक, होता है, और शुक्रसे यमघंट होता है यह त्याज्य है ॥ २० ॥

**शुक्रेंद्वीज्ययमेषुगोंकरविभूतुल्यामुहूर्तादिवादुष्टाःस्युःकुजनिश्य-गोयइतरेसंत्यर्द्धयामादिषु ॥ प्रेक्ष्यःसंप्रतिवृद्धितुर्यचरणेब्रह्मद्विती-येऽपमःसूर्याद्याअनुविश्वपाशियमलेंद्वह्यर्कभैर्मृत्युदाः ॥ २१ ॥**

अथदुर्मुहूर्तानाह । शुक्रेंद्वीज्येति । शुक्रःप्रसिद्धः इंदुश्चंद्रः ईज्योगुरुः यमःशनिः एषुक्रमेणगोंकरविभू तुल्यामुहूर्तादिवादुष्टाःस्युः दुर्मुहूर्ताइत्यर्थः । कुजनिशिअगःसप्तमोमुहूर्तोदुर्मुहूर्तः । ग्रंथांतरे "अर्यम्णोर्केतुहिनकिरणेराक्षसब्राह्यसंज्ञौ" इत्यादिबहवोदुर्मुहूर्ता उक्ताः । अत्रस्वल्पाउक्तास्तेषांपरिहारमाह । यइतरेदुर्मुहूर्ताग्रंथांतरेपठितास्तेसर्वेअर्द्धयामादिषुसंति अतोत्रमयानोक्ताः यतअर्द्धयामादीनांत्यागेतेपित्यक्ताःस्युः । किंग्रंथविस्तरेणेतिभावः । एतत्तुसुज्ञाज्ञास्यंति यथारवौचतुर्दशोमुहूर्तोदुर्मुहूर्तः कुलिकोपिचतुर्दशोमुहूर्तः तयोरेकत्रसद्भावइत्यन्येपिविचारगम्याः । नन्वेवंचेत्तर्हिपूर्वैर्व्यर्थंपठितमेवंतैस्त्वनधिकाधिकदोषविवक्षयोक्तमितिनदोषः । अथपातसंभवकालमाह । प्रेक्ष्यइति । संप्रतिसांप्रतं वृद्धितुर्यचरणेवृद्धियोगस्यचतुर्थचरणे तथाब्रह्मद्वितीयेब्रह्मयोगस्यद्वितीयचरणे अपमःक्रांतिःपातोविलोक्यः ब्रह्मसिद्धांताद्युक्तप्रकारेणविलोक्यइत्यर्थः । अथमृत्युं सर्वत्रवर्जयेदित्युक्तत्वान्मृत्युयोगमाह । सूर्याद्याइति । सूर्याद्या अर्कादयः क्रमेणान्वादिभिर्नक्षत्रैःसहमृत्युदाःस्युः। अनुअनुराधा विश्वेउत्तराषाढा पाशीशततारका यमलौअश्विनी इंदुर्मृगः अहिराश्लेषा अर्कभंहस्तः । एतदुक्तंभवति । अर्कःअनुराधयासहयुक्तोमृत्युदः सोमउत्तराषाढया भौमःशततारकया बुधःअश्विन्या गुरुर्मृगेण शुक्रःआश्लेषया शनिर्हस्तेनसहितोमृत्युदःस्यादित्यर्थः । मृत्युयोगापवादमाह "विरुद्धयोगास्तिथिवारजाता नक्षत्रयोगप्रभवाश्चयत्र । हूणेषुवंगेषुखसेषुवर्ज्याः सर्वेषुदेशेषुनतेनिषिद्धा" इतिरत्नमालायाम् ॥ २१ ॥

### अब दुर्मुहूर्तोंको कहतेहैं ।

भा०–शुक्र, चंद्र, गुरु, शनि इन्हीं ग्रहोंके दिनोंमें क्रमसे ये ९ । ९ । १२ । १ । मुहूर्त दुष्ट होवे हैं ॥ और भौमवारकी रात्रिमें सातमा ७ मुहूर्त दुष्ट है ॥ और अन्य दुष्ट मुहूर्त अर्द्धयामादिकोंमें आजाते हैं जिससे कहे नहीं हैं ॥ अब पातसंभवकाल कहवे हैं ॥ वृद्धियोगके चौथे ४ चरण में और ब्रह्मयोगके दूसरे २ चरणमें क्रांतिनाम पात देखणा ॥

### अब मृत्युयोगको कहतेहैं ।

भा०–अनुरा० उत्तराषा० शतभि० अश्वि० मृग हस्त ये नक्षत्र क्रमसे सूर्यादिवारोंके दिन होंय तो मृत्युयोग होय ॥ २१ ॥

**पंचाश ५० जिन २४ खाग्नयश्च ३० खकृता ४० आखंडला १४ मूर्च्छना २१ त्रिंश ३० द्विंश २० रदाः ३२ खराम ३० नख-**

२० धृत्ये १८ काश्विनौ २१ विंशतिः २० ॥ शक्रें १४ द्रौ १४ दश १० वासवा १४ रसशराः ५६ सिद्धा २४ नखा २० शा १०दिशो १०धृत्य १८ष्टी १६ जिन२४खाग्नयो ३० श्वितइमाभ्योऽग्रेऽब्धिनाड्योविषम् ॥ २२ ॥

अथविषघटिकाआह । पंचाशदिति । अश्वितःसकाशात्नक्षत्रेषुइमाभ्यः पंचाशज्जिनेत्यादिभ्योघटिकाभ्योअग्रेपरतोऽब्धिनाड्यश्चतुर्नाड्योविषंस्यात् । एतदुक्तंभवति । अश्विन्याःपंचाशत्घटिकाभ्योनंतरंचतुर्नाड्योविषम् एवमन्यत् । अत्रांकन्यासएव व्याख्यानम् ॥ २२ ॥

अब विषघटी कहतेहैं ।

भा०—जैसे—अश्विनीनक्षत्रके पचास घडीके बादकी चार घडी विषघटी हैं—ऐसेही भरणीनक्षत्रादिकोंके क्रमसे २४ । ३० । ४० । १४ । २१ । ३० । २० । ३२ । ३० । २० । १८ । २१ । २० । १४ । १४ । १० । १४ । ५६ । २४ । १० । १० । १८ । १६ । २४ । ३० इन घडियोंके परेकी ४ चार घडी विषघटीहैं ॥ २२ ॥

नक्षत्रस्यगतैष्ययोगगुणितःस्वस्वध्रुवःषष्टिहृत्स्पष्टःस्यादतऊर्ध्वमब्धिघटिकाःस्पष्टाःस्युरेवंकृताः ॥ चंद्रःसौम्यभगोथवाशुभसुहृद्दृष्टोथवास्वांशगःकोणा ५ ।९ स्ता ७ भ्र१० सुखे ४ ष्वपि विषभयं हंतीहसांगेऽगपः ॥ २३ ॥

अथैषांध्रुवकानांस्पष्टीकरणमाह । नक्षत्रस्येति । नक्षत्रस्यगतैष्ययोगेनगुणितःस्वस्वध्रुवःषष्टिहृत्स्पष्टःस्यात् । अतऊर्ध्वंस्पष्टध्रुवानंतरम् अब्धिघटिकाश्चतुर्नाड्योविषंस्यात् । एतदुक्तप्रकारेणकृताःसत्यःस्पष्टाःस्युः एतदुक्तंभवति । ध्रुवकचतुर्नाड्योपिनक्षत्रगतैष्ययोगगुणिताःकार्याः षष्टिहृताःकार्याःताःस्पष्टाःस्युः । स्पष्टानंतरंचतुर्नाड्योविषाख्याज्ञेयाः । अथविषघटीनामपवादमाह। चंद्रइति । चंद्रःसौम्यभगःशुभग्रहराशिगःसन्विषभयं हंति अथवा शुभसुहृद्दृष्टःशुभश्चासौसुहृच्चतेनदृष्टःसन्विषभयंहंति अथवा स्वांशगः स्वनवांशेवर्तमानःसन्विषभयंहंति वाइत्यथवाकोणास्ताभ्रसुखगोपिचंद्रोविषभयंहंति । कोणे पंचमनवमे अस्तभंसप्तमम् अभ्रंदशमं सुखंचतुर्थम् एतत्स्थानगोपिचन्द्रोविषभयंहंतीत्यर्थः । अत्रास्मिन्कोणादिस्थानेसांगेलग्नेवर्तमानोंगपोलग्नपोविषभयंहंतीत्यर्थः । एवंपंचभंगाःसन्ति।ननुसप्तमःखेटोविवाहेनिंदितः कथमत्रचंद्रोगृहीतः।सत्यम्।इदंवाक्यंसर्वकर्मसाधारणं तस्मान्निंदितंस्थानंवर्जयित्वान्यत्रग्राह्यः । तथाच बृहस्पतिः "चन्द्रोविषघटीदोषं हंतिकेंद्रत्रिकोणगः । लग्नंविनाशुभैर्दृष्टः केंद्रेवालग्नपेतथा" ॥ फलप्रदीपे "विषनाड्युत्थितंदोषंहंतिसौम्यर्क्षगःशशी । मित्रदृष्टोथवास्वीयवर्गस्थोलग्नपोपिच" ॥ २३ ॥

## अब आगे इन्हीं ध्रुवोंका स्पष्ट करणा कहतेहैं।

भा०-नक्षत्रके ध्रुवके नक्षत्रका भुक्त भोग्यसे गुणकर ६० साठका भाग देणा जिससे ध्रुव स्पष्ट होताहै; स्पष्टध्रुवके बादकी ४ घडी विषसंज्ञक हैं. ऐसे ध्रुववत् चारघडियोंका विस्तरही भाव होताहै ॥

## अथ विषघटीपरिहारः।

भा०-चंद्रमा शुभग्रहके घरमें होयतो विषघटीका दोष नहीं होय ॥ अथवा चंद्रमाको शुभग्रह वा मित्रग्रह देखता होवेतो विषघटीका दोष नहीं होय, अथवा चंद्रमा अपने नवांशमें होयतो दोष नहीं होय ॥ और ९।५।७।१०।४। १ इन्ही स्थानोंमें लग्नपति होवेतो विषघटीका दोष नहीं होय ॥ २३ ॥

लग्नेचंद्रखलारिपौशशिसितौसर्वेद्युनेखेबुधोऽब्जोंऽत्येगुःसुखगोष्टमाः कुजशुभाःशुक्रस्तृतीयःशुचे॥लाभेसर्वखगाःशुभाअखिलगाक्रूरयष्टारिगाःस्युःखलाश्चंद्रक्र्यंबुधनेश्रियैंशभदृगेदृस्यान्मृत्यवेष्टारिगः।२४।

अथविवाहलग्नेइष्टानिष्टग्रहानाह। लग्नेचन्द्रखलाइति। चन्द्रश्चखलाश्चतेचन्द्रखलाः लग्नेवर्तमानाःशुचेशोकायभवंति। तथारिपौषष्ठेशशिसितौचन्द्रशुक्रौ तथासर्वेद्यूनेसर्वक्रूरसौम्याःद्यूनेसप्तमे तथाखेदशमेबुधः तथाअब्जश्चंद्रोऽत्ये अगुःराहुःसुखगश्चतुर्थेगः नविद्यंतेगावःकिरणाःयस्येत्यगुःराहुः"तमोगुरसुरश्च"इतिबृहज्जातकेराहुनामानि। तथाअष्टमाःकुजशुभाःकुजश्चशुभाश्चतेतथा शुक्रस्तृतीयइतिस्पष्टार्थः। एतेप्रत्येकमुक्तस्थानगाःशुचेशोकायभवंति। अथइष्टानाह। लाभइति। लाभेएकादशेसर्वखगाः तथा सौम्याःशुभग्रहाः अखिलगानिंद्यंविनासर्वस्थानगाः तथाखलाःक्रूरारुयष्टारिगास्तृतीयाष्टषष्ठगाः तत्रअष्टमेभौमोनिंदितः तंविनापापाअष्टमाग्राह्याः चंद्रक्र्यंबुधने तृतीयचतुर्थद्वितीयेचंद्रः एतेप्रत्येकंश्रियैलक्ष्म्यैभवंति। श्रीकारकाइत्यर्थः। एवंशुभाशुभग्रहानुक्त्वातत्रविशेषमाह। अंशभदृगेदृअष्टारिगः सन्मृत्यवेस्यात् अंशोनवांशः भंलग्नं दृक्दृक्काणः एषामिट्स्वामी नवांशस्वामी लग्नस्वामी द्रक्काणस्वामी एतेप्रत्येकमष्टषष्ठगाः मृत्युहेतवो भवंतीत्यर्थः॥ २४ ॥

## अथ विवाहलग्नशुद्धिः।

भा०-लग्नमें चंद्रमा और पापग्रह होंयतो शोच करावें ॥ ऐसे चंद्रमा ने शुक्र छठे होय और सारा ग्रह सातमें होंय-तथा १० दशमें बुध होय-तथा १२ बारमें चंद्रमा होय-राहु४चोथे होय-भौम और शुभग्रह ८ आठमें होंय ॥ शुक्र ३ तीजो होय तथापि शोच करावै। सर्वग्रह ११ ग्यारमें होय और शुभग्रह बुरे स्थानोंमें नहीं होवें-क्रूरग्रह ३।८।६। इन्हीं स्थानोंमें होवें परंतु भौम आठमें नहीं होवेतो शुभ होय ॥ और चंद्रमा ३।४।२। यहां होवेतो ये प्रत्येक लक्ष्मीयोग करैहैं ॥ और यदि नवांशस्वामी, लग्नपति, द्रेष्काणपति ये ८। ६। इन्हीं स्थानोंमें होवेंतो मृत्यु होय ॥ २४ ॥

कन्यार्तौक्षिकशत्रुगेहगभृगुःषष्ठोपिनोभंगकृद्भौमोमृत्युगतोपिशत्रु-
शशिनोर्गेहस्थितोवार्कगः॥ शुक्लेंत्यारिविधुःसुवर्गदृगितःस्वोजो-
युजीज्येतनौशुक्रेवाशुभदोथकंटकनिजांशेज्येक्षितःसग्रहः ॥२९॥

अथकतिचिद्दोषाणामपवादमाह । तत्रप्रथमंभृगुषष्ठापवादमाह । कन्यार्तौक्षिकेति । कन्याप्रसिद्धा शुक्रस्यनीचं तौक्षिकोधनुर्धरः शत्रुगेहंपूर्वोक्तं"भृगुसुवःशशूरवींदू" इति तत्र रवेर्गृहंसिंहः इंदोर्गृहंकर्कः एषांकन्यादीनामन्यतमगेहगतोभृगुःषष्ठोपिनोभंगकृत्स्यात् लग्नभंगकरोनभवतीत्यर्थः । तथाच कश्यपः "नीचगेतुतुरीयेवाशत्रुक्षेत्रगतेपिवा । भृगुषष्ठोद्भवोदोषोनास्तीत्यत्रनसंशयः ॥" अथकुजाष्टमदोषापवादमाह । भौमोमृत्युगतोपिशत्रुशशिनोर्गेहस्थितोयदिभवति । वाइत्यथवा अर्कगःअस्तंगतोपियदिभवति तदानोभंगकृत्स्यात् अस्यशत्रुर्बुधः। कुजस्यविदरीरितिप्रागुक्तस्तस्यगृहंकन्यामिथुनंच । शशिगृहंकर्कटस्तस्यनीचम् एषामन्यतमस्योस्तंगतोवा अष्टमगतोपिवालग्नभंगकरोनभवतीत्यर्थः ॥ "अस्तगेनोच्चगेभौमेशत्रुक्षेत्रगतेपिवा । कुजाष्टमोद्भवोदोषोनकिंचिदवशिष्यत" इति ॥ अथद्वादशषष्ठचंद्रापवादमाह । शुक्लेति । शुक्लेशुक्लपक्षेअंत्यारिविधुःद्वादशः षष्ठश्चंद्रःसुवर्गदृगितः वर्गाश्चदृशश्चवर्गदृशःशोभनानांवर्गदृशःसुवर्गदृशः ताइतः प्राप्तः सुवर्गदृगितः शुभवर्गेशुभदृष्टियुक्तइत्यर्थः । एवंविधोविधुः शुभदःस्यात् । कस्मिन्सति इज्ये गुरौशुक्रेवातनौलग्नेसति।कथंभूतेगुरौ स्वोजोयुजि सुतराम् ओजः स्वोजः उत्कृष्टबलंतेनयुनक्तीतिस्वोजोयुक्तस्मिन्स्वोजोयुजि अतिबलिष्ठेसतीत्यर्थः।शुक्रस्याप्येतद्विशेषणम् । एतदुक्तंभवति। बलिष्ठेगुरौशुक्रेवालग्नस्थेसतिशुक्लपक्षेचंद्रमा सुवर्गदृष्टिसहितः यदिभवति तदाद्वादशषष्ठगोपिशुभदइतिभंगकरोनस्यात् अन्यथा न। मुहूर्तदर्पणे "कवौगुरौवाबलिनि स्थितेतनौशुभेनदृष्टःशुभवर्गगःशशी ॥ विवर्धमानःशुभकृद्धनाशुभंकरोतितिष्ठन्नपिरिःफषष्ठयोः" इति। अथसग्रहचंद्रदोषापवादमाह।सग्रहःग्रहेणग्रहाभ्यांग्रहैर्वासहवर्तमानःसग्रहः बुधगुरुवर्ज्यअन्यग्रहयुक्तइत्यर्थः । यतःपूर्वमुक्तम् "हिमरुचिर्ज्ञेज्योनखेटान्वितम्" इति। एवंविधःसग्रहोविधुःकेंद्रनिजवर्गेज्येक्षितःसन्शुभदःस्यात् । केंद्रंप्रसिद्धम् निजवर्गोनिजांशस्तत्रवर्तमानःइज्यःतेनईक्षितःअवलोकितःसग्रहःचंद्रमाःशुभदः भंगकरोनस्यात् । उक्तंच "गुरुःस्वकीयवर्गस्थोबलवान्कंटकाश्रितः । पश्यन्सग्रहशीतांशुंतद्दोषंविलयंनयेत्" इति ॥ २९ ॥

## अब कइक दोषोंका अपवाद कहतेहैं ।

भा०-जो शुक्र कन्या, सिंह, कर्कका छठे स्थानमें होय तो छठे स्थानका दोष नहीं करै अर्थात् लग्नभंग नहीं करै ॥ और भौम शत्रुके घरका होके वा कर्कका वा सिंहका होके ८ आठमें होय तो आठमेंका दोष नहीं होय ॥ जो गुरु वे शुक्र बलवान् होके लग्नमें होय और शुक्लपक्षमें चंद्रमा शुभवर्गका और शुभदृष्टियुक्त होय तो बारमे स्थानका

और छठेस्थानका दोष नहीं करै ॥ और चंद्रमाको स्ववर्गगत गुरु देखता होय तो ग्रहयुक्त चंद्रका दोष नहीं होय ॥ २५ ॥

**दोषाणांशतमिंदुजःशतयुगंशुक्रोगुरुर्घातयेल्लक्षंकंटककोणगोंगमिनचंद्रौजस्विपातादिकान्॥ भंगायेविबलानतेत्रसफलाःसंध्यंशतुल्योऽफलःस्याद्भावांशसमोग्रहोखिलफलःसंध्यूर्ध्वगःस्यात्परः२६**

अथसामान्यदोषापवादमाह। दोषाणामिति। कंटककोणगःकेंद्रकोणगः इंदुजो बुधोदोषाणांशतंघातयेत् तत्स्थः १, ४, ५, ७, ९, १०, शुक्रःदोषाणांशतयुगंद्विशतं घातयेत् तत्स्थः १, ४, ५, ७, ९, १०, बृहस्पतिःदोषाणांलक्षंघातयेत्। अपवादांतरमाह। अंगंलग्नमिनचंद्रौजस्विपातादिकान्घातयेत् इनचंद्रयोःसूर्यचंद्रयोः ओजोबलमस्यास्तीतिइनचंद्रौजस्वि एवंविधंलग्नंपातादिकान् घातयेत्। उक्तंचवसिष्ठेन "एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयादिदोषाः। नश्यंतिचंद्रार्कबलोपपन्नेलग्नेयथार्काभ्युदयेंधकारः" इति। अथदोषापवादभंगमाह। भंगाइति। येभंगादोषभंगाविबलागतबलानिर्बलास्तेत्रदोषभंगविषयेसफला न भवंति। दोषभंगसमर्थानभवंतीत्यर्थः। तस्माद्दोषभंगकृतांबलंविचार्यदोषभंगमादिशेदितिभावः। उक्तंच "सामान्येनोदितादोषाभंगास्तेषांतुतद्विदैः। यदितेबलहीनाःस्युःप्रध्वंसाभावतांययुः"। अथभावशुद्धिमाह। संध्यंशतुल्योफलइति। संध्यंशतुल्यःसंधिभागसमानोग्रहोऽफलःस्यात् सदसत्फलदो नभवति। भावांशतुल्योग्रहोखिलफलदःस्यात् संपूर्णफलदोभवति। अर्थान्मध्येऽनुपातात्फलंवेद्यम्। विशेषफलमाह। संध्यूर्ध्वगःस्यात्परइति। संध्यूर्ध्वगःसंध्यंशाधिको ग्रहःपरः स्यात्। परभावफलदःस्यादित्यर्थः॥ २६ ॥

**अब सामान्यदोषोंका अपवाद कहतेहैं।**

भा०-केंद्र १।४।७।१० में और त्रिकोण ९।५ में बुध होयतो एकशत १०० दोषोंका नाश करै॥ और उक्तस्थानोंमें शुक्र होयतो द्विशत २०० दोषोंका नाश करताहै॥ और उक्तस्थानोंमें गुरु होवेतो लक्ष दोष नष्ट होतेहैं ॥ अब दूसरा अपवाद कहते हैं॥ यदि लग्न सूर्य चंद्रसे बलवान् होय तो पातादिकदोष नष्ट होते हैं॥ और दोषभंगकरनेवाला ग्रह निर्बल होयतो दोषभंग नहीं करता है॥ अथभावशुद्धिः॥ जो ग्रह संधिके अंशतुल्य होयतो निष्फल होता है॥ और भावके अंशतुल्य होयतो संपूर्ण फल देता है॥ और संधिके ऊपर होयतो द्वितीयभावका फल देवै है॥ २६ ॥

**भागाःस्युर्नतनाडिकारसहतास्तद्धीनयुक्प्राक्परे सूर्यःखंसरसंसुखंकथितवल्लग्नंसषड्भंमदः॥ व्यस्ताभ्रत्रिलवोऽथदृक्च्युतउभौयोज्यौकुदृग्घ्नौपृथग्लग्नेचांबुनितेसषट्तनुसुखाःसंधिर्द्वियोगोर्द्धितः॥**

**पाठांतरम्-व्यस्ताभ्रारिलवोथभूच्युतइमौभूयोंगपातालयोःक्षेप्यौ षट्र तनुतःससंधयइमेषड्भान्विताःस्युःपरे ॥ २७ ॥**

संध्यंशतुल्यइत्याद्युक्तंतत्रकेतेसंधयःकेतेभावाइत्यपेक्षायांतत्साधनंकिंचित्स्थूलमेके-नवृत्तेनाह। भागाःस्युरिति। नतनाडिकारसहताभागाःस्युः। नतसाधनंजातकपद्धता-वुक्तं "रात्रेःशेषमितंयुतंदिनदलेनाह्नोगतंशेषकंविश्लेष्यंखलुपूर्वपश्चिमनतं त्रिंशच्च्युतं-चोन्नतम्" इति एतदुक्तंभवति सूर्येष्टकालाभ्यामिष्टकालंसाधयित्वानतंचसाधयित्वात-दिष्टकालभवंनतंषड्गुणंनतभागाःस्युरित्यर्थः। प्राक्पश्चिमेनतेनक्रमेणतद्धीनयुक्सूर्यः तैर्भागैर्न्यूनयुक्पूर्वनतेसतिन्यूनःपश्चिमनतेसतियुक्युक्तः तात्कालिकःसूर्यःखंस्यात्। दशमभावः स्यादित्यर्थः। तत्खंदशमभावं सरसंषड्राशियुक्तंसत्सुखंचतुर्थभावःस्यात् कथितवल्लग्नंप्रोक्तवल्लग्नंज्ञेयम्। तत्सषड्ंं षड्राशियुक्तंसत्मदःसप्तमभावः स्यात्। एवं भावचतुष्टयंसाधयित्वाअंतर्भावसाधनमाह व्यस्ताभ्रत्रिलवइति। विगतः अस्तः सप्तम-भावोयस्मात्तत्व्यस्तंतच्चतदभ्रंच व्यस्ताभ्रंसप्तमभावरहितदशमभावइत्यर्थः। तस्यत्रि-लवो राश्यादिकोग्राह्यः अथद्दक्च्युतःद्विपतितःकार्यः एतौउभौकेवलत्रिलवयुक्च्युत-त्रिलवौपृथक्पृथक्कुदृग्घ्नौसंतौपृथक्पृथक्लग्नेअंबुनिचयोज्यौ। अयमर्थः। कुघ्नःत्रिलवो-लग्ने योज्यः सद्वितीयभावोभवति॥दृग्घ्नोलग्नेयोजितःतृतीयभावोभवति। अथद्दक्च्युतः त्रिलवःकुघ्नःअंबुनिपूर्वसाधितेचतुर्थभावेयोजितः पंचमभावोभवति। तत्रैव दृग्घ्नोऽम्बुनि-योजितःषष्ठभावो भवति। तेषडनंतरसाधिताभावाः षड्राशिसहिताःकार्याःतेतुसप्तमा ज्ञेयाः। लग्नंषड्भं मदइतियावत्। तेतुलग्नमुखालग्नादयोभावाःस्युः। अथसंधिसाध-नमाह। संधिर्द्वियोगोर्द्धितइति। द्वयोर्भावयोर्योगःअर्धितः संधिः स्यादितिस्पष्टम्। अथपाठांतरस्य व्याख्या। व्यस्तेति। सप्तमभावरहितस्यदशमभावस्यअरिलवः षड्-भावोराश्यादिकः सपृथक्पृथक् भूच्युतःएकस्मात्पतितः इमौउभौ भूयःवारंवारम् अंगपातालयोःप्रथमचतुर्थभावयोःक्षेप्यौ तनुतःलग्नात् ससंधयःसंधिसहिताःषड्भा-वाःस्युः। इमे भावाः षड्भावान्विताःपरेससंधयोभावाःस्युः। एवंभावसंधिसाधनं कृत्वासंध्यंशतुल्योऽफलइतिप्रागुक्तंग्रहफलंविचार्यम्। अंतरेअनुपातः "भावसंध्यंतरे-णाप्तंखेटसंध्यंतरात् फलम्" इतिजातकपद्धतेः" इति। एतत्स्थूलभावानयनं सूक्ष्म तुजातकपद्धतावगंतव्यम् ॥ २७ ॥

### अब संधिसहित भावसाधन कहतेहैं।

भा०-सूर्य इष्टकालसे इष्टकालको बनाके नतको बना लेना-फेर इष्टकालसे हुईभई नतको ६ छगुणा करणा-तब नतभाग होता है-फेर पूर्वनत होयतो उनसे सूर्यको न्यून करणा-और पश्चिमनत होयतो युक्त करणा। जिससे दशमभाव होय-और दशममें ६ राशि जोडे तो चतुर्थभाव होय। और उक्तरीतिसेही लग्न करणा-लग्नमें ६ राशि जोडतो सप्तम होय। और दशममेंसे सप्तमको निकालना और उनका राश्यादित्रिलव लेना फिर एक जगा त्रिलवको दोयसे निकालना-फेर एकगुणा त्रिलवको लग्नमें जोडनेसे

द्वितीय भाव होय-और छगुणा त्रिलवको लग्नमें जोडनेसे तृतीय भाव होय ॥ और दृकृच्युत त्रिलवको कुग्नकरके चौथाभावमें जोडनेसे पंचमभाव होय ॥ और दृग्नको चौथे भावमें जोडनेसे षष्ठ भाव होय ॥ और लग्नादि छ भावोंमें छराशि जोडनेसे सप्तमादि छ भाव होय ॥

## अथ संधिः।

भा०-दोय भावोंको भेला करिकै आधा करणेसे संधि होय; यह स्थूल साधन है-सूक्ष्म साधन जातक पद्धतिमें देखणा ॥ २७ ॥

**इंदोर्वाहरिजाद्व्ययस्वगतयोःस्यात्क्रूरयोः कर्तरीस्वेवक्र्यंत्यऋजु-र्महत्यथगुरौरिःफेशुभेवातनौ॥ स्वेब्जेसौम्यखगेपिवागुरुभृग्विज्ञैःकें-द्रकोणेषुवाचेत्स्तःकर्तरिकारकौदिविचरौनीचस्थितौसानहि २८**

अथकर्तरीदोषलक्षणंसापवादंवृत्तेनाह। इंदोर्वेति। इंदोश्चंद्रात्सकाशात् वाइत्यथवा हरिजाल्लग्नात्सकाशात् व्ययस्वगतयोः व्ययोद्वादशंस्वंद्वितीयंतदुभयत्रगतयोः क्रूरयोः पापग्रहयोःसतोःकर्तरीस्यात्। अथमहाकर्तरीलक्षणमाह। स्वेद्वितीयेस्थितः क्रूरःयदिवक्रीस्यात् अंत्येद्वादशेस्थितःक्रूरोऋजुर्मार्गगामीस्यात् तदामहतीकर्तरीं स्यात्। एवंकर्तरीलक्षणमुक्त्वातद्भंगमाह। गुरौरिःफेमांत्येसतिसाकर्तरीनस्यादेवेत्येको भंगः। वाइत्यथवा शुभेगृहेबुधगुरुशुक्राणामन्यतमेतनौलग्नेसतिसानेतिद्वितीयोभंगः। स्वेद्वितीयेअब्जेचंद्रेसतिसानेतितृतीयोभंगः। वाइत्यथवा सौम्यखगेद्वितीयेसतिसानेंतिचतुर्थोभंगः। वाइत्यथवा केंद्र १, ४, ७, १० त्रिकोणेषु ५, ९ भृगुविदीज्यैःशुक्रबुधगुरवःतैःसद्भिः। कालाद्वेतिसप्तम्यर्थेतृतीया। साकर्तरीनस्यादेवेतिपंचमोभंगः। वाइत्यथवा कर्तरिकारकौक्रूरौदिविचरौनीचस्थितौयदास्यातांतदासानस्यादितिषष्ठोभंगः। हिअवधारणे ॥ २८ ॥

## अब सापवादकर्त्तरीदोषके लक्षणको कहतेहैं।

भा०-लग्नसे वा चंद्रसे २ दूजे १२ बारमें पापग्रह होयतो कर्तरीयोग होय ॥ और द्वितीयस्थानमें क्रूरग्रह वक्र होके होय-द्वादशमें पापग्रह मार्गी होके होवैतो महाकर्तरी होय ॥

## अथ कर्तरीभंगः।

भा०-द्वादशमें गुरु होयतो कर्तरीका दोष नहीं होय और लग्नमें शुभग्रह होयतो कर्तरीभंग होय-और दूजे चंद्र होयतो कर्तरीभंग होय-अथवा द्वितीयस्थानमें सौम्यग्रह होयतो कर्तरीभंग होय। और केंद्रत्रिकोणमें १।४।७।१०।५।९। गुरु वा शुक्र वा बुध होयतो कर्तरीभंग होय-अथवा कर्तरीकारक क्रूरग्रह नीचके होवैंतो कर्तरीभंग होता-है. ऐसे छः प्रकारसे कर्तरीका भंग होता है ॥ २८ ॥

लग्नंसेततिथिग्रहैर्हृदिभहग्वेदर्तुभूशेषकैरोगाग्नीनहरात्ययास्त्यजरुजंरात्र्यर्कमौंजीषुच॥ अग्निंभौमगृहद्युषुद्युशनिसेवेंदुष्विनंहारमीज्यारेतिष्वपरंविवाहसितवित्संध्यासुहीनेतनौ ॥ २९ ॥

अथपंचकदोषंसापवादमाह । लग्नमिति । लग्नमिष्टलग्नं सेततिथि इताचासौतिथिश्च इततिथिःगततिथिः तयासहवर्तमानंसेततिथि ग्रहैर्हृत्नवभक्तंकार्यम् इभहग्वेदर्तुभूशेषकैः इभाअष्टौ दृशौद्वे वेदाश्चत्वारः ऋतवःषट् भूरेकः एतन्मितैःशेषकैःकृत्वाक्रमेणरोगाग्नीनहरात्ययाःस्युः । रोगःप्रसिद्धः अग्निःप्रसिद्धः इनोराजा "राजाधिपःपतिःस्वामीनाथःपरिवृढःप्रभुः ॥ ईश्वरोविभुरीशानोभर्त्तेंद्रइनईशिता" इतिधनंजयः । हरश्चौरः अत्ययोमृत्युः एतेपंचकाःस्युरित्यर्थः । एतदुक्तंभवति । लग्नंशुक्लप्रतिपदादिगततिथियुक्तंकृत्वानवभिर्हृत्वा अष्टशेषेरोगः द्विशेषे अग्निः चतुःशेषेराजा षट्शेषेचौरः एकशेषेमृत्युः। अथैतेकुत्रवर्ज्याइत्याह । रात्र्यर्कमौंजीषुरुजंत्यज रात्रौ अर्केआदित्यवारे मौंज्यां रुजं त्यज । भौमादयःप्रसिद्धास्तेषु द्युशनिसेवेंदुषुइनंत्यज द्युर्दिवा शनिःशनिवारः सेवास्वाभिसेवनं इंदुःसोमवारः एषुइनंराजानंराजपंचकंत्यज । ईज्यारेतिषुहारंत्यज चौरंत्यज ईज्योगुरुवारः आरोभौमवारः इतिर्गतिर्यात्रेतियावत् आसुचौरंत्यजेत्यर्थः । विवाहसितवित्संध्यासु अपरमुर्वरितं मृत्युमित्यर्थः । विवाहः प्रसिद्धः सितःशुक्रवारः वित्बुधवारः संध्यासंध्याकालः आसुमृत्युंत्यजेति । अस्यापवादमाह । कस्मिन्सति तनौलग्ने हीनेहीनबलेसति वलिष्ठेलग्नेसतिएषांकिमपिनबाधाइत्यर्थः ।तथाचज्योतिःप्रकाशे "रोगंचौरंत्यजेद्रात्रौदिवाराजाग्निपंचकम् । उभयोःसंध्ययोर्मृत्युमन्यकालेनर्निदितम्" इति। "तत्रापियत्रलग्नंचेद्बलाढ्यंतत्रनिष्फलम्"इति।वलंजातकाज्ज्ञेयं।लघुजातके"अधिपयुतोदृष्टोवाबुधगुरुनिरीक्षितश्चयोराशिः।सभवतिबलवान्नयदायुक्तोदृष्टोपिवाशेषैः" इत्यादि

अब सापवादपंचकदोषको कहतेहैं ।

भा०-शुक्लपक्षकी एकमसे गततिथोंको लग्नमें जोडके नवका भाग देनेसे शेष जो ८ । २ । ४ । ६ । १ रहे तो रोग, अग्नि. राज और मृत्यु-संज्ञक बाण क्रमसे होते हैं ॥ रात्रिमें-आदित्यवारमें-मौंजीमें रोगबाण नहीं लेणा और भौमवारमें-दिनमें-गृहमें अग्निबाण त्याज्य है, शनिवारमें-दिनमें-नोकरीमें चंद्रके दिनमें राजबाण त्याज्य है ॥ गुरुवारमें-भौमवारमें-यात्रामें चौरबाण त्याज्य है ॥ विवाहमें--शुक्रवारमें--बुधवारमें-संध्याकालमें मृत्युबाणको त्याग करणा-जो लग्न बलवान् होय तो दोष नहीं होय--जो लग्न निर्बल होयतो उक्तकालमें त्याग करणा ॥ २९ ॥

जन्मर्क्षोदयतोमृतीतदधिपौतद्भाश्रयेतद्धवस्तद्भंचांगगमंतकृत्खलुनचेत्तत्स्वामिमित्रैकता॥ शस्तोंशोघटभीरुयुग्मधनुषांविज्ञास्तभांशौतथाचन्द्रापुण्ययुतोमृतिंवितनुतोदैन्यंचहीनौजसः ॥३०॥

अथभवनांशयोः शुद्धिंसापवादमाह । जन्मक्षति । जन्मर्क्षोदयतः जन्मराशिजन्मलग्नाभ्यांसकाशात् तृतीयेअष्टमभवनेयौतदधिपौतयोर्मृत्युभवनयोः स्वामिनौयेचतद्गामृत्युभवनगताः स्युः तेषाम् अंशोनवांशःअंगगोलग्नगतः च परंतेषांभंराशिः अंगगंलग्नगतंसत्तदाखलुनिश्चयेनअंतकृतम्मरणकृत्स्यात् । तदाकदा चेद्यदितत्स्वामिमित्रैकतानस्यात् । तयोर्जन्ममृत्युभवनयोःस्वामिनौतत्स्वामिनौतयोः । अथवायमर्थः । तयोर्जन्मानिंद्यभयोःस्वामिनौतत्स्वामिनौतयोर्यदिमित्रैकतानस्यात् । मित्रंचएकश्च मित्रैकौमित्रैकयोर्भावोमित्रैकतासाचेन्नस्यात् । अनेनसर्वस्योक्तस्यसार्थकताभवति । यदितयोर्मित्रतास्यात् । अथवा एकतास्यात्तदानायंदोषइत्यर्थसिद्धम् । वसिष्ठः "यस्याष्टलग्नेतदधीश्वरेवाराशौतदीशेथविलग्नगेवा।समृत्युमाप्नोतितदामनोजस्त्रिनेत्रभालाग्निकवह्निनेव" इति । अन्यच्च "जन्मर्क्षजन्मलग्नाभ्यांरंध्रेशावष्टमौचयौ। विलग्नसंस्थितानेतांस्तद्राश्यंशानपित्यजेत्" इति । चूडामणौ "लग्नंव्यलिवृषंत्याज्यमष्टमंसर्वकर्मसु । तत्राप्येकेशवास्त्येवततस्तन्नैवदोषकृत् ॥ नदोषोष्टमलग्नस्ययदिजन्मेशरंध्रपौ । सुहृदौचेत्तदा कार्यमंगलंमुनयोविदुः" इति । चतुर्थद्वादशभवनयोःदोषोनात्रोक्तः । यत "चतुर्थद्वादशं लग्नंशस्तंयदिगुणान्वितम्" इति । पूर्वाचार्यमतंहृदिधृत्वासगुणमेवांगीकृतम् तत्पुरस्ताद्व्यक्ष्याति । नचतनुंपंचेष्टखेटोनितांतनुंलग्नमिष्टाश्चतेखेटाश्चइष्टखेटाःपंचचतेइष्टखेटाश्चपंचेष्टखेटाःइष्टग्रहैः पंचभिःशुभदैः इष्टैरूनितंहीनंलग्नंचेद्देदवर्गोनितामिति सगुणस्यैवांगीकारात् किंव्यर्थविस्तरेणेतिभावः । अंशशुद्धिमाह । शस्तोंशइति । घटयुग्मभीरुधनुषामअंशःशस्तःस्यात् घटस्तुला युग्मंमिथुनं भीरुःकन्या धनुःप्रसिद्धम् एषामंशोनवांशःप्रशस्तःस्यात् । तत्रापिविशेषमाह । विज्ञास्तभांशाविति । विगत ज्ञोबुधोयेभ्यस्ते विज्ञाःतेचतेअस्ताश्चतेषांभांशौराशिनवांशौमृतिंवितनुतः।अर्थादस्तमितस्यापिबुधस्यभांशौदोषकरौनभवतः।तथाचंद्रापुण्ययुतौ चंद्रेणपापग्रहेणवायुक्तौभांशौम्‍मृतिंमरणंवितनुतः कुरुतः वधूवरयोरितिशेषः । हीनौजसोनिर्बलस्यभांशौदैन्यंदीनतांवितनुतः ॥ ३० ॥

## अब भवनांशकी शुद्धिको सापवाद कहतेहैं ।

भा०-जन्मसे वा जन्मराशिसे ८ आठसा स्थान वा उन्होंके स्वामी वा आठमें रहणेवाले ग्रह-इन्होंके नवांशका लग्न होय वा इन्होंकी राशि लग्नमें होयतो मृत्यु करै और जो जन्मलग्न और मृत्युभवनके स्वामियोंकी मित्रता और एकता नहीं होय तो मृत्यु करै ॥ अर्थात् मित्रता वा एकता होयतो दोष नहीं होय । और ७ । ६ । ३ । ९ इन्होंका नवांश श्रेष्ठ होय और बुधविना अस्तग्रहोंकी राशि और नवांश लग्नमें होय तोभी मृत्यु करै ॥ अर्थात् अस्तबुधकी राशि नवांश लग्नमें होयतो दोष नहीं होय ॥ और चंद्र वा पापग्रहोंसे युक्त लग्न और नवांश होवै तो मृत्यु देवै और निर्बलग्रहके लग्न और नवांश होयतो दीनता करै ॥ ३० ॥

**नोवर्गोत्तमतोविनांतिमलवंदद्याच्चरर्क्षेचरंचंद्रेतौलिमृगास्यगेनच तनुंपंचेष्टखेटोनिताम् ॥ मेषादिष्वजनक्रतौलिककुलीराद्यानवांशाःक्रमादिष्टात्पूर्वनवांशकाद्दशहतात्त्र्याप्ताल्लवाद्यातनुः ॥ ३१ ॥**

अथविशेषांतरमाह । नोवर्गोत्तमतइति । वर्गोत्तमतःवर्गोत्तमेनविनाअंतिमलवंचरमनवांशंनोदद्यात् यल्लग्नंसएवनवांशोवर्गोत्तमः तथाचरर्क्षेचरलग्नेचरंनवांशंनोदद्यात् कस्मिन्सति चंद्रेतौलिमृगास्यगेतुलामकरगेसति एतच्चरत्रयप्रयोगंनोदद्यादित्यर्थः । अत्र चरचतुष्टयमध्येचंद्रेतौलिमृगास्यगेइत्येवोक्तं तन्मेषकर्कटयोर्विवाहनक्षत्राभावात् तथातनुंलग्नंपंचेष्टखेटोनितांनोदद्यात् यत्रलग्नेपंचइष्टग्रहाःनभवंतितल्लग्नंनदेयमित्यर्थः । अथेष्टनवांशाल्लग्नसाधनमाह । तत्रतावन्मेषादिषुआद्यांशानाह । मेषादिष्विति । मेषादिषुअजनक्रतौलिककुलीराद्यानवांशाःक्रमेणोक्ताः। तद्यथा मेषअजाद्याःमेषाद्याः वृषेनक्राद्यामकराद्याः मिथुनेतौलिकाद्याःतुलाद्याः कर्कटेकुलीराद्याःकर्कटाद्याः एवंपुनः सिंहेमेषाद्याः कन्यायांमकराद्याः तुलायांतुलाद्याः वृश्चिकेकर्काद्याः पुनर्धनुषिमेषाद्याःमकरेमकराद्याः कुंभेतुलाद्याः मीनेकर्काद्याः नवांशाउक्ताइत्यर्थः । इष्टादंशात्पूर्वनवांशकाः गतांशाःदशहताःदशगुणिताः त्र्याप्ताःत्रिभिर्हृताः लवाद्याभागाद्याः तनुःलग्नंस्यात् । अत्रोदाहरणम्।इष्टलग्नंमेषः तत्रमेषादिकाअंशाःप्रवर्तंते इष्टांशःकन्यांशः आद्यात्षष्ठःपूर्वनवांशकःपंच ५ एतेदशहताः ५० त्र्याप्ताःलवादिफलंलब्धम् १६, ४० इष्टलग्नसहितंराश्यादि १६, ४० ॥ ३१ ॥

**और विशेष कहतेहैं ।**

भा०—वर्गोत्तम विना अंत्य नवांश नहीं देणा । और चरराशिका लग्नमें चरनवांश नहीं देणा—और चंद्रमा तुला और मकरका होय और जिस लग्नमें पांच ग्रह अच्छे न होंयतो वह लग्न नहीं लेणा—अब मेषादिमें आद्यनवांशोंको कहते हैं—मेषमें मेषादिक ॥ वृषमें मकरादिक ॥ मिथुनमें तुलादिक ॥ कर्कमें कर्कादिक ॥ ऐसे फेर सिंहमें मेषादिक सर्वत्र जाणो । इष्टअंशसे पूर्वनवांशको १० दशसे गुणके तीन ३ का भाग देणा तब अंशादिक लग्न होय ॥ जैसे इष्टलग्न मेष है—तहां मेषादिक अंश होते हैं—इष्टांश कन्यांश वहां पूर्वनवांश ५ पांच भया, पांचको दशगुणा किया तो ५० पंचाश भया फेर तीनका भाग दिया तो लब्ध लवादिक १६ । १४ भया—यह इष्टलग्नसहित राश्यादिक होते हैं ॥ ३१ ॥

**लग्नांशौस्वपदृग्युतौनृसुखदौवान्योन्यपाढ्येक्षितौताभ्यांसप्तमकौ तथैवयुवतेर्नोचेत्तयोर्मृत्युदौ ॥ द्विघ्नेकोनविलग्नकेरविसितज्ञेंद्वार्किजीवासृजोहोरेशाद्युपतेःखलेह्निखलजानेष्टाशुभेमध्यमा ॥३२॥**

अथोदयास्तशुद्धिमाह । लग्नांशाविति । लग्नांशौलग्ननवांशौ स्वपदृग्युतौस्व-

स्वपतिनादृष्टौयुतौवासंतौ नृसुखदौ वरस्यसुखदौस्यातामू । वाइत्यथवा अन्योन्यपाढ्येक्षितौ अन्योन्यपतिनाआढ्यौईक्षितौवासंतौनसुखदौस्यातामू । इत्युदयशुद्धिमुक्त्वा अस्तशुद्धिमाह । ताभ्यांसप्तमकौतथैवेति । ताभ्यांलग्नांशाभ्यांसकाशात्सप्तमकौसप्तमलग्नतदंशौ तथैवेतिपूर्ववत्स्वपदृग्युतौ युवतेःकन्यायाःसुखदौस्यातां वाइत्यथवा तौसप्तमलग्नसप्तांशकौ अन्योन्यपाढ्येक्षितौयुवतेःसुखदौस्यातामू नोचेत् एवंचेत्तन्नस्यात्तदा तयोर्मृत्युदौस्यातांक्रमेण । अथेष्टकालेहोरासाधनमाह । द्विघ्नेइति । अर्कोनविलग्नके द्विघ्नेकृतेसतिद्युपतेःसकाशातहोरेशाभवंति । तेषांगणनाक्रममाह । तेकेहोरेशाः रविसितज्ञेंद्वार्किजीवासृजःरविःप्रसिद्धः सितःशुक्रः ज्ञोबुधःइंदुश्चंद्रःआर्किःशनिःजीवोगुरुः असृङ्मंगलः खलेद्विपापवारेखलजाहोरानेष्टा शुभेमध्यमास्यात् । अर्थाच्छुभहोराशुभवारेशुभतरा पापवारेमध्यमास्यात् । अत्रोदाहरणं गुरुवारेइष्टार्कः १, २५, ८ इष्टंलग्नमू ४, १०, ०, इदमू अर्कोनमू २,१४,५२ इदंद्विघ्नमू ४,२९,४४ ऊर्ध्वांकसमानागताहोराश्चतस्रः वर्तमानापंचमीहोरा सागणनाक्रमेणद्युपतेर्गुरोः सकाशाद्गणनीया जीवासृजादिगणनयाबुधहोरावर्तना ॥ ३२ ॥

## अब उदयास्तशुद्धिको कहतेहैं ।

भा०-लग्न और लग्ननवांश अपने स्वामीसे दृष्ट होय वा युक्त होयतो वरको सुख देवै ॥ अथवा अन्योन्यपतिसे युक्त वा दृष्ट होयतो वरको सुख देवै ॥ अस्तशुद्धि कहते हैं-लग्न और नवांशसे ७ सप्तम लग्न और नवांश पूर्ववत् स्वपतिसे दृष्ट वा युक्त होयतो कन्याके सुख होय-और सप्तम लग्न और नवांश अन्योन्यपतिसे दृष्ट वा युक्त होयतोभी कन्याके सुख होय ॥

## अब इष्टकालमें होरासाधनको कहतेहैं ।

भा०-लग्नसे सूर्यको निकालके द्विगुण करनेसे इन्हों ग्रहोंकी क्रमसे होरा होय-यह क्रम है सू० बु० चं० श० गु० मं० पापवारमें पापहोरा अशुभ है, शुभमें मध्यम होय ॥ शुभवारमें शुभ होरा अत्यंत शुभ होय ॥ जैसे गुरुवारमें इष्टार्क १ । २५ । ८को इष्टलग्न ४ । १० । ० से निकाला तो २ । १४ । ५२ भया फेर दूणा किया तो ४ । २९ । ४४ भया फेर गुरुसे गणनेसे बुधहोरा भई ॥ ३२ ॥

**लग्नेंद्वोःस्मरगेशुभाशुभखगेस्तश्चाधिमृत्यूततोब्जांगोनाकृतमौर्विकात्खखयमैर्लब्धंयदाब्धीषवः॥ सन्स्विष्टोच्चनिजांशभेस्तमखिलंपश्येदरित्र्यायगेसूर्येवाख १० जला ४ द्य १ कोणग ९, ५ शुभो वाब्जंप्रपश्येन्नतत ॥ ३३ ॥**

अथलग्नेंद्वोःपरमजामित्रग्रहज्ञानार्थमुपायमाह । तावत्तस्यफलमाह । लग्नेंद्वोरिति । लग्नेंद्वोःस्मरगेसप्तमगेशुभाशुभखगेसतितदाआधिमृत्यूस्तः शुभेसतिआधिर्मनस्तापोस्ति

अशुभेसतिमृत्युरस्ति तदाकदा यदाततःस्मरगाद्ग्रहात् अब्जांगोनात्चंद्रलग्नोनात्चंद्रात् सप्तमस्थश्चंद्रोनः लग्नात्सप्तमस्थोलग्नोनइत्यर्थः । तस्मात्कृतमौर्विकात् कृतकलिकात् खखयमैर्द्विशत्यालब्धम् अब्धीषवः चतुःपंचाशत्स्यात् तदैवआधिमृत्यूस्तः अन्यथानेत्यर्थः । तत्रोदाहरणम् पूर्वकल्पितमिदंलग्नं ४, १०, ७ तत्सप्तमगोयंकश्चिद्ग्रहः १०, ११, ७ अयंलग्नोनः २६, १७ अयंकृतमौर्विकः १०, ८, १७ अस्मात् खखयमैः २०० लब्धम् ५४ । अथास्यभंगमाह । सन्निति । सन्सद्ग्रहःस्विष्टोच्चनिजांशभेवर्तमानः अस्तंसप्तमभवनमखिलं पूर्णयदिपश्येत्तदातज्जामित्रंनस्यात् । शोभनश्चासौइष्टश्चस्विष्टःशुभमित्रं स्विष्टश्चउच्चं च निजश्चस्विष्टोच्चनिजाः अंशश्चभंचअंशभं स्विष्टोच्चनिजानामंशभंतस्मिन्स्विष्टोच्चनिजांशभे स्विष्टस्यशुभमित्रस्यअंशेनवांशेभेराशौवावर्तमानः अथवा उच्चस्यांशेभेवावर्तमानः अथवा निजस्यस्वस्यअंशेभेवावर्तमानः अस्तमखिलंपश्येत्तदातन्नेतिषड्भंगाः । वाइत्यथवा अर्केरवौअरित्र्यायगेसतिषष्ठतृतीयैकादशगेसतितन्नेतित्रयोभंगाः । वाइत्यथवा खजलाद्यकोणगःशुभःअब्जंचंद्रमसंपूर्णयथास्यात्तथाईक्षेत् तदातन्न खंदशमं जलंचतुर्थम् आद्यंलग्नंकोणेनवपंचमे एषामन्यतमंगतोन्यतमः शुभग्रहश्चंद्रमसंनिखिलदृष्ट्यायदिपश्येत्तदाजामित्रंनस्यादित्यर्थः । एतेपंचभंगाः सर्वेमिलिताश्चतुर्दशभंगाः संपद्यंते ॥ ३३ ॥

### अब जामित्रको कहतेहैं ।

भा०-लग्न और चंद्रमासे ७ सातमें शुभग्रह होयतो मनस्ताप होय, और अशुभग्रह होय तो मृत्यु होय । चंद्रसे सातमें होय उनको चंद्रसे निकालना और लग्नसे सातमें होय उनको लग्नसे निकालना फेर उभयकी कला करणी फेर दोसौ २०० का भाग देनेसे ५४ चोपन मिले तो मृत्यु होय, अन्यलग्नसे मृत्यु नहीं होय स्पष्टहै । जिससे उदाहरण नहीं लिखाहै और शुभमित्रके नवांशमें और शुभमित्रके राशिमें रहनेवाला अथवा उच्चस्थांशमें वा राशिमें रहनेवाला अथवा स्वांशमें वा स्वराशिमें रहनेवाला सातमा भवनको यदि संपूर्णदृष्टिसे देखता होवे तो जामित्रभंग होय ॥ अथवा सूर्य । ६ । ३ । ११ । इन्हीं स्थानोंमें होयतोभी जामित्रभंग होय । अथवा शुभग्रह १० ४ । १ । ९ । ५ । इन्हीं स्थानोंमेंसे कोइसे स्थानमें बैठाभया चंद्रमाको पूर्ण देखता होय तो जामित्रभंग होय । ऐसे सब मिलके चतुर्दश प्रकारसे जामित्रका भंग होताहै ॥ ३३ ॥

त्र्यभ्रंकोणमबायुरैनिगुरुभूपुत्राःक्रमात्पूर्णयादृष्ट्यान्येचरणोत्तरंच सकलाःपश्यंतिपूर्णंद्युनम् ॥ भंहोरात्रिलवोनवांशकइनांशस्त्रिशदंशाःक्रमाद्वर्गाःसञ्शुभजःपरैस्तुसुहृदोनाब्ध्यूनवर्गातनुः ॥ ३४ ॥

अथदृष्टिलक्षणमाह । त्र्यभ्रमिति । त्र्यभ्रंतृतीयदशमं कोणंनवपंचमम् अबायुश्चतुर्थाष्टमम् एतद्युग्मत्रयंक्रमेणऐनिगुरुभूपुत्राःशनिगुरुभौमाःपूर्णयादृष्ट्यापश्यंति । शनिः

त्र्यस्रं ३, १० गुरुः कोणं ९, ५ भूपुत्रःअवायुः ४, ८ एतेपूर्णयादृष्ट्यापश्यंति। तथाचैतद्युग्मत्रयमन्येग्रहाश्चरणोत्तरंयथास्यात्तथापश्यंति। तद्यथा त्र्यस्रम् ३, १० एकपाददृष्ट्यापश्यंति कोणं ९, ५ द्विपाददृष्ट्या अवायुः ४, ८ त्रिपाददृष्ट्यापश्यंति सकलाग्रहाः द्युनंसप्तमंपूर्णपश्यंति। अथषड्वर्गसाधनंविवक्षुस्तावन्नामान्याह। भंहो-रेति। भंगृहं होराराश्यर्द्धं त्रिलवोदृक्काणः नवांशकः प्रसिद्धः इनांशोद्वादशांशः त्रिंशदंशःप्रसिद्धःक्रमादेतेवर्गाःप्रोक्ताः। शुभजः शुभग्रहजोवर्गः सन्शुभः प्रोक्तः। परैः आचार्यैः सुहृदोमित्रस्यवर्गः सन्प्रोक्तः। अङ्घिवर्गोनकर्मगंचतुर्वर्गोनंलग्नंनसत् प्रोक्तम्॥ ३४॥

## अब दृष्टीका लक्षण कहतेहैं।

भा०-शनि ३। १० तीन दशको और गुरु ९। ५ को और भौम ८। ४ को पूर्ण देखेहैं। और अन्यग्रह ३। १०। इनको एकपाद देखे और ९। ५ को द्विपाद देखे-और ४। ८। इनको त्रिपाद देखे-और सातमी को संपूर्ण देखेहैं। गृह १ होरा २ दृक्काण ३ नवांश ४ द्वादशांश ५ त्रिंशांश ६ यह छ वर्ग हैं। शुभग्रहका वर्ग शुभ होताहै और कोईके मतमें मित्रका वर्गभी शुभ होताहै। और चतुर्वर्गोनलग्न शुभ नहीं होय॥ ३४॥

**प्रोक्तंप्राग्गृहमोजभेर्कशशिनोर्होरेसमेऽब्जार्कयोर्दृक्केद्रप्राक्सुतधर्म-पोनवलवःप्रोक्तःस्वतोर्कांशकः॥शुक्रज्ञेज्ययमासृजांशरमुनीभा-र्थेषवोयुग्मभेत्रिंशांशाविषमेतएवगदिताव्यस्ताश्चषड्वर्गकाः॥३५॥**

अथैषांसाधनमाह। प्रोक्तमिति। यस्यग्रहस्ययत्गृहंतत्प्राक्प्रोक्तम्। भेशामंशुबु-धमित्यादि। अथहोरासाधनमाह। ओजभेविषमराशौअर्कशशिनोर्होरेक्रमेणभवतः। प्रथमपंचदशभागेषुअर्कस्यहोरा अपरपंचदशभागेषुशशिनश्चंद्रस्यहोरास्यात्। अथसम-राशौअब्जार्कयोर्होरेक्रमेणभवतः। प्रथमपंचदशभागेषुचंद्रस्यहोरा अपरपंचदशभागेषु-अर्कस्यहोरास्यात्। अथदृक्काणसाधनमाह। दृक्केडिति। दृक्कोदृक्काणः त्रिविधोदशदश-भागात्मकः तस्यईट्ईशः प्राक्सुतधर्मपोज्ञेयः। प्राग्लग्नं सुतः पंचमं धर्मोनवमं तान् पातीतिप्राक्सुतधर्मपः। एतदुक्तंभवति। "प्रथमदृक्काणस्वामीलग्नपतिः द्वितीयदृक्काण-स्वामीपंचमपतिः तृतीयदृक्काणस्वामीनवमपतिः स्यात्" इति। नवलवः प्रोक्तः। प्रागेवशस्तांशइत्यादि। अथद्वादशांशसाधनम्। स्वतोर्कांशकः स्वस्मात् इतिः स्वतः लग्नतइत्यर्थः। अर्कांशकोद्वादशांशोज्ञेयः। तद्यथा राशिभागास्त्रिंशत्३० एतेद्वादशभि-र्भाजिताः लब्धंसार्द्धभागद्वयम् २½ इदंद्वादशांशमानं तदेवगणनीयं सार्द्धभागद्वयंलग्न-स्यद्वादशांशः तावदेवतत्पुरस्थस्येति लग्नस्योत्पन्नभागावसानपर्यंतंगणयेत् यस्मिन्रा-शौविश्रामःतत्स्वामीद्वादशांशनाथः स्यात्। अथत्रिंशांशसाधनम्। शुक्रेति। शुक्रः प्रसिद्धः ज्ञोबुधः ईज्योगुरुः यमः शनिः असृक्मंगलः एषांपंचानांक्रमेण शरमुनीभार्थेषवः

स्युः । शराः पंच मुनयः सप्त इभाः अष्टौ अर्थाः पंच इषवः पंच एतेभागाः शुक्रादीनांस्युः । एतद्युग्मभेसमराशौज्ञेयम् । एतदपिलग्नोत्पन्नभागावसानपर्यंतंगणयेत् यत्र विश्रांतिः सत्रिंशांशनाथः विषमेराशौतएवगदिताग्रहाभागाश्चव्यस्ताविलोमाज्ञेयाः इतिषड्वर्गोनिरूपितः ॥ ३५ ॥

## अब इन्होंके साधनको कहतेहैं ।

भा०—जिस ग्रहका जो गृह होय सो पूर्व कहदिया है ।

## अब होरा कहतेहैं ।

भा०—विषमराशिके पंद्रह अंशमें तो सूर्यकी होरा होय और पंद्रहसे ऊपर तीसतक चंद्रकी होरा होय—और समराशिके पंचदश अंशमें चंद्रकी होरा होती है और ऊपर तीस ३० तक सूर्यकी होती है ॥

## अथ दृक्काणः ।

भा०—दश अंशका एक दृक्काण होताहै । अर्थात् राशिके तीन भाग करणेसे प्रथमभागका स्वामी तो लग्नपति होता है—और द्वितीय दृक्काणका स्वामी पंचमराशिका पति होता है—और तृतीय दृक्काणका स्वामी नवमराशिका पति होता है । और नवांशको प्रथम कहआये हैं—एकराशिका बारा १२ भाग करके क्रमसे द्वादशांशपति होय ॥

## अथत्रिंशदंशः ।

| सुबोधार्थ त्रिंशांश चक्र है । | | | | | |
|---|---|---|---|---|---|
| शु. | बु. | गु. | श. | मं. | समराशौ |
| ५ | ७ | ८ | ५ | ५ | त्रिंशांशेशाः |
| मं. | श. | गु. | बु. | शु. | विषमराशौ— |
| ५ | ५ | ८ | ७ | ५ | त्रिंशांशेशाः |

भा०—समराशिमें पांच अंशतक शुक्रका त्रिंशांश होय । ऐसे फेर क्रमसे बुध ७ तक—गुरु ८ तक शनि ५ तक—भौम ५ तक है—विषमराशिमें विपरीत देखणा ॥ ३५ ॥

संक्रात्यंतरहोद्धृतादिनगणादाप्तंभपूर्वोरविर्मेषाद्यातभयुग्युतोयनलवैरात्रौसषड्भःसच ॥ तद्भोग्यांशनिजोदयाहतिखरामाप्तंतथैवागतोभुक्तांशाकलितेनयुग्विवरगैः कालःस्फुटोभोदयैः ॥ ३६ ॥

अथेष्टकालसाधनंविवक्षुस्तावत्सूर्यसाधनमाह । संक्रांत्यंतरिति । अंतः अंतरालं तत्र अहानिदिनानिसंक्रांतेरंतरहानिसंक्रांत्यंतरहानि तैर्हृतोभागितः एवंविधोदिनगणः संक्रांतेः सकाशात्इष्टदिनसमूहः तस्माद्यदाप्तंलब्धं सभपूर्वोराशिभागकलादिकोरविः स्यात् । किंभूतोरविः मेषात्सकाशात्यातभयुक् गतराशियुक् सूर्यभुक्तराशियुगित्यर्थः । सतात्कालिकोरविः स्यादित्यर्थः । अत्रोदाहरणम् तुलावृश्चिकसंक्रांत्योरंतरदिनानि

अयनलवैर्युक्तःकार्यः । अयनांशाःग्रंथांतरेप्रसिद्धाः "कृताब्ध्यब्ध्यूनितेशाकेषष्ट्या-प्ताअयनांशका " इति । सःअयनलवयुतोरविः रात्रौरात्रीष्टकालसाधनविषयेसषड्-भःकार्यः । षड्राशियुक्तःकार्यः । तद्भोग्यांशनिजोदयाहतिःखरामाप्तंकालःस्यात् । तस्यसायनांशस्यरवेःभोग्यांशाः तद्भोग्यांशाश्चनिजोदयाश्चतेषामाहतिः गुणनंतस्याः सकाशात्खरामाप्तंत्रिंशताभक्तंलब्धं सूर्यस्यभोग्यकालः स्यात् । निजोदयाःस्वदेशी-यराश्युदयाः तेब्रह्मतुल्यादिभ्योवगंतव्याः । कथंभूतःकालः तथैवांगतोभुक्तांशाक-लितेनयुक् तथैवसूर्यस्यभोग्यकालसाधनरीत्या अंगतःलग्नात् भुक्तांशाकलितेनभुक्तां-शैर्भुक्तभागैःआकलितेनकालेनयुक्युक्तः । एतदुक्तंभवति । इष्टलग्नम् अयनलवयुक्तं कृत्वातद्भुक्तांशैः निजोदयागुणनीयाःत्रिंशताभाज्याःलब्धंलग्न भुक्तकालःतेनकालेनस रविभुक्तः कालोयुक्तःकार्यइत्यर्थः । पुनःकथंभूतः । विवरगैः भोदयैः युक् विवरं सूर्यलग्नांतरालंतत्रगतैर्भोदयैःराश्युदयैःयुक्युक्तः सपलमयःकालः स्फुटः स्पष्टः इष्ट-कालः स्यात् । षष्टिभक्तोघटिकात्मकः स्यादित्यवगंतव्यम् ॥ ३६ ॥

भा०-अब इष्टकाल साधनकी इच्छा करताभया प्रथम सूर्यका साधनकरते हैं-प्रथमतो दिनगणको संक्रांतियोंके अंतरसे भागितकरके उससे जो लब्ध है सो राश्यादिक रवि होता है उस सूर्यमें मेषादिगत राशियोंको जोडदेणी वह तात्कालिक रवि होता है-उदाहरण-जैसे तुला वृश्चिक संक्रांतिके अंतरके दिन है २९ । ५४ । ० इनकी तुला संक्रांतिके इष्टादि गणनसे ५ । ९ । ० भाग देनेसे लब्धराश्यादिक० ५ । ५१ । ४५ भया-इनको सूर्य भुक्त राशिसे युक्त किया तो यह ६ । ५ । ५१ । ४५ तात्कालिक रवि भया-इसमें अयनांश जोडना ॥ और रात्रिमें इष्टकाल साधन करै तो राशिमें ६ जोडना-फेर सूर्यके भुक्तांशसे निजोदयको गुणके ३० से भागदेणा लब्ध भुक्तकाल होय इसमें रविकालको युक्त करणा-फेर सूर्य लग्नांतरालमें राश्युदयसे युक्त करणेसे पलमय काल स्पष्ट होता है-फेर ६०का भाग देनेसे घटिकात्मक होता है ॥ ३६ ॥

**लग्नार्कौयदिचैकभेंशविवरात्स्वीयोदयघ्नाद्वियद्व्याप्तिःकालइना-त्तनुर्यदितनुःसूर्योदयात्प्रागसौ॥कुंडेंभःपरिपूरितेसुघटिकामद्धो-दयास्तेन्यसेत्स्तुत्वाग्नित्रयवायुगानशुभदापूर्णाग्निपंचस्वथ॥३७॥**

अथेष्टकालसाधनेविशेषमाह । लग्नार्काविति । लग्नार्कौलग्नसूर्यौयदिएकभेस्तः तदा अंशविवरात्लग्नार्कयोर्भागांतरात् स्वीयोदयघ्नात्निजराश्युदयगुणितात् या वियत्त्र्या-प्तिः त्रिंशताललब्धिः सकालः स्यात् इष्टकालः स्यात् । तत्रापिविशेषमाह । इनात्तनु-रिति । इनात्सूर्यात्तनुर्लग्नंयदितनुः लघुः स्यात्तदासौइष्टकालःसूर्योदयात्प्राक्पूर्वंस्यात् । सोपिषष्ट्याभक्तोघटिकात्मकः स्यादित्यवगंतव्यम् । अथज्ञातंकालंयंत्रैर्विनासाधितुंन शक्यते अतोयंत्राणांमध्येमुख्यस्यघटीयंत्रस्यस्थापनमाह । कुंडेइति । अंभःपरिपूरि-

तेउदकपूर्णेकुंडेपात्रेघटिकामज्जनक्षमे। कुंडग्रहणमुत्तानपात्रव्युदासार्थम्।तस्मात्कुंडरूप-पात्रेउदकपूरितेसुघटिकांषष्टिपलशुद्धांन्यसेत्निक्षिपेत् । कस्मिन्साति अर्द्धोदयेअर्द्धा-स्तेच जातेसति।किंकृत्वास्तुत्वा। प्रार्थनाग्रंथांतरेउक्ता"यंत्राणांमुख्यरूपासिब्रह्मणानि-र्मितेघटि ॥ दंपत्योः शुभकालाप्तिहितवेभवशोभने" इति ॥ प्रतिष्ठितायांघटिकायांत-द्गमनफलमाह। साप्रतिष्ठिताघटीअग्नित्रयवायुगानशुभदास्यात्। अग्नित्रयम् आग्नेयादि-प्रदक्षिणक्रमेणदिशात्रयं वायुर्वायव्यदिशा इतिदिक्चतुष्टयंप्रतिगतानशुभदा अर्थादन्यादि-ग्गतातत्रैवस्थितावाशुभदास्यात्। तथाचोक्तंग्रंथांतरे "संस्तुतैवंघटीतोयेयांदिशंप्रतिग-च्छति॥ पूर्वाशादिफलंकुर्यात्स्थितामध्येधनप्रदा॥ सौभाग्यंनिर्धननार्याअपमृत्युरुजा-न्विता:॥ भर्तृप्रियाचवेश्याचमान्याचित्तसुतान्वित ॥" इति। एवं गमनफलमुक्त्वापूर्णता-फलमाह पूर्णाग्निपंचसुआग्नेयादिपंचसुदिक्षुपूर्णाघटीनशुभदा । अर्थादन्यदिक्षुपूर्णाशु-भदास्यात्उक्तंच " उत्तरेशानपूर्वासुघटीपूर्णाशुभप्रदा ॥ दिक्षुशेषासुकन्यायामप्रे-वैधव्यदायिनी " ॥ ३७ ॥

### अब इष्टकालके साधनविशेषको कहतेहैं ।

भा०-यदि लग्न और सूर्य एक राशिका होवे तो लग्न सूर्यके अंशविवरको निज राश्युदयसे गुणके ३० तीसका भाग देनेसे इष्ट काल होता है-और सूर्यसे लग्न लघु होय तो यह इष्ट काल सूर्योदयसे पूर्व होय-और इनको भी ६० साठका भाग देनेसे घटिकात्मक होता-है-इति ॥

### अब ज्ञात कालका यंत्र विणा साधन नहीं होसकता है इससे यंत्रोंमें मुख्य घटीयंत्रके स्थापनकालको कहतेहैं ।

भा०-जलपूरित कुण्डमें षष्टि पल शुद्ध घटीको सूर्यके अर्द्धोदयके समयमें और सूर्यके अर्द्धास्तके समयमें रखणा-घटीकी स्तुति करणी-ऐसे रखी हुई घटी यदि आग्नेयादि तीन दिशामें और वायव्यमें चलीजायतो अशुभ होवै-अर्थात् और दिशामें वा उसीही जगह रही हुई श्रेष्ठ होय-अब पूर्णताका फल कहतेहैं ॥ और जो घटी आग्नेयादि पांच ५ दिशामें पूर्ण होयतो शुभ नहीं करै-अर्थात् और दिशामें पूर्ण होयतो शुभ करै ॥ ३७ ॥

**गोधूलंपदजादिकेशुभकरंपंचांगशुद्धौरवेरर्द्धास्तात्परपूर्वतोर्धघटिकंतत्रेंदुमष्टारिगम्॥सोग्रांगंकुजमष्टमंगुरुयमाहःपातमर्कक्रमंजह्याद्द्रिप्रमुखेऽतिसंकटइदंसद्यौवनाद्येक्वचित् ॥ ३८ ॥**

अथगोधूललग्नमाह । गोधूलमिति । गोधूलंलग्नं सायंकाललग्नंपदजादिकेहीनजातौशुभकरंप्रोक्तम् न पूर्ववर्णानां क पंचांगशुद्धौ विवाहोक्तपंचांगेअत्रपंचांगशुद्धिर्मुख्या । तत्रकालप्रमाणंविशेषणद्वारेणाह । कथंभूतंगोधूलं रवेःअर्धास्ता-

त्सकाशात्प्राक्परतोर्द्धघटिकम् अर्द्धघटिकायस्मिन्नित्यर्द्धघटिकं प्राक्पंचदशपलानि परतः पंचदशपलानि एवमर्द्धनाडिकमित्यर्थः । अत्रत्याज्यमाह । इहास्मिन्गोधूललग्ने षष्ठाष्टगमिंदुंचंद्रंजह्यात्त्यजेत् । पुनः किंकिंजह्यादित्याह । सोग्रांगमुग्रग्रहसहितंलग्नंकुजं भौममष्टमं गुरुयमाहः गुरुशनिदिनम् पातंमहापातंसिद्धांतगम्यम् अर्कक्रमंसूर्यसंक्रांतिं जह्यात् अन्येदोषानत्याज्याइत्यर्थः । अत्रगुरुयमाहस्त्यक्तंतद्दोषोपलंभाद्गुरुदिनेसूर्यास्तात्प्राग्यामार्द्धंपरतोयमघंटः । शनिदिनेअस्तमयात्प्राक्परतश्चकुलिकौ । "मार्तंडोदयतः स्मृतादिनपतेर्यामार्द्धनाथाग्रहामार्तंडात्मजभोगउत्तरलवस्तज्ज्ञैःशुभेकर्मणि । त्याज्योसौकुलिकोथसूर्यदिवसोदानैश्चशक्रार्कादिग्वस्वांगाब्धियमैः स्मृतः कुरहितै रात्रौतुतिथ्यंशकैः" इति । त्याज्योसौकुलिकइत्यनेनशनौ अस्तात्प्राक्कुलिकोभवति । इनादौकुलिकंदिवेत्यादिदिग्व्येकंतन्निशिन्यायेनअस्तात्परतोपिकुलिकोभवति । इतिहेतोर्गुरुशनिवारौनिंदितौ । अथविप्रादीनामपिक्वचित्कार्यविशेषेणगोरजप्रवृत्तिमाह । विप्रमुखेतिसंकटइदंसद्यौवनाद्येक्वचिदिति । यौवनाद्येअतिसंकटेप्राप्तेसतिक्वचिल्लग्नशुद्ध्यभावेइदंगोधूलं विप्रमुखेविप्रप्रभृतिवर्णत्रयेसत्शुभंस्यात् अन्यथानेत्यर्थसिद्धम् । तदुक्तंज्योतिर्निबंधे"घटीलग्नंयदानास्तितदागोधूलिकंस्मृतम् ॥ शूद्रादीनांबुधाः प्राहुर्नद्विजानां कदाचन ॥ लग्नशुद्धिर्यदानस्याद्यौवनेसमुपस्थिते ॥ तदातैः सर्ववर्णानांलग्नं गोधूलिकं स्मृतम्" इति ॥ ३८ ॥

## अब गोधूललग्नको कहतेहैं ।

भा०-सायंकालीन गोधूललग्न शूद्रादिकोंके शुभ करता है-ब्राह्मणादिकोंके अशुभ होता है गोधूलमें पंचांगशुद्धिको देखणा चाहिये- सूयास्तसमयके १५ पलों पूर्वकी और १५ पलों पीछेकी ऐसे अर्द्धघटीमें गोधूलकाल होता है-

## अब गोधूललग्नमें त्याज्योंको कहतेहैं ।

भा०-गोधूलमें चंद्रमा लग्नसे ६ छठे वा ८ आठमें त्याज्य है-और लग्नमें पापग्रह त्याज्य हैं और आठमें भौम त्याज्य है-और गुरुवार और शनिवार त्याज्य हैं-और पात और सूर्यसंक्रांति त्याज्य हैं ॥ और दोष गोधूलमें त्याज्य नहीं है ॥ और गुरुवारके दिन सूर्यास्तके पहिले यामार्द्ध होता है-और पीछे यमघंट होता है-और शनिके दिन सूर्यास्तसे पूर्व कुलिक होता है-और पीछे भी कुलिक होता है जिससे गुरुवार और शनिवार त्याज्य हैं-और कन्याके यौवनादिकके कष्टमें लग्नशुद्धि नहीं होयतो ब्राह्मणादिक वर्णत्रयोंके गोधूल शुभ होता है ॥ ३८ ॥

**वेदीप्राक्प्रवणाचतुर्वरकराहस्तोच्छ्रिताग्र्यस्यदोर्जादेर्द्वित्रियुगांगुलैरपचितासोक्ताबहिर्वामतः ॥ यस्यांगंयददोऽगिनोगदितभेकुर्यादिहेंदोर्बलंनालोक्यंतुविवाहतरुयरिनवाह्निप्राङ्कुर्यादिदम्॥ ३९॥**

अथोद्वाहवेदिकालक्षणमाह । वेदीति । प्राक्प्रवणापूर्वनिम्ना चतुर्वरकराचतुर्भिर्वरकरैःप्रमिता वरोवैवाह्यः हस्तोच्छ्रिताहस्तप्रमाणेनोन्नता इयमग्र्यस्यब्राह्मणस्यप्रोक्ता सावेदीदो र्जादेः क्षात्रियादेः क्रमेणाद्वित्रियुगांगुलैः अपचिताहीना क्षत्रियस्यद्व्यंगुलन्यूना वैश्यस्यत्र्यंगुलोना शूद्रस्यचतुरंगुलोनाच । साक्ककार्येत्याह । बहिर्वामतइति । गृहाद्बहिर्वामभागे । अंगुलप्रमाणंमार्कंडेयपुराणेउक्तं " परमाणुः परंसूक्ष्मंत्रसरेणुर्महीरजः ॥ वालाग्रंचैवलिक्षाचयूकाचाथयवोदरम् ॥ क्रमादष्टगुणानाद्युर्यवानामष्टतोंगुलम् ॥ षडंगुलंपदंतत्रवितस्तिर्द्विपदंस्मृता । द्विवितस्तीतथाहस्तोमार्कंडेयमुनीरितः " ॥ आगमांतरेपि "कर्तुर्दक्षिणहस्तस्यमध्यगांगुलिपर्वणः । मध्यमादैर्घ्यमानेनमात्रांगुलमितीरितम् " इति ॥ अन्यत्रोक्तं " यत्किंचित्पौरुषायामंविभज्यदशधापुनः । एकंद्वादशभागंतुकृत्वातेष्वेकमंगुलम् ॥ देहलब्धांगुलंनामजानीयात्तस्यतत्पुनः ॥ महामानांगुलिरितिमात्रांगुलिरिहोदिता ॥ प्रासादादीनितेनैवकुर्यान्मानांतरेणवा ॥ वेदिकादीनिशिबिकारथादीनांविधिपुनः " इत्यादि । अत्रवरकरग्रहणंतस्यहोमकर्तृत्वात् । ननुकन्यायाअपिलाजाहुतौकर्तृत्वमस्तितत्करप्रमाणंकिन्नोक्तम् ।सत्यम्।अल्पावकाशस्थलेकन्याकरप्रमाणमप्यंगीक्रियते तथाचोक्तंदेवयजनदीपिकायाम् " स्वल्पावकाशनिलयेहीनमानंसमाश्रयेत् " इति । अथनानाविधकर्मणामंगंकस्मिन्नक्षत्रेकर्तव्यमित्याह । यस्यांगमिति । यस्यकर्मणः यत्अंगमदइदमंगमंगिनोमुख्यस्यगदितभेउक्तनक्षत्रेकुर्यात् । इहास्मिन्नंगभूतेकर्मणि इंदोर्बलंनालोक्यनविचारणीयम् । तत्रविशेषमाह । विवाहतः विवाहदिनात्प्राक्त्र्यरिनवाह्नितृतीयषष्ठनवमेह्निइदमंगंविवाहांगंनकुर्यात । विवाहांगानि यथा ।"दलनंकंडनंचैवव्यंजनंमोदकादिच । यवारमंडपोवेदीकुंकुमंवर्णकं तथा"इति ३९

अब विवाहकी वेदीका लक्षण कहतेहैं ।

भा०–घरके बाहर वामभागमें वरके चार हाथकी चतुरस्रा और एक हाथ ऊंची और पूर्वमें ढालवाली वेदी करणी ब्राह्मणके ॥ और क्षत्रियके पूर्वोक्त वेदी दो अंगुलहीन करणी ॥ और वैश्यके तीन अंगुल न्यून करणी ॥ और शूद्रके चार अंगुल न्यून करणी–और जिस कर्मका जो अंग करणा सो अंगीके नक्षत्रमें करणा-और अंगमें चंद्रबल नहीं देखणा ॥ और विवाहके अंग विवाहदिनसे पूर्व ३ । ६ । ९ इन दिनोंमें नहीं करणा–जैसे विवाहके अंग मण्डपकरणादिक हैं–और विवाह अंगी है ऐसे अंगांगिभाव सर्वत्र समझणा चाहिये ॥ ३९ ॥

लग्नादष्टि१६दिनांततःसममुनी७ष्वं५के९ष्ट्युपूर्ध्वंत्वयुग्घस्रेमास्यपिहायनेशरमिताद्वर्षात्परंस्वेच्छया ॥ वैफामा१सितेजगुःश्रुतियुगोद्वाहर्क्षचित्राश्विनीज्यर्क्षैश्वानवमंदिरेनिशिवधूसंवेशमंगेस्थिरे४०

अथक्रमप्राप्तंवधूप्रवेशमाह । लग्नादिति । लग्नाद्विवाहतः सकाशात् अष्टिदिनांततः

षोडशदिनमध्ये समसुनीष्वंकेषुद्युषस्वेषु समाः समसंख्याकाः मुनिः सप्तमः इषुः पंचमः अंकोनवमः एषुद्युषुदिवसेषु अतऊर्ध्वंषोडशदिनादूर्ध्वम् अयुग्घस्रेविषमदिने मास्यपि विषमेहायनेवर्षे वधूसंप्रवेशंजगुरूचुः । एतदुक्तंभवति । षोडशदिनमध्येसमादिषुदिनेषुकर्तव्यः षोडशदिनातिक्रमेमासपर्यंतंविषमदिनेवधूप्रवेशः कार्यः । प्रथममासातिक्रमेवर्षपर्यंतंविषमेमासिकर्तव्यः तदाविषमदिननियमोनास्ति । एवंप्रथमेवर्षे अतिक्रांतेपंचमवर्षपर्यंतंविषमेवर्षेकर्तव्यः तदाविषममासनियमोनास्ति । अथविलंबितंवधूप्रवेशनंकस्मिन्मासपक्षेकर्तव्यमित्याह । वैफामार्गसिते वैवैशाखः फाफाल्गुनः मार्गोमार्गशीर्षः एषांसितः शुक्लपक्षः तस्मिन् । कैः श्रुतियुगोद्वाहर्क्षचित्राश्विनीज्यर्क्षैः श्रुतियुगंश्रवणधनिष्ठे उद्वाहर्क्षाणिविवाहनक्षत्राणिपूर्वोक्तानि चित्राश्विनीप्रसिद्धे ईज्यर्क्षं पुष्यः तैः । अनवमंदिरेजीर्णगृहे "नवीनमंदिरेकन्यांनवोढांनप्रवेशयेत्"इतिनिषेधादनवमंदिरइत्युक्तम् । उक्तंच "वधूप्रवेशनंकार्यंपंचमेसप्तमेदिने ॥ नवमेचशुभेवारेसुलग्नेशशिनो बले" इति । नारदः "आरभ्योद्वाहदिवसात्षष्ठेवाप्यष्टमेदिने । वधूप्रवेशः संपत्त्यै दशमेथसमेदिने" इति । संग्रहे "विवाहमारभ्यवधूप्रवेशोयुग्मेतथाषोडशवासरांतात् । तदूर्ध्वमब्देयुजिपंचमांतादतःपरस्तान्नियमोनवास्ति" ॥ वृद्धनारदः "समे वर्षेसमे मासियदिनारीगृहंविशेत् ॥ आयुष्यंहरतेभर्तुःसानारीमरणंव्रजेत्" । भास्करव्यवहारे "रात्रौविवाहमेशस्तः सन्मुहूर्तेस्थिरोदये ॥ वधूप्रवेशोनैवात्रप्रतिशुद्धाद्वयं विदुः ॥ ऋक्षैर्वैवाहिकैः शुद्धैर्दंपत्योश्चशुभप्रदम् ॥ वधूप्रवेशनंकार्यंपंचमेह्यकृतंयदि ॥ मार्गफाल्गुनवैशाखेशुक्लपक्षेशुभेदिने ॥ मूलपुष्यमृदुस्वातीस्थिरराशिश्रुतिवासरे ॥ पितृभेचक्रेनारीप्रविष्टापुत्रिणीभवेत्" इति ॥ ४० ॥

## अब वधूप्रवेशके मुहूर्तको कहते हैं ।

भा०-यदि विवाहसे १६ सोले दिनोंमें जो वधूप्रवेश करै तो समदिनोंमें वा ७ । ५ । ९ इन्हीं दिनोंमे करणा-और जो १६ दिनोंके ऊपर करै तो विषमदिनमें और विषममासमें और विषमवर्षमें करणा ॥ और पांच ५ वर्षके बाद करे तो अपनी इच्छा होय जबही करणा ॥ अब विलंबित वधूप्रवेशके कालको कहते हैं ॥ वैशाख-फाल्गुन-मार्गशीर्ष-इन्हीं मासोंके शुक्लपक्षमें और श्रवण-धनिष्ठा-विवाहनक्षत्र-चि० अश्विनी-पुष्य इन्हीं नक्षत्रोंमें-और रात्रिमें और स्थिरलग्नमें काल निकलनेके बाद इन मुहूर्तमें वधूप्रवेश श्रेष्ठ होताहै ॥ ४० ॥

**उद्वाहात्प्रथमेशुचौयदिवसेद्भर्तुर्गृहेकन्यकाहन्यात्तज्जननींक्षयेनिजतनुंज्येष्ठेपतिज्येष्ठकम् ॥ पौषेचश्वशुरंपतिंचमलिनेचैत्रेस्वपित्रालयेतिष्ठंतीपितरंनिहंतिनभयंतेषामभावेभवेत् ॥ ४१ ॥**

इदानींप्रथमाषाढादौभर्त्रादिगृहेवासनिषेधमाह उद्वाहादिति । उद्वाहाद्विवाहादुपरि प्रथमेशुचौ आषाढेकन्यायदिभर्तृगृहेवसेत्तदातज्जननींतस्यभर्तृजननींहन्यात् इत्यादिसुगमम् ॥ ४१ ॥

## अब मासफलको कहतेहैं ।

भा०-विवाहसे प्रथम आसाढमें जो कन्या पतिके घरमें रहै तो पतिकी माताका नाश होय ॥ ऐसेही क्षयमासमें रहैतो कन्या आपही मरै-और ज्येष्ठमासमें रहै तो पतिका बडा भाई मरै-और पौषमें कन्याका श्वशुर मरै-और मलमासमें पतिके घरमें रहै तो कन्याका पति मरै ॥ और चैत्रमासमें कन्या पिताके घरमें रहै तो कन्याके पिताकी मृत्यु होय ॥ और पूर्वोक्तमासोंके विना अन्यमासोंमें भय नहीं होय ॥ ४१ ॥

**शूद्रांत्येषुपुनर्भवापरिणयःप्रोक्तोविवाहोक्तभैर्नालोक्यंतिथिमासवेधभृगुजेज्यास्तादितत्रार्कभात् ॥ त्रित्र्यर्क्षेषुमृतिर्धनंमृतिमृती पुत्रामृतिर्दुर्भगंश्रीरौन्नत्यमथोधृती १८ श ११ कृत ४ तत्त्व २५ र्क्षेत्ययःसा भिजित् ॥ ४२ ॥**

अथपुनर्भूविवाहमाह । शूद्रांत्येष्विति । शूद्राःप्रसिद्धाः अन्त्याःरजकादयः तेषुपुनर्भवापरिणयःप्रोक्तः । कैर्विवाहोक्तभैः स्पष्टम् । तत्रपुनर्भवापरिणयेतिथिमासवेधगुरुशुक्रास्तादिनआलोक्यं स्पष्टम् । तथाचोक्तंज्योतिर्निबन्धे "नशुक्रास्तादिकंचिंत्यंशुद्धिवेधादिकं तथा । पुनर्भवासंवरणेनमासतिथिशोधनम्" इति । अथब्रह्मपट्टनक्षत्रशुद्धिमाह । अर्कभात्सूर्यनक्षत्रात्त्रिंत्र्यर्क्षेषुत्रिषुनक्षत्रेषुक्रमेणमृतिर्मरणंप्रथमेत्रिके द्वितीये त्रिकेधनं तृतीयेमृतिः चतुर्थेमृतिः पंचमेपुत्राः षष्ठेत्रिकेमृतिः सप्तमेदुर्भगम् अष्टमे लक्ष्मीः नवमेत्रिकेऔन्नत्यंप्रोक्तम् । अथरुद्रपट्टशुद्धिमाह । अर्कभादित्यनुवर्तते धृतीशकृततत्त्वर्क्षे धृतिरष्टादशम् ईशएकादशं कृतश्चतुर्थम् तत्त्वंपंचविंशम् एतन्मितेनक्षत्रेअर्कभात् एतन्मितेइत्यर्थः । तत्रचतुष्टयेसाभिजित्गणितेअत्ययोमृत्युःस्यात् । अर्थादन्येषुशुभं प्रोक्तमिति ॥ ४२ ॥

## अब पुनर्भू विवाहको कहतेहैं ।

भा०-विवाहके नक्षत्रोंमें शूद्रोंके और रजकादिकोंके पुनर्भू विवाह करणा ॥ और पुनर्भूमें तिथि-मास-वेध-शुक्रास्त गुरु-अस्तादिकोंका विचार नहीं करणा ॥ अब ब्रह्मपट्टनक्षत्रशुद्धि कहते हैं ॥ सूर्यनक्षत्रसे वर्तमानतक गिणके ३ तीनोंमें मरण फल होय, ऐसे दूजे त्रिकमें धन होय-फेर त्रिकमें मृति होय-चोथा त्रिकमें मृति-पांचवें त्रिकमें पुत्र होय फेर छठे त्रिकमें मृति-सातमें त्रिकमें दुर्भग, आठमें त्रिकमें लक्ष्मी होय, नवमें त्रिकमें उन्नति होय ॥ अब रुद्रपट्टशुद्धि कहते हैं । सूर्यनक्षत्रसे अठारमे और ११ वें नक्षत्रमें और चोथे नक्षत्रमें-और २५ वें नक्षत्रमें मृत्यु होय-इसमें अभिजित्कोभी गणना चाहिये अर्थात् औरमें शुभ होय ॥ ४२ ॥

**भुक्तायैवसुतासुपोषितनरोदद्याच्चसावित्रिकामारब्धोत्सवकेयदा जनिमृतीस्यातांस्वगोत्रेक्कचित् ॥ सांगंतंविदधीतवाजमपरेस्मा-दारभेत्पूर्वतोयज्ञोद्वाहनचौलमौंजिकमहःसुस्वर्गदिक्त्रित्रिषु ४३॥**

अथनानाविधशास्त्रार्थानाह-भुक्तायेत्यादिना । उपोषितनरः भुक्तायकृतभोजनायैव सुतांदद्यात् । परमुपोषितनरःभुक्तायैववटवेसावित्रिकांगायत्रींदद्यात् । तदुक्तंज्योतिर्नि-बंधे "भुक्त्वासमुद्वहेत्कन्यां सावित्रीग्रहणंतथा ॥ उपोषितःसुतांदद्यादागतायवरायच" इति ॥ "आरब्धोत्सवकेयदाजनिमृती स्यातांस्वगोत्रेक्कचित् सांगंतंविदधीतवाजमपरे" इति । वाजमन्नम् अपरेअसगोत्रिणोविदधीरन् "वाजमन्नंगरुद्वाजो वाजंपीयूषमुच्यते" इत्यनेकार्थध्वनिमंजर्याम् । शेषंसुगमम् । उक्तंच "विवाहोत्सवयज्ञादावारब्धेसूतकंयदि । सांगंतत्कर्मकुर्वीतअन्नदानादिकंपरैः" इति । अस्मादारभेत्पूर्वतोयज्ञोद्वाहनचौलमौंजिक-महःसुस्वर्गदिक्त्रित्रिष्विति अस्मान्निश्चितदिनात्पूर्वतःप्रथमतः यज्ञोद्वाहनचौलमौंजिक-मित्येतत्कर्मचतुष्टयंक्रमात्स्वर्ग २१ दिक्१०त्रि ३ त्रिषु ३ अहःसु आरभेत् यज्ञएकविं-शतिदिनेषु उद्वाहनंविवाहःदिक्षुदशदिनेषु चौलंत्रिषुदिनेषु मौंजिकंत्रिषुदिनेष्विति । उ-क्तंच "एकविंशत्यहर्यज्ञे विवाहेदशवासराः । त्र्यहेचूडोपनयने नांदीश्राद्धंविधीयते" ॥ आरंभलक्षणम् । आरंभोवरणंयज्ञे संकल्पोव्रतसत्रयोः। नांदीश्राद्धंविवाहादौ श्राद्धेपाक-परिक्रिया" इति ॥ ४३ ॥

अब नानाविधशास्त्रार्थको कहते हैं ।

भा०-कन्यादाता उपवास करके भोजन किएभये वरको कन्या देवै-और गुरु आप उपवास करके भोजन किएभये बालकको गायत्रीमंत्रको देवै-उत्सवके प्रारंभ होणेके बाद अपने गोत्रमें यदि जन्म होय वा मृत्यु होयतो उन सांगकर्मको समाप्त करणा और पाकको भिन्नगोत्रवालोंसे कराणा ॥ और इकवीश २१ दिनोंसे पूर्व यज्ञका प्रारंभ करणा ॥ और विवाहप्रारंभ दशदिनसे पूर्व करणा-और चौलका प्रारंभ तीनदिनसे पूर्व करणा ॥ और मौंजीका तीन दिनसे पूर्व करणा ॥ ४३ ॥

**नोश्राद्धंक्षयदर्शनैत्यकमधीतिंशीतलाप्स्वाप्लुतिंसीमासिंध्वतिपा-तमेककुलजाःसव्यातिपातंक्कचित्।उत्थापावधिमंडपस्यसशरागा-ह्नोर्विषष्ठेसमेह्न्युत्थाप्योनगृहोद्वहौसहजयोस्तुल्यक्रियाब्दांततः ॥**

क्षयदर्शनैत्यकंश्राद्धं अधीतिंपठनं शीतलाप्सुशीतलोदकेषु आप्लुतिंस्नानं सीमासिंध्व-तिपातं सीमाप्रसिद्धा सिंधुर्महानदी "सिंधुर्नदीसमुद्रयोरित्यभिधानात्" तयोरपिपातः उल्लंघनं सव्यातिपातम् अपसव्यमित्येतत् एककुलजाःसगोत्रिणःक्कचिन्नोकुर्युः। किमवधि मंडपस्यउत्थापनावधि यावन्मंडपोत्थापनंस्यात्तावन्नकुर्यादित्यर्थः । उक्तंच "दर्शश्रा-

द्धक्षयश्राद्धं शीताद्भिःस्नानमेवच । प्राचीनावीतिकरणं नदीसीमातिपातनम् '' ॥ अन्यञ्च ''नित्यश्राद्धमधीतिंचस्नानंचशिशिरैर्जलैः । सपिंडानैवकुर्वीरन् मंडपोत्थापनावधि'' ॥ अथसमंडपोत्थापःकदाकार्यइत्याह । सशरागाह्नोरिति । शराःपंच अगःसप्त तन्मिताह्नोर्दिनयोः पंचमेसप्तमे विषष्ठेसमेषष्ठरहितेसमेह्निसमदिनेउत्थाप्यः । उक्तंच ''मंडपोत्थापनंकार्यं समेतुदिवसेबुधैः ॥ षष्ठंचविषमंनेष्टं मुक्त्वापंचमसप्तमौ '' इति । अब्दांतर्वर्षमध्येगृहोद्वाहौनकर्तव्यौ । सहजयोः एकमातृजयोः पुरुषयोः पुरुषस्त्रियोः समानक्रियासमानंकर्मनकुर्यादित्यर्थः । भिन्नमातृजयोर्नदोषइत्यर्थात्सिद्धम् । अर्थात्भिन्नमातृजयोस्तथासहोद्वाहादिकरणमागतं तद्भिन्नकर्तृत्वेभिन्नगृहेसतिवेदितव्यं कर्तृत्वमत्रश्राद्धाधिकारिणःपितुरेवनतुविवाहहोमंकर्तुर्वरस्य । तथाचोक्तम् ''एकमातृजयोरेकवत्सरेपुरुषस्त्रियोः । नसमानक्रियांकुर्यान्मातृभेदेविधीयते'' इति । पुरुषौपुरुषस्त्रियौपृथक्द्वित्वविवक्षयावहुत्वासंभवान्नबहुत्वम् यद्वापुरुषश्चस्त्रीचतथातयोर्द्वयोः पुरुषयोः स्त्रियोर्वा पुरुषस्त्रियोर्वा । कन्यापुरुषयोर्विवाहविशेषश्चोक्तः ''सोदर्ययोःकन्यकयोः सुतयोरेकवत्सरे ॥ विवाहोनस्मृतस्तज्ज्ञैःकन्यकासुतयोःस्मृतः ॥'' इति । अत्रसंवत्सरमानंमनुजमानेनचैत्रादिफाल्गुनांतंवेद्यम् । समानक्रियेति द्वयोश्चौलेद्वयोर्व्रतबंधौ द्वयोर्विवाहौवासहजयोरित्यनेनैवएकमातृत्वंसंभवति । उक्तंच ॥ ''नैकस्मिन्वत्सरे कार्यौगृहोद्वाहौकदाचन'' ॥ ४४ ॥

### मण्डप उत्थापनके पूर्व एकगोत्रवाले पुरुषोंको इतने काम नहीं करणा सो लिखतेहैं ।

भा०–क्षयश्राद्ध–और दर्शश्राद्ध–और नित्यश्राद्ध–और पठन–और शीतलजलसे स्नान–और सीमाका उल्लंघन–और महानदीका उल्लंघन–और अपसव्य नहीं करणा ॥ और मण्डपका उत्थापन ५ पांचमे वा ७ सातमे वा छठे दिन विना समदिनमें करणा–और एकवर्षमें सहोदर भाइयोंके समानकर्म एक वरमें नहीं करणा ॥ ४४ ॥

**उद्वाहव्रतचूडकेब्ददलतत्खंडंतिलैस्तर्पणंश्राद्धंपिंडयुतंमहालयगयापित्र्यंविनानाचरेत् ॥ पूर्वंसप्तपदीविधेरधिगतेदोषेवरेवामृतेदेयान्यत्रविवाहितापिचबलाद्याविद्धयोनिर्नचेत् ॥ ४५ ॥**

वर्जांतराण्याह–उद्वाहव्रतचूडके क्रमेण अब्ददलतत्खंडम् उद्वाहेविवाहेकृतेसति अब्दंवर्षपर्यंतं व्रतेव्रतबंधेकृतेसतिदलम्अर्द्धाब्दंषण्मासपर्यंतमित्यर्थः । चूडकेचौलकर्मकृते सतितत्खंडंतस्यदलस्यापिखंडं त्रिमासपर्यंतमित्यर्थः । तिलैस्तर्पणंपिंडयुतंश्राद्धंचनाचरेत् । किंविना।महालयगयापित्र्यंविना महालयःभाद्रपदापरपक्षःगयाप्रसिद्धा पित्र्यंमातापितृक्षयदिनं तत्रयत्श्राद्धंक्रियतेतन्महालयगयापित्र्यंतद्विना । उक्तंच ''विवाहव्रतचूडासु

वर्षमर्द्धतदर्द्धकम् । अतिलंतर्पणंकुर्याच्छ्राद्धंकुर्यादपिंडकम् ॥ महालयेगयाश्राद्धे माता पित्रोःक्षयेहनि । कृतोद्वाहोपिकुर्वीतपिंडदानंयथाविधि" इति ॥ पूर्वमिति । सप्तपदीवि-धेःपूर्वंप्रथमतोदोषेअन्धमूकादिके अवगतेज्ञातेसति वाइत्यथवा वरेमृतेसति कन्याअन्य-त्रदेया । अपिच याकन्याबलाद्विवाहितासापि अन्यत्रदेया । तर्हिकथंचेद्यदिविद्धयो-निर्नस्यात् विद्धायोनिर्यस्याःसातथा पुरुषभुक्तेत्यर्थः । उक्तंचयाज्ञवल्क्येन "महादोषे सुविज्ञाते पूर्वंसप्तपदीविधेः । मरणादौसमुत्पन्ने देयान्यस्मैनदोषभाक् ॥ बलादुद्वाहिता कन्यादातव्यान्यवरायच " इति । अन्यच्च "बलादुद्वाहिताकन्यामंत्रैर्यदिनसंस्कृता ॥ अन्यस्मैविधिवद्देयायथाकन्यातथैवसा" इति ॥ महादोषाःकारिकानिबंधेउक्ताः " अं-धोमूकःक्रियाहीनश्चापस्मारीनपुंसकः ॥ दूरस्थःपतितःकुष्ठीदीर्घरोगीविरोनसन्" ॥ अन्येपिदोषाउक्ताः "मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् ॥ त्रिगुणाधिकवर्षाणां नदेयाजातुकन्यकाः" इति । पुरुषनपुंसकलक्षणं "यस्याप्सुप्लवतेबीजंह्रादिमूत्रंचफेनि-लम् । पुमान् स्याल्लक्षणैरेतैर्विपरीतैस्तुषंढकः ॥" अपरीक्ष्यदानेदोषः "अपरीक्ष्यवरंक-न्यांनिगुर्णायप्रयच्छति ॥ कुलंतस्यैवतच्छोकसंतप्तोविनिकृंतति" इति ॥ ४५ ॥

भा०-विवाहके बाद एकवर्षतक-और व्रतबंधसे छ महीनोंतक-और चौलसे तीन महीनों-तक तिलतर्पण और पिण्डयुक्तं श्राद्ध नहीं करणा-परंतु महालय और गया और मातापिताके क्षयाहश्राद्धमें दोष नहीं है । और सप्तपदीसे पूर्व वरका अंधमूकादिक दोष मालूम होजाय तो वा वरकी मृत्यु होजाय तो कन्याका विवाह दूसरे वरसे कराणा-और बलसे विवाह करे तो भी दूसरेसे विवाह कराणा, यदि कन्याका पुरुषके संयोग नहीं भया होयतो कराणा ॥ ४५ ॥

**अस्त्रीकैःकुशहेमरौप्यरचिताताम्रीचविप्रादिभिर्भार्यावानिखिलैः सुवर्णरचिताधर्मायधार्याबुधैः ॥ मंदारार्कदिनेंबुपाग्निफणिभंभद्रा-तिथिश्चेदिहोद्भूतासाविषकन्यकापितनुगौसौम्यौरिपुक्षेत्रगौ ४६॥**

अथस्त्रीरहितानांविधिमाह अस्त्रीकैः स्त्रीरहितैः विप्रादिभिःविप्रक्षत्रियविट्शूद्रैः क्र-मेणकुशहेमरौप्यरचितातांम्रीचभार्याधर्मायधार्या । अयमर्थः । विप्रेणकुशरचिताभा-र्याधर्मायधार्या क्षत्रियेणहेमरचिता वैश्येनरौप्यरचिता शूद्रेणताम्रीताम्ररचिताभार्या धार्या । कथंभूतैर्विप्रादिभिः बुधैःस्वस्वधर्मनिरतैः वाइत्यथवा निखिलैःसर्वैर्विप्रादिभिः सुवर्णरचिता भार्याधार्या यतस्तयाविनागृहस्थधर्मसाधननंस्यात् । तथाचोक्तम् "अप-त्नीकस्तुधर्मार्थं कौशींहैमीचराजती ॥ ताम्रीविप्रादिभिर्भार्याधार्याहैमीतथाखिलैः" इति । अथविषकन्यालक्षणमाह । मंदेति । मंदारार्कदिने शन्यर्कभौमानामन्यतमस्य वासरे अंबुपाग्निफणिभं शततारकाकृत्तिकाश्लेषाणामन्यतमंनक्षत्रम् भद्रातिथिर्द्वितीया-सप्तमी द्वादशी अथसामान्यतमा चेत्स्यात् तदायोगःस्यात् । इहोद्भूताअत्रयोगेया कन्याजातासाविषकन्यका । अथयोगांतरमाह । रिपुक्षेत्रगौसौम्यौतनुगौलग्नगतौचे-त्स्याताम् ॥ ४६ ॥

## अब स्त्रीरहितके लिये विधि कहतेहैं ।

भा०—जिस ब्राह्मणके स्त्री नहीं होय वह कुशपत्नी करके कर्म करै--और क्षत्रिय सुवर्णकी पत्नीको बनावै--और वैश्य रूप्यकी स्त्री बनाके कर्म करै--और शूद्र तांबाकी स्त्री करके कर्म करै अथवा ब्राह्मणादिक सब वर्ण सुवर्णकी स्त्री बनाके कर्मको करें--

## अब विषकन्याका लक्षण कहतेहैं ।

भा०—शनि, सूर्य, भौम इन्हों वारोंमेंसे कोई वार होय--और शतभिषा--कृत्तिका--आश्लेषा इन्हों नक्षत्रोंमेंसे कोई नक्षत्र होय--और २ । १२ । ७ इन्हों तिथोंमेंसे कोई तिथि होय तब योग होता है--सो इस योगमें कन्याका जन्म होय तो वह विषकन्या होती है और दोय सौम्य ग्रह लग्नमें शत्रुक्षेत्रिय होके होवें तो भी योग होताहै--इसमेंभी विषकन्या होती है ॥ ४६ ॥

**एकःक्रूरइहोद्भवाप्यथतनौसौरीरविःपुत्रगोधर्मस्थोधरणीसुतोयमपरोयोगोपितज्जाविषम् ॥ मूलाद्यत्रिपदोद्भवाश्वशुरमह्यंत्यत्रये तत्स्त्रियंज्येष्ठांत्येपतिपूर्वजंद्विपचतुर्थेदेवरंहंतिच ॥ ४७ ॥**

अथयोगांतरमाह—एकःक्रूरइति । एकः क्रूरः रिपुक्षेत्रगःतनुगश्चेत्स्यात् इमौद्वौ योगौ इहोद्भवापिविषकन्यकास्यात् । तनौलग्नेसौरिःशनिःस्यात् । रविःसूर्यःपुत्रगःपंचमगः स्यात् धरणीसुतोभौमोधर्मस्थोनवमस्थोयदास्यात् तदाअयमपरोयोगःस्यात् । तज्जापिकन्याविषंस्यात् । विषमितियथाविषस्वीकारात्मृत्युर्भवतीतिफलंसूचितं तस्मात्परित्याज्येतिभावः । अथमूलजादीनांफलमाह । मूलेति । मूलस्यआद्यत्रिपदोद्भवा प्रथमचरणत्रयेजाताकन्याश्वशुरंहंतिमारयति । अह्यंत्यत्रये अहिराश्लेषातस्यअंत्यत्रये अंत्यचरणत्रयेजातातत्स्त्रियंश्वश्रूंहंतीत्यर्थः । ज्येष्ठांत्ये ज्येष्ठायाःचतुर्थचरणेजातापतिपूर्वजं ज्येष्ठंहंति । द्विपचतुर्थे द्वीपौपतीयस्यतत् द्विपं विशाखा तस्यचतुर्थचरणेजातादेवरंहंति अर्थादन्यचरणजाशुभा ॥ ४७ ॥

भा०—और एक क्रूर ग्रह रिपुक्षेत्रका लग्नमें होय तोभी योग होताहै और लग्नमें शनि होय और सूर्य पांचमें होय तो और मंगल नवमें होय तोभी योग होता है--इनमेंभी विषकन्या होय ॥ और मूलनक्षत्रके आद्यके ३ तीन पादोंमें कन्या होय तो कन्याके श्वशुरकी मृत्यु होय--और आश्लेषाके अंत्यके ३ चरणोंमें कन्या होय तो कन्याके पतिके माताकी मृत्यु होय-और ज्येष्ठाके चोथा पादमें जन्मे तो कन्याके पतिके ज्येष्ठ भाईकी मृत्यु होय--और विशाखाके ४ चोथे पादमें जन्मे तो कन्याके देवरकी मृत्यु होय--और उक्त नक्षत्रोंके अन्यचरणोंमें दोष नहीं है ॥ ४७ ॥

**एवंनायुवतेरभावइहनोदोषोनुरेतत्फलंमौज्यूर्ध्वंनवदंतिकेचिदपि**

**पैत्र्याद्येफलंमूलवत् ॥ नोद्वाहौसहजातयोस्त्र्यृतुषुनोद्वाहाद्व्रतंनो पुमुद्वाहात्स्त्र्युद्वहनंनमंगलविधेर्मुंडंत्रिशुभ्येषुन ॥ ४८ ॥**

एवमुक्तनक्षत्रचरणजातोनानरःयुवतेःस्त्रियः श्वशुरादीन्हंति । तथाचगर्गः "मूलजाश्वशुरंहंतिसार्पजाचतदंगनाम् ॥ ज्येष्ठजातुपतिज्येष्ठंदेवरंतुद्विदैवते" इति । तथाचकश्यपपटले "मूलांत्यपादजौश्रेष्ठौतथाश्लेषाद्यपादजौ ॥ द्वीशांत्यपादजौदुष्टौतथाज्येष्ठांत्यपादजौ" इति । अस्यापवादः । अभावइहनोदोषइति । अभावेतेषांश्वशुरादीनामभावेसति इह मूलादिजोद्वहनेनोदोषः । केचिदाचार्याः नुःनरस्य मौंज्यूर्ध्वंमौंजीबंधनानंतरमेतत्फलं न वदंति । उक्तंचनारदेन "मूलव्यालभवोदोषोविवाहेयउदाहृतः ॥ समौंजीबंधनादूर्ध्वंपुंसां नैवेतिकेचन" इति । पैत्र्याद्येपिमघायाआद्यचरणेपिमूलवत्फलंस्यादितिकेचिद्वदंति । तथा चोक्तं नारदेन "पैत्र्यगंडोद्भवाकन्याश्वशुरघ्नीचकेचन" इति । अथऋतुत्रयमध्येकिंकिंनकर्तव्यमित्याह । नोद्वाहाविति । सहजातयोःएकोदरसमुत्पन्नयोः पुत्रयोःकन्ययोः कन्यापुत्रयोर्वा उद्वाहौविवाहौ त्र्यृतुषुत्रयश्चतेऋतवश्च त्र्यृतवःतेषुनकार्यौ षण्मासाभ्यंतरेनकार्यावित्यर्थः । उक्तंचनारदेन "विवाहश्चैकजन्यानांषण्मासाभ्यांतरेयदि ॥ असंशयंत्रिभिर्वर्षैस्तत्रैकाविधवाभवेत्" इति ॥ नोद्वाहाद्व्रतमिति । उद्वाहात्त्र्यृतुषुव्रतंमौंजीनकार्या । तथाचोक्तंनारदेन "पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रये ॥ नतयोर्व्रतमुद्वाहान्मंगलेनान्यमंगलम्" इति । नोपुमुद्वाहात्स्त्र्युद्वहनमिति । पुमुद्वाहात्पुरुषविवाहात्त्र्यृतुषुस्त्र्युद्वहनंकन्याविवाहः नोकार्यः । तथाचकात्यायनः "पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रये" इति । नमंगलविधेर्मुंडमिति । मंगलविधेः विवाहात्त्र्यृतुषुमुंडनंचौलंव्रतंवानकार्यम् । अत्र कात्यायनः "कुलेऋतुत्रयादर्वाङ्मंडनान्नतुमुंडनम्" इति । त्रिशुभ्येषुनेति । एषुत्र्यृतुषुत्रिशुभीनकार्या त्रयाणांशुभानासमाहारस्त्रिशुभी मंगलत्रयमितियावत् "नकुर्यान्मंगलत्रयम्" इतिवचनात् ॥४८॥

भा०-ऐसे उक्त नक्षत्रोंके चरणोंमें नरका जन्म होय तो नरके श्वशुरादिकोंकी मृत्यु होय॥ और जो श्वशुरादिक नहीं होय तो दोष नहीं होय और अन्य मतसे पुरुषके मौंजी बंधनके बाद फल नहीं होता-और मघाके आद्य चरणमें मूलवत् फल होवेहै-और सहोदर भाइयोंके और सहोदर कन्याओंके और सहोदर कन्या पुत्रके छ ६ महीनोंमें विवाह नहीं करणा ॥ और विवाहहोणे पीछे छ महीनोंमें उपवीत नहीं करणा-और पुत्रविवाहके बाद ६ महीनोमें कन्याका विवाह नहीं करणा-और विवाहके बाद ६ महीनोंतक चौल वा व्रत नहीं करणा-और छ महीनोंमें तीन मंगल नहीं करणा ॥ ४८ ॥

**नोज्येष्ठाद्दलघुकालरुद्धतऋतेकात्यायनोमुंडनंचौलंप्राहनमेखलेत्युभयतःकार्याविवाहादियम् ॥ भेदेऽब्दस्यचसंकटेवितनुयात्पूर्वोदितंमंगलंवेदाहांतरितेदिनव्यवहितेनद्यानगेनापिवा ॥ ४९ ॥**

नोज्येष्ठाल्लिति । ज्येष्ठात्मंगलात्विवाहादेःऋतुषुलघुमंगलंनोकार्यम् । यद्वाहिः शालायामुक्तंतज्ज्येष्ठमंगलम् अन्यल्लघुमंगलम् । ज्येष्ठलघुलक्षणं सारसमुच्चये "चूडाकेशांतसीमंतविवाहोपनयान्बुधाः ॥ गुरुमंगलमित्याहुस्तदन्यल्लघुमंगलम्" इति । तन्नकार्यमित्यर्थः । कस्माद्दतेकालरुद्धतःऋते कालेनरुद्धंगर्भाधानपुंसवनादितस्माद्दते तेनविनेत्यर्थः । तथाचकात्यायनः "मातृयज्ञक्रियापूर्वज्येष्ठंकृत्वातुमंगलम् ॥ ऋतुत्रयं पुनर्यावन्नकुर्याल्लघुमंगलम् ॥ लघुवागुरुवाकार्यकार्यंनैमित्तिकंयदि" इति ॥ लघुगुरुमंगलयोर्भिन्नकर्तृत्वेनदोषः । कात्यायनोमुनिःइतिमाह इतीतिकिं व्रतंमुंडनंन चौलमेवमुंडनं मौंजीविवाहात्उभयतःकार्येति । तथाचतद्वाक्यं "मुंडनंचौलमित्युक्तंव्रतोद्वाहौतुमंगलम् ॥ चौलंमुंडनमेवोक्तंवर्जयेद्वरणात्परम् । मौंजीचोभयतः कार्यायतो मौंजीन मुंडनम्" इति । अथसंकटेप्रवृत्तिमाह । भेदेऽब्दस्येति । संकटेदेशकालभयादौ अब्दस्यसंवत्सरस्यभेदेपूर्वोदितंमंगलंवितनुयात् विस्तारयेत्कुर्यादित्यर्थः । तथाचोक्तंसंहितासारावल्यां "फाल्गुनेचैत्रमासेतुपुत्रोद्वाहोपनायने ॥ भेदादब्दस्यकुर्वीतनऋतुत्रयलंघनम्" इति । अथवा वेद्वाहांतरितेचतुर्दिनांतरितेकालेमंगलंवितनुयात् । तथाचस्मृतिसारावल्यां "पुत्रीपरिणयादूर्ध्वंयावद्दिनचतुष्टयम् ॥ पुन्यंतरस्यकुर्वीतनोद्वाहमिति सूरयः" इति । अथवा दिनव्यवहिते एकदिनांतरितेकालेमंगलंकुर्वीत । तथाचोक्तम् "एकोदरप्रसूतानामेकस्मिन्वासरेनरः ॥ विवाहंनैवकुर्वीतमंडनोपरिमुंडनम्" इति । अथवा एकाहेपिनद्यानगेनपर्वतेनअंतरितेदेशेमंगलंवितनुयात् । ज्योतिर्विवरणे "एकोदर्योरेकदिनोद्वाहतोभवेन्नाशः ॥ नद्यंतरएकदिनेकेप्याहुः संकटेचशुभम्" इति । शार्ङ्गधरोपि ॥ "नद्यंतरेपिशुभदंपृथक्शैलस्यरोधतः ॥" इति ॥ ४९ ॥

भा०-और चूडा केशांत सीमंत विवाह यह गुरु मंगल हैं-और इनसे अन्य मंगल लघु मंगल हैं ॥ सो गुरु मंगलके बाद छ महीनोंतक लघु मंगल नही करणा-और गर्भाधानादिकोंके करणेका दोष नहींहै-और कात्यायनमुनि कहतेहैं कि मुण्डन नाम चौलका है विवाहके बाद छ महीनोंतक चौल नहीं करणा-और विवाहसे पूर्व और पश्चात् व्रतको करणेमें दोष नहींहै और संकटमें और वर्षके भेदमें मंगल करणेमें दोष नहींहै-और चारदिनके बाद वा एक दिनके बाद वा नदीका और पहाडका व्यवधान होय तो मंगल करणा ॥ ४९ ॥

एकाहेपिजनाश्रयांतरइहदंतारतम्याद्बुधैर्योज्यंनोयमयोर्निषिद्धमनयोरेकत्रकार्यंजगुः ॥ नैकस्मैदुहितृद्वयंसहजयोर्नैकोद्ववेकन्यकेदद्यादुद्वहनंमिथोनतनुयात्कुर्यांदसंपद्यदः ॥ ५० ॥

एकाहेपीति । अथवा एकाहेपिजनाश्रयांतरेमंडपांतरेमंगलंवितनुयात् "मंडपोस्त्रीजनाश्रय" इत्यमरः । उक्तंचज्योतिर्विवरणे "नप्रतिषिद्धंलग्नंसंप्राप्तेसंकटेमहति ॥ एकोद-

रसंभवयोरेकाहेभिन्नमंडपेकार्यम्'' इति । अथैषांपक्षाणांनिर्णयमाह । इहेदमिति । इहा-स्मिन्विवाहादिविषये इदंभेदेऽब्दस्येत्याद्युक्तंबुधैस्तारतम्याद्योज्यम् संकटानुरूपंयोज्य-मित्यर्थः । अथयमलयोर्विशेषमाह । नोयमयोरिति । यमयोर्यमलयोः इदंनोनिषि-द्धम् अनयोर्यमलयोर्मंगलमेकत्रएकवत्सरेएकवारेएकमंडपेकार्यमितिमुनयोजगुः । उ-क्तंच "एकस्मिन्वत्सरेचैववासरेमंडपेतथा । कर्तव्यंमंगलंस्वस्रोर्भ्रात्रोर्यमलजातयोः" इति । स्त्र्यादीनांस्त्रीणांपुरुषाणांवायमलजातानामप्येवं तुल्यन्यायत्वात् । यमलयोर्म-ध्येएकस्यांस्त्रियामेकस्मिन्पुरुषेसतिस्त्रीविवाहंसमाप्यपुरुषविवाहंकुर्यात् । स्त्रीपुरुषयोः सहविवाहकरणस्याघटमानत्वात् । अथप्रत्युद्वाहनिषेधमाह । नैकस्मैइति । एकस्मैवरा-यदुहितृद्वयमेकोद्भवकन्याद्वयंनदद्यात् । सहजयोः एकोदरसंभवयोर्भ्रात्रोः एकोद्भवेक-न्यकेनदद्यात् । तथामिथः परस्परमुद्वहनंनतनुयात् ।अत्रापिसंकटेप्रवृत्तिमाह—कुर्यादिति। अदः नैकस्मैइत्याद्युक्तमकर्तव्यमसंपादिअन्यवधूवरालाभेसतिकुर्यात् । तथाचनारदः "प्रत्युद्वाहोनैवकार्योनैकस्मिन्दुहितृद्वयम् ॥ नचैकजन्ययोः पुंसोरेकजन्येतुकन्यके" इत्यादि ॥ ५० ॥

भा०—अथवा पृथक् मण्डप करके दोय मंगल करणा—इन विवाहादि विषयोंमें अष्ट भे-दकी तारतम्यसे देखना—और यमलके याने साथ जन्मणेवालोंके एक वर्षमें एकवार-में एक मण्डपमें मंगल करणा ऐसे मुनिलोक कहतेहैं—और एक पुरुषको सहोदर दो क-न्याओंको नहीं देना—और सहोदर दो भाइयोंको सहोदर दो कन्याओंको नहीं देणा—परस्पर विवाह नहीं करणा—और दूसरी कन्या और दूसरा वर नहीं मिले तो संकटमें यह उक्त विचार नहीं करणा—॥ ५० ॥

**नोद्वाहंसतिनिश्चयेपिजगदुःपित्रोःसपित्रोःस्त्रियाःसूनोर्भ्रातुरनूढि-तस्वसुरसूत्क्रांतौपितृव्यस्यच॥अन्येस्वान्वयजात्ययेपिजनकांबा-स्त्रीसुतान्यात्ययेब्दार्द्धार्द्धार्द्धदलांतरेविदधतेहेरंबशांत्याक्वचित्५१**

अथप्रतिकूलनिर्णयमाह—नोद्वाहमिति । निश्चयेपिसतिबुधाः उद्वाहंनजगदुः । कस्यांसत्यां पित्रोः असूत्क्रांतौसत्यां माताचपिताचपितरौतयोः असूनांप्राणानां उत्क्रांतिः उत्क्रमणंतस्यांसत्यामित्यर्थः । कथंभूतयोः पित्रोः सपित्रोः पितरौचपितरौचपितरः मातुः पितरौ पितुः पितरौइत्यर्थः । तैः सहवर्तमानौस-पितरौ तयोः सपित्रोः पुनः कस्यांसत्यां स्त्रियाः असूत्क्रांतौसत्याम् इदंद्वि-तीयविवाहादौज्ञेयम् । एवंसूनोःपुत्रस्य भ्रातुःसहजस्य अनूढितस्वसुः अपरिणीतभगि-न्याःपितृव्यस्यपितृभ्रातुः असूत्क्रांतौसत्याम् । एतदुक्तंभवति''पित्रादीनामुक्तानांमध्ये अन्यतमेमृतेसतिविवाहंनकुर्यादित्यर्थः।तथाचवृद्धशौनकः"वरवध्वोःपितामातापितृव्य-श्चसहोदरः ॥ एतेषांप्रतिकूलंचेन्महाविघ्नप्रदंभवेत्'' ॥ अन्यच्च "पितापितामहश्चैवमाता

चैवपितामही ॥ पितृव्यःस्त्रीसुतोभ्राताभगिनीचाविवाहिता ॥ एभिरेवविपन्नैश्चप्रातिकूलंबुधैःस्मृतम् ॥ अन्यैरपिविपन्नैश्चकेचिदूचुर्नतद्भवेत्" इति ॥ अथान्येषांमतमाह । अन्यइति । अन्येबुधाःस्वान्वयजात्ययेपि स्वकुलजातमर्त्यनाशेपिउद्वाहंनविदधुः । तथाचभृगुः "वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः॥तदोद्वाहोनैवकार्यःस्वपक्षक्षयदोषतः" इति। अथसंकटेप्रवृत्तिमाह। जनकांबास्त्रीति। जनकश्चअंबाचस्त्रीचसुतश्चअन्यश्च अन्यःकुलजःप्रतिकूलाधिकारी एषामत्ययोनाशःमरणमितियावत् तस्मिन्सति अब्दार्द्धार्द्धार्द्धदलांतरेहेरंबशांत्यागणेशशांत्याक्वचित्संकटेविदधतेबुधाइत्यध्याहारः। एतदुक्तंभवति, वरस्यवध्वावापितृनाशेअब्दांतरेवर्षांतरे मातृनाशेअर्द्धांतरेषण्मासांतरे स्त्रीनाशेअर्द्धार्द्धांतरे त्रिमासांतरे।एतद्द्वितीयादिविवाहेज्ञेयम्। तथापुत्रनाशेअर्द्धांतरेसार्द्धमासांतरेअन्यनाशे पितृमातृस्त्रीत्यादिभ्योन्यस्यकुलजस्यनाशे दलांतरेसार्द्धमासस्यार्द्धांतरे त्रयोविंशतिदिनांतरेविदधतेइत्यर्थः ॥ ५१ ॥

## अब प्रतिकूलका निर्णय करतेहैं।

भा०-और जो पिता-पितामह-पितामही, माता-मातामह-मातामही-स्त्री-पुत्र-भ्राता-अविवाहिता भगिनी-पितृव्य-इन्हों उक्त मनुष्योंमेंसे कोईकी मृत्यु होजाणेके बाद छ महीनोंमें विवाह नहीं करणा निश्चय हो जावेतो-और केहीक आचार्य कहतेहैं कि स्वकुलमें भी कोईकी मृत्यु होयतो विवाह नहीं करणा ॥

## अब अत्यंत संकष्टमें प्रवृत्ति कहतेहैं।

भा०-और माताकी मृत्युसे ६ छ महीनोंमें स्त्रीकी मृत्युसे ३ तीन महीनोंमें और पुत्रकी मृत्युसे डेढ महीनामें और स्वकुलमें कई मृत्यु होनेसे २३ तेवीस दिनोंमें गणेशशांति करके विवाह करणा ॥ ५१ ॥

**भ्रातुश्चात्मजवद्व्ययेतिसमयेपित्रोर्मृतेः संशयेनान्येषांप्रतिकूलमामयिविरक्तारादृतानामपि ॥ आतुर्यान्मृतनृक्रियानभिभवेनांदीमुखंनाचरेन्नोकुर्याज्ज्वरितस्यमंगलमतिव्याध्युद्भवेनिश्चयम् ॥५२॥**

अन्यमध्येभ्रातुर्विशेषमाह-भ्रातुश्चात्मजवदिति।भ्रातुर्नाशेपुत्रवत्पुत्रनाशोक्तवज्ज्ञेयं सार्द्धमासांतरेकर्तव्यमित्यर्थः। तथाचस्मृतिसारावल्यां "पितुरब्दमिहाशौचंतदर्द्धमातुरेवच ॥ मासत्रयंतुभार्यायास्तदर्द्धंभ्रातृपुत्रयोः॥अन्येषांतुसपिंडानामाशौचंमाससंमितम् ॥ तदातुशांतिकंकृत्वाततोलग्नंविधीयते" इति। स्मृत्यंतरेप्युक्तम् "संकटेसमनुप्राप्ते याज्ञवल्क्येनयोगिना॥शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेत् ॥ अकृत्वाशांतिकंयस्तु निषेधेसतिदारुणे॥प्रकरोतिशुभंगर्वाद्विघ्नस्तस्यपदेपदे" इति। ज्योतिःप्रकाशे "प्रतिकूलेपिकर्तव्योविवाहोमाससमंतरात्॥शांतिंविधायगांदत्त्वावाग्दानादिचरेत्पुनः"॥इत्येतत्प्रौ

ढायांकन्यकायांपित्रोर्मरणेपिज्ञेयम्। प्रतिकूलेपिप्रतिकूलाभावमाह। भयइत्यादि। भयेदुर्भिक्षराजभयेअतिसमयेअतिकालेपित्रोर्मातापित्रोर्मृते:संशयेसति अन्येषांमातृपितृभ्यामन्येषांमृतानांप्रतिकूलंनास्ति। तथाचोक्तंज्योतिःसागरे "दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये॥ प्रौढायामपिकन्यायांनान्यकूलंप्रतीक्षते" इति। विशेषांतरमाह आमयिविरक्तौराद्गतानामपिप्रतिकूलंनास्ति आमयीरोगीदीर्घरोगीतियावत्। विरक्तो गृहादिषूदासीनः आराद्गतोदूरगतः देशांतरगतइतियावत्। "आराद्दूरसमीपयोः" इत्यमरः। एषामपिमृतानांप्रतिकूलंनास्ति। तथाचोक्तंस्मृत्यंतरे "दीर्घरोगाभिभूतस्य दूरदेशेस्थितस्यच॥ उदासवर्तिनश्चैवप्रतिकूलंनविद्यते" इति। अथान्यानपिशास्त्रार्थानाह-आतुर्यादिति। तुर्यश्चतुर्थःपुरुषः मूलपुरुषाच्चतुर्थइत्यर्थः। तंमर्यादीकृत्यमृतस्य नरस्यक्रियायाअनभिभवेअभावेसतिकचित्कारणांतरात्क्रियायामकृतायांनांदीमुखंनाचरेत् एतत्स्वगोत्रविषयम्। तथाचमेधातिथिः "प्रेतकर्माण्यनिर्वृत्यचरेन्नाभ्युदयक्रियाम्॥ आचतुर्थंततः पुंसिपंचमेतुशुभंभवेत्" इति। नोकुर्यादिति। ज्वरितस्यमंगलंनो कुर्यात्। तथाचगर्गः "ज्वरस्योत्पादनंयस्यशुभंतस्यनकारयेत्। दोषनिर्गमनात्पश्चात्स्वस्थेधर्मंसमाचरेत्॥" इति। अतीति। अतिव्याध्युद्भवेकस्यचित्कुलजस्यशरीरे अतिदारुणज्वरोत्पत्तौ निश्चयेनोकुर्यात्प्रतिकूलभीत्या "रोगःपाप्माज्वरोव्याधिर्विकारोदुःखमामये" इत्यादिवाग्भट्टेज्वरपर्यायनामानि। तथाचगर्गः "केचिद्वदंतुर्गृहस्थस्य कस्यचिद्दारुणोज्वरः। तावन्मंगलकार्यंचनकार्यंनिश्चितंबुधैः" इति॥ ५२॥

भा०-और भाईकी मृत्यु होवे तो पुत्रवत् करणा अर्थात् डेढ महीनामें विवाह करणा और दुर्भिक्षमें काल व्यतिक्रममें माता पिताके मरणेके संशयमें दूसरोंके मरणका प्रतिबंधक नहीं होय और रोगी विरक्त दूरदेशगत इन्होंके मरणेकोभी प्रतिकूल नहीं होय--और मूलपुरुषसे चार पुरुषतक कोई मरजाय और कारणांतरसे उनकी क्रिया न होयतो नांदीमुखको नहीं करणा--और ज्वरवालेके मंगल नहीं करणा-और स्वकुलमें कोई असाध्य व्याधिवाला होय तो भी मंगल नहीं करणा॥ ५२॥

**चेत्स्यात्सूतकमुक्तपूर्वसमयेनारब्धकार्येबुधःकूष्मांडीघृतहोमतो द्विजननाशौचेक्वचित्कारयेत्॥सिंहेज्येनशुभंहितंहरिलवोध्वर्गौतमीदक्षिणेजाह्नव्युत्तरतःक्वचिद्धितमजेर्केतोस्रभीत्यादिषु॥ ५३॥**

अथमहत्संकटेसतिवृद्धिसूतकेकर्मार्हतामाह-चेत्स्यादिति। उक्तपूर्वसमये यज्ञोद्वाहनचौलमौंजिकमित्यत्रोक्तेपूर्वकाले अनारब्धकार्येसतिकर्मणिअनारब्धेसति संकटेचप्राप्तेसति कूष्मांडीघृतहोमतः कूष्मांडीभिर्यद्देवादेवहेडनमित्यादितिसृभिर्ऋग्भिर्घृतहोमः कूष्मांडीघृतहोमः तेनजननाशौचेदशाहतःजन्मदशाहमध्येकर्मआचरेत् कूष्मांडीघृतहोमं

शास्त्रोक्तंसदक्षिणंकृत्वाकर्मकर्तव्यमित्यर्थः। तदुक्तंस्मृत्यंतरे "संकटेसमनुप्राप्ते सूतकेस-मुपागते। कूष्मांडीभिर्घृतंहुत्वागांदत्वाचपयस्विनीम्। चूडोपनयनोद्वाहौप्रतिष्ठादिक-माचरेत्" इति॥ स्मृत्यंतरे "अनारब्धविशुद्ध्यर्थं कूष्मांडैर्जुहुयाद्घृतम्। गांदद्या-त्पंचगव्याशीततःशुद्ध्यतिसूतकी" इति। अथसिंहेगुरौसतिमंगलनिषेधमाह। सिंहे-ज्ये इति। सिंहेसिंहराशौईज्यःसिंहेज्यःतस्मिन्सतिशुभंनित्यव्यतिरिक्तंनहितंस्यात्। इदंतुपूर्वमेवप्रपंचितम्। तथाचकालनिर्णये "शांतिकंपौष्टिकंयात्राप्रतिष्ठोद्वाहपूर्वकम्। नकुर्यात्सर्वमांगल्यं सिंहस्थेचबृहस्पतौ॥" तथाचमांडव्यः "इष्टापूर्तंचचौलादिसंस्का-रान्वास्तुकर्मच। अन्यानिशुभकर्माणिनकुर्यात्सिंहगेगुरौ" इति। अथसंकटेप्रवृत्ति-माह हरिलवोर्ध्वमिति। क्वचित्संकटेदेशकालभयादौसिंहेज्येपिहरिलवादूर्ध्वंसिंहांशादूर्ध्वं गौतम्याः दक्षिणतः जाह्नव्याउत्तरतःशुभंकर्महितंस्यात्। तथाचज्योतिर्निबंधे "सिंहे गुरौसिंहनवांशकोर्ध्वं गोदावरीदक्षिणकूलजातैः। उद्वाहकालात्ययदोषभीतैः कार्यो विवाहश्च्यवनो ब्रवीति" इति॥ तथाचगर्गः "भागीरथ्युत्तरेतीरे गोदावर्याश्चदक्षिणे। व्रतोद्वाहादिकर्माणि सिंहसंस्थेनदुष्यति" इति। अर्थाद्गोदावर्याःउत्तरेभागीरथ्याः दक्षि-णेएवं द्वयोर्गोदाजाह्नव्योर्मध्येसंकटेपिशुभंनआचरेदितिसिद्धम्। तथाचवसिष्ठः "गो-दावर्युत्तरेतीरे भागीरथ्याश्चदक्षिणे। विवाहादिनकुर्वीत सिंहसंस्थेचवाक्पतौ" इति। अत्राप्यतिसंकटेप्रवृत्तिमाह—अजेति। अस्त्रभीत्यादिषुरजोभयादिषुसत्सु अन्तःगोदा-जाह्नव्योर्मध्ये हरिलवादूर्ध्वंसिंहेज्येसति अजेमेषेइनेसूर्येसतिशुभमाचरेत्। अजेइनेइत्येत-द्विवाहविषयमस्त्रभीत्यादिष्वित्यनेनपदेनलक्ष्यते। तथाचशौनकः "मेषस्थेदिवसकरेसिं-हस्थे वज्रपाणिसचिवेच। यस्याःपरिणयनमसौसाध्वीसुखसंपदोपेता" इति। व्रतबं-धस्तु मीनगेसूर्येसति चैत्रेकर्तव्यइतिग्रंथकृताप्रागेवोक्तम्। अनिमिषरविमवौकार्यमिति। तथा चमौंजीपटले "जन्मभादष्टगेसिंहेनीचेवाशत्रुगेगुरौ। मौंजीबंधःशुभःप्रोक्तश्चैत्रेमी-नगतेरवौ"॥ अथवा इनेईज्येतत्पदंसर्वशुभसाधारणविषयम्। तथाचशौनकः "सिंह-स्थेदेवगुरौमेषस्थोयदिभवेत्सहस्रांशुः। मंगलकार्यंकुर्यादितिनारदपराशरौवदतः" इति। अस्त्रभीत्यादिष्वित्यत्रादिशब्देन वृद्धपितृमरणशंकायां कर्त्रंतराभावाद्यतिसंकटेज्ञेयम्॥५३

## अब महत् संकट होणेसे वृद्धि सूतकमें कर्मयोग्यताको कहतेहैं।

भा०—उक्त पूर्व समयमें कार्यका प्रारंभ तो होवे नहीं और संकट प्राप्त हो जावे तो कूष्मांडी ऋचाओंसे घृतका होम करके जन्मका आशौच होवे तो भी कर्म करणा--अब सिंहके गुरुमें मंगल करणेका निषेध करते हैं॥ सिंह राशिका गुरु होयतो शुभ कर्म नहीं करणा--और अतिसंकट होयतो सिंहके नवांशको छोडके गौतमी नदीके दक्षिणमें और गंगाके उत्तरमें शुभ कर्म करणा--और रजोभयादिकमें सिंहके नवांश विना मेषका सूर्य होय तो सिंहके गुरुमें गोदा जाह्नवीके बीचमें शुभकर्म होवैहै॥ ५३॥

देशग्रामगृहज्वरव्यवहृतिद्यूतेषुदानेमनौसेवाकाकिणिवर्गसंगरपु-नर्भूमेलकेनामभम् ॥ जन्मर्क्षपरतोवधूपुरुषयोर्जन्मर्क्षमेकस्यचे-ज्ज्ञातंशुद्धिमितोविलोक्यचतयोर्नामर्क्षयोर्मेलकः ॥ ५४ ॥

अथ नामराशिजन्मराश्योर्निर्णयमाह देशःप्रसिद्धः ग्रामःप्रसिद्धः गृहंप्रसिद्धम् ज्वरः प्रसिद्धः इत्यादिषुनामराशिःप्रधानंस्यात्। एतदुक्तंभवति देशग्रामगृहेषुप्रवेशाद्यर्थं ज्वरेचंद्राद्यवलोकनार्थं व्यवहृतिर्व्यवहारः द्यूतंप्रसिद्धम्दानंतुलापुरुषादि एषुचंद्रबलाद्यर्थं मनौमंत्रेमेलनार्थं चन्द्रबलाद्यर्थंच सेवाराजादिसेवा तत्रमेलनाद्यर्थं काकिण्यांकाकिण्यवलोकनार्थं वर्गशुद्ध्यर्थं संगरेसंग्रामे चन्द्रबलाद्यर्थं पुनर्भूमेलकेपुनर्भूमेलनाय नामराशिरवलोकनीयइत्यर्थः। परतःएभ्योन्यत्रविवाहयात्रादौ जन्मर्क्षजन्मराशिःप्रधानंस्यात्। तथाचज्योतिर्निबंधे-"देशेग्रामेगृहेयुद्धे सेवायांव्यवहारके। नामराशेःप्रधानत्वं जन्मराशिंनचिंतयेत्" इति ॥ "काकिण्यांवर्गशुद्धौच दानेद्यूतेज्वरोदये। मन्त्रे पुनर्भूवरणेनामराशेःप्रधानता" इति ॥ विवाहेसर्वमांगल्येयात्रादौग्रहगोचरे। जन्मराशेःप्रधानत्वंनामराशिंनचिंतयेत्" इति ॥ अथवधूवरयोर्मध्ये एकस्यजन्मर्क्षंज्ञातमेकस्य नज्ञातंतदाशुद्धिमेलादिकंकथमवलोकनीयमित्याह वधूपुरुषयोरिति। वधूपुरुषयोर्मध्ये चेद्यदिएकस्यजन्मर्क्षंज्ञातमेकस्यनज्ञातंतदाइतःज्ञातात् जन्मर्क्षादेकस्यशुद्धिंविलोक्यतयोर्वधूवरयोर्नामर्क्षयोर्मेलकोवर्णवश्यादिकःपूर्वोक्तोविलोक्यः। अर्थाद्द्वयोराश्यज्ञानेनामर्क्षादेवसर्वंविलोक्यम्। तथाचशार्ङ्गधरः "विवाहघटनंचैव लग्नजंग्रहजंबलम्। नामभाच्चिंतयेत्सर्वंजन्मनज्ञायते यदा" ॥ ५४ ॥

अब नामराशि और जन्मराशिका निर्णय करतेहैं।

भा०-देशप्रवेशमें-ग्रामप्रवेशमें-गृहप्रवेशमें-ज्वरमें-व्यवहारमें-द्यूतमें-दानोंमें-मंत्रमें मेलनमें-नोकरीमें-राजसेवामें-काकिणीके देखनमें-वर्गशुद्धिमें-संग्राममें पुनर्भूमेलनमें-उक्तकामोंमें नाम राशि देखणी ॥ और अन्य विवाहादिकोंमें जन्मराशि देखणी-दोके बीचमें एकका जन्मर्क्ष ज्ञात होय और दूसरेका ज्ञात नहीं होय तो ज्ञातवालेके जन्मर्क्षसे गुर्वादि शुद्धिको देखके फेर वधूवरके नाम राशिसे वर्णादिकको देखणा ॥ ५४ ॥

भंनामादिमवर्णतोवकहडाद्युज्यादिवर्णाद्द्वौतुल्यावत्रशसौखषौ यदभिधाबह्वचोस्यनामांतिमम् ॥ आर्यान्तुद्वहनेजनुर्भममलंपट्टस्यबंधेजगुर्गेहग्रामनृपाभिषेककृषिमौंज्यन्नाशनेभूषणे ॥ ५६ ॥

इति विवाहप्रकरणम् ॥

अथमेलकार्थनाम्नोनक्षत्रज्ञानमाह भंनामेति । नामादिमवर्णोनामाद्यक्षरंतस्मात् अवकहडंशतपदंचक्रं यस्मात्चक्रात्चूचेचोलापदेष्वाद्येत्यादयःश्लोकानिबद्धास्तस्माच्चक्रात्भंनक्षत्रंज्ञेयम् । तद्यथा चूडामणीतिनाम्नः आद्याक्षरात्चकारात्चूचेचोलाइत्यादिनाअश्विनीनक्षत्रंतत्रप्रथमचरणइतिवत्ज्ञेयमित्यर्थः । तथाचदीपिकायाम् "जन्मन ज्ञायतेयेषांतेषांनामगवेष्यते । चक्रेवकहडेभांशौतन्नाडीकैश्चिदग्निभात्" इति । तन्नाडीत्यस्यार्थः । यदानाम्नोनक्षत्रंगवेष्यते तदाअग्निभात्कृत्तिकानक्षत्रात्नाडीविलोक्येतिकैश्चिदुक्तं कैश्चिदितितन्मतमग्राह्यम् तस्मादश्विन्यादित्रिकंव्यस्तमितिन्यायेननाड्यवलोकनंबहुसंमतमितिभावः । अथनामादौसंयोगाक्षरेसतिकिंकर्तव्यमित्यपेक्षायामाह युज्यादिवर्णादिति । युजियुक्तेऽक्षरेसंयुक्ताक्षरेप्रद्युम्नेत्यादिकेनामादौयुक्ताक्षरेसतिआदिवर्णात्प्रथमवर्णात्संज्ञेयम् । यथा प्रद्युम्नेनाम्निप्रथमवर्णःप्रःतत्राप्याद्यः पकारस्तस्मात्भंज्ञेयमित्यर्थः । प्रियवचेत्यादौप्रिकारएव द्रुपदेत्यादौद्रुकारएवग्राह्यइत्यादि स्वरशास्त्रे "संयोगाक्षरजेनाम्निज्ञेयंतत्रादिमाक्षरम्" इति । अथअवकहडचक्रेनामाद्यक्षराभावेसतिकिं कर्तव्यमित्यपेक्षायामाह बवौतुल्यावत्रशसौखषाविति । अत्रावकहडचक्रेबवौइतिइमौवर्णौतुल्यौ तथाचखषौशिवइति नाम्निसतिअवकहडचक्रेशकारस्याभावात्शकारस्थानेसकारांगीकारात्भंज्ञेयमितिभावः । एवमेवशसौतथाखषौपरस्परवर्णौज्ञातवार्भं ज्ञेयम् । तथाचस्वरशास्त्रे "खषौशसौबवौचैवज्ञेयाविति परस्परम्" इति अन्यच्च "नप्रोक्ताङञणावर्णानामादौसंतितेनहि ॥ चेद्भवंतितथाज्ञेयागजडास्तेयथाक्रमम्" इति "चक्रंशतपदंवक्ष्येऋक्षांशाक्षरसंभवम्" इति ॥ स्वरशास्त्रोक्तमवकहडचक्रंप्रसिद्धम् । अथयस्यबहूनिनामानिसंतितस्यकस्मान्नाम्नोभंज्ञेयमित्याकांक्षायामाह यदभिधाबह्वयोस्यनामांतिममिति । यस्यअभिधानानामानिबह्वयोभवंति तस्यांतिमंपश्चाद्भवंनाम ग्राह्यम् । तथाचस्वरशास्त्रे "बहूनियस्यनामानिनरस्यस्युः कथंचन ॥ तस्यपश्चाद्भवंनामग्राह्यंस्वरविशारदैः" इति । अथजन्मनक्षत्रंयेषुयेषुशस्तंतान्याह आर्याइति । उद्वहने पुरुषविवाहे जनुर्भंजन्मनक्षत्रममलंनिर्दूषणंजगुः तथापट्टस्यबंधने गेहंगृहकरणप्रवेशनं तथाग्रामोग्रामप्रवेशनं नृपाभिषेकोराजाभिषेकः कृषिःप्रसिद्धा मौंजीप्रसिद्धा अन्नाशनं नवान्नप्राशनं भूषणंभूषणधारणम् एषांसमाहारस्तस्मिन्जन्मभंशुभदंजगुः । तथाच ज्योतिःप्रकाशे "जन्मभंकृषिनृपाभिषेचनेभूषणेनगरगेहकर्मणि ॥ आधिपत्यभुविमौंजिबंधनेपुंविवाहउदितंशुभंबुधैः" इति । राजमार्तंडे "वसंतसमयेदद्यादब्देगर्भाष्टमेष्टमे॥ मेखलांजन्ममासेपिजन्मभे चतिथावपि" इति ॥ नारदः "पट्टबंधनचौलान्नप्राशनेचोपनायने ॥ शुभदंजन्मनक्षत्रमशुभंत्वन्यकर्मणि" इति ॥ ९५ ॥

इति स्वकृतमुहूर्तमार्तण्डटीकायां मार्तण्डवल्लभायां विवाहप्रकरणं समाप्तम् ॥

---

अब मेलनेके लिये नामके नक्षत्रका ज्ञान कहतेहैं।

भा०-अवकहड (शतपद) चक्रमें नामके आदिवर्णसे नक्षत्रको देखणा-और नामादि वर्ण संयोगी होयतोभी आद्यवर्णसे देखणा-जैसे प्रद्युम्नके पकारसे देखा जाता है-और जिसके बहुत नाम होयतो अंत्य नामसे देखणा ॥ और पुरुषके विवाहमें जन्मनक्षत्रसे श्रेष्ठ होय-और पट्टबंधनमें और गृह करणेमें और प्रवेशमें और ग्रामप्रवेशमें-और राज्याभिषेकमें और खेती करणेमें-और मौंजीमें-और अन्नप्राशनमें-और भूषणधारणमें-इन्हों उक्त कार्योंमें जन्मनक्षत्रको देखणा शुभ होताहै ॥ ५५ ॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्रमोडुरामविरचितायांमार्तण्ड-दर्शिन्यां विवाहप्रकरणं समाप्तम् ॥

---

**अथाग्न्याधानम्॥अग्न्याधानमवादिदारसमयेदायाद्यकालेपरैर्द्वी-शाग्निध्रुवशाक्रपुष्यमृगपौष्णैर्व्यब्जलग्नांशयोः॥ जीवेंद्वर्ककुजैः सुतर्द्धिगुरुकेंद्रस्थैरनस्तंगतैः स्वोच्चेष्टर्क्षगतैःपरैरुपचयैर्वित्ताद्य-शुद्धौबुधैः ॥ १ ॥ इत्यग्न्याधानम् ॥**

अथाग्न्याधानंवृत्तेनैकेनाह ॥ ॥ अग्न्याधानमिति। अग्नेराधानंबहुभिर्बुधैर्दारकाले अवादिकथितम्।चतुर्थीकर्मानंतरंदारकालः परैराचार्यैर्दायाद्यकालेधनविभागकालेअवादि। तथाचवृत्तशते "अग्न्याधानंदायकालेविधेयंकैश्चित्प्रोक्तंतच्चदायाद्यकाले" इति ॥ तथाचकात्यायनगृह्ये"आवसथ्याधानंदारकालेदायाद्यकालेएकेषाम्"इति। एतद्भाष्य-कारैरेवंव्यवस्थापितम् अभ्रातृमतोदारकाले भ्रातृमतोदायाद्यकालेप्रोक्तमिति। स्मृतिषु कृतदारस्याग्निनाविनाबहुदोषोदृश्यते। तथाहि "कृतदारोनैवतिष्ठेत्क्षणमप्यग्निनाविना॥ तिष्ठन्सचेद्द्विजोव्रात्यस्तथाचपतितोभवेत्॥ पितृपाकोपजीवीस्यात्भ्रातृपाकोपजीवकः॥ ज्ञानाध्ययननिष्ठोवानदुष्येताग्निनाविना॥ योनाग्निमुपसेवेतदारान्कामाद्दतावपि॥ प-रदारीसविज्ञेयःस्वस्त्रीस्वीकरणादपि ॥ यथाज्ञानंयथासंध्यावेदस्याध्ययनंयथा ॥ तथैवोपासनंदृष्टंनस्थितिस्तद्वियोगतः" इत्यादि। तस्मात्सूत्रकारैः कात्यायना-दिभिः दारकालएवबाहुल्येनोक्तम्। अग्न्याधाननक्षत्राण्याह। कैः द्वीशाग्निध्रुवशा-क्रपुष्यमृगपौष्णैः द्वीशंविशाखा अग्निःकृत्तिका ध्रुवाणित्र्युत्तरारोहिण्यः शाक्रं ज्येष्ठा पुष्यमृगौप्रसिद्धौ पौष्णंरेवतीतैः। कयोः व्यब्जलग्नांशयोः विगताः अब्जाः याभ्यांतौव्यब्जौतौचतौलग्नांशौचतयोः। अब्जाः जलचरराशयः मकरस्यपश्चिमार्द्धं कुंभोमीनः कर्कटश्चैतेजलचरराशयः चंद्रोपिजलजः एतैरहितयोर्लग्ननवांशयोरित्यर्थः। तथाचवृत्तशते "कर्किनक्रघटमीनविलग्नेवांशकेननुगतेथतदीये। लग्नगेकुमुदिनीदयि-तेवानाशमेतिजनितोपिहुताशः" इति। कैः जीवेंद्वर्ककुजैः सुतर्द्धिकेंद्रगुरुस्थैः जीवोगुरुः इंदुश्चंद्रः अर्कःसूर्यः कुजोभौमः तैः। सुतःपंचमम् ऋद्धयउपचयभवनानि

गुरुर्नवमं केंद्राणि प्रथमचतुर्थसप्तमदशमानि ५, ३, ६, ११, १०, ९, १, ४, ७, १० एतत्स्थानगतैः। कथंभूतैः अनस्तंगतैः सूर्यकिरणैरलुप्तैः। पुनः कथंभूतैः स्वोच्चेष्टर्क्षगतैः स्वश्चउच्चानिचइष्टाश्चएषामृक्षाणिराशयस्तद्गतैः स्वराश्युच्चराशिमित्रराशिगतैरित्यर्थः। परैरुक्तेभ्योन्यैर्ग्रहैः उपचयैः त्रिषडेकादशदशमगैः। कस्यांसत्यां वित्ताद्यशुद्धौ सत्यां वित्तंद्वितीयम् आद्यंलग्नं तयोः शुद्धिः क्रूरराहित्यंतस्यांसत्यां शेषंपूर्ववत् प्रायश्चंद्रमित्युक्तमवलोक्यम्। तथाचवृत्तशते "केंद्रर्क्षोपचयत्रिकोणभगताः सूर्यारजीवेंदवः शेषाश्चोपचयस्थितायदितदाग्न्याधानमुक्तंशुभम्। चंद्रेनैधनगेत्रियेतयुवतिभौमेपुमानष्टमेशेषैर्मृत्युगतैरुजाचसहितोग्न्याधानकर्ताभवेत्। नोकुर्याद्धुतभुक्परिग्रहमिहक्ष्मापुत्रजीवेंदुभिर्नीचस्थैर्विजितैरिपोर्भवनगैरस्तंगतैर्वाद्विजैः" इति। तथाचसंहितासारे। "अग्न्याधानंनकुर्वीतकर्किनक्रत्रयेविधौ। लग्नेगेधनगेपापेतथारंध्रग्रहान्विते" इति ॥ १ ॥ इतिस्वकृतमुहूर्तमार्तण्डवल्लभायामग्न्याधानप्रकरणम् ॥

## अब अग्न्याधानके मुहूर्तको कहतेहैं।

भा०-कई आचार्य कहते हैं कि चतुर्थीकर्मके पश्चात् अग्न्याधान करणा ॥ और कइ आचार्य कहते हैं कि दो वा बहुत भाइयोंके धनविभागकालमें करणा-विशाखा-कृ० ध्रुव-ज्येष्ठा-पुष्य-मृग-रेवती-इन्हों नक्षत्रोंमें अग्न्याधान करणा-और १० । १२ । ४ । इन राशियोंका लग्न होय तो नहीं करणा-और मकरके उत्तरार्द्धमेंभी नहीं करणा-और चंद्रमा लग्नमें होय तोभी नहीं करणा-और गुरु चंद्र सूर्य भौम यह ग्रह उदय होके वा स्वराशिके होके वा उच्च होके वा मित्रराशिके होके ५ । ३ । ६ । ११ । ९ । १ । ४ । ७ । १० इन्हीं स्थानोंमें होय तो श्रेष्ठ होय ॥ और अन्यग्रह ३ । ६ । ११ इन्हों स्थानोंमें होय तो श्रेष्ठ होय-और पहिले दुजेमें पाप ग्रह नहीं होय तो अग्न्याधान श्रेष्ठ होवे है ॥ १ ॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्रमोडुरामकृतायां मार्त्तण्डदर्शिन्यामग्न्याधानप्रकरणं समाप्तम् ॥

---

**नामर्क्षाद्द्विसुतांकदिग्भवगतोग्रामःशुभोन्योन्यथातत्कोणेंत्यभुवांशुभंनिवसतांदोषाःपरेषामलम् ॥ कन्याकर्किधनुस्तुलाक्रियघटाःकौप्यैडजौयाम्यतोमध्येन्येन्यवसंत्यथेंद्रककुभोवर्गाःस्युरोजस्विनः ॥ १ ॥**

अथगृहप्रकरणंविवक्षुस्तावद्ग्रामविचारमाह।नामर्क्षादिति।नामर्क्षान्नामराशेःसकाशात् द्वि२सुतां५क९दिक्१०भव११गतोग्रामःशुभः स्यात्। अन्यउक्तविपरीतोग्रामः अन्यथा स्यादशुभः स्यादित्यर्थः। तदुक्तंज्योतिःसागरे। "एकभेसप्तमेग्रामेवैरंहानिस्त्रिषष्ठगे। तुर्याष्टद्वादशेरोगःशेषस्थानेसुखंभवेत् ॥" इति। एवंग्रामंशुभाशुभमभिधायेदानींग्रामादिङ्नियममाह। तत्कोणइति। तत्कोणेतस्यग्रामस्यकोणे अंत्यभुवांरजकचर्मकारादीनांनि-

वसतांवसंतिकुर्वतांशुभंस्यात् । " रजकश्चर्मकश्चैवनटोबुरुडएवच ॥ कैवर्तमेदभिल्लाश्चसप्तैतेअंत्यजाः स्मृताः " इत्यादीनांग्रामकोणेशुभंस्यादित्यर्थः । तत्कोणेनिवसतां परेषांवर्णानामलमत्यर्थंदोषाः स्युः । अशुभानिस्युरित्यर्थः । तथाचज्योतिर्निबंधे "भवनपुरग्रामाणांयेकोणास्तेषुनिवसतांदोषः ॥ श्वपचाद्योंत्यजाद्यास्तेष्वेवाविवृद्धिमायांति " एवंजातीनांशुभाशुभदिग्विभागमुक्त्वाराशिपरत्वेनदिक्षुवसतिमाह । कन्येति । यमाशादितःदक्षिणस्याःसकाशात्क्रमेणाष्टासुदिक्षुकन्याकर्किधनुस्तुलादयो राशयोनिवसंति । अन्येउर्वरितामध्येनिवसंति । एतदुक्तंभवति अभीष्टंग्रामंनवभागं परिकल्प्यमध्यभागाद्दक्षिणभागेकन्यावसति कन्याराशिनादक्षिणभागेगृहंनकार्यमित्यर्थः।तथैवनैर्ऋतेकर्कटः पश्चिमेधनुः वायव्येतुला उत्तरेअजोमेषः ईशान्यांघटःकुंभःपूर्वेकौर्पीवृश्चिकः आग्नेयेअंडजोमीनः निवसति । अन्येवृषमिथुनसिंहमकरामध्यभागे निवसंति । एवंराशिपरत्वेनदिङ्नियममुक्त्वाइदानींवर्गपरत्वेनदिङ्नियममाह । अथेति । इंद्रककुभः सकाशात् अष्टासुदिक्षु अप्रमुखाःअष्टौवर्गाः अकचटतपयशवर्गाः इत्येतेप्रसिद्धाः ओजस्विनोबलवंतःस्युरित्युत्तरश्लोकेनान्वयः ॥ १ ॥

**अब गृहप्रकरणको कहनेकी इच्छा करके प्रथम ग्रामविचार करतेहैं ।**

भा०-अपनी राशिसे २ । ५ । ९ । १० । ११ इतना ग्राम होय तो शुभ होय--और इनसे अन्य अशुभ है--और ग्रामके कोणेमें धोबी मोची नट बुरुड--भील इत्यादिक नीच लोक रहें तो अच्छा होय ॥ और ग्रामके कोणेमें ब्राह्मणादिक रहें तो अच्छा नहीं होय--और ग्रामके नव ९ भाग करके यथाक्रमसे दक्षिण दिशासे ६ । ४ । ९ । ७ । ११ । ८ । १२ । इन्हों राशियोंके पुरुष न रहें--जैसे कन्या राशिवाले पुरुषको दक्षिणमें नहीं रहणा और कर्कवाला नैर्ऋतमें न रहै ऐसे समझलो--और २ । ३ । ५ । १० इन्हो राशियोंके पुरुषोंको ग्रामके मध्यमें नहीं रहणा--और पूर्व दिशासे लेके अवर्गादि वर्गवाला रहै तो बलवान् होय--जैसे अवर्गको पूर्वमें रहणा और क० च० ट० त० प० य० श० अग्नि द० नै० प० वा० उ० ई० ऐसे क्रमसे समझो ॥ १ ॥

| ई. | पू. | अ. |
|---|---|---|
| उ. | म. | द. |
| वा. | प. | नै. |

**अष्टावप्रमुखाःस्वपंचमपराद्विघ्नः स्ववर्गोन्ययुक्त्वष्टःकाकिणिका गजैर्मिथइमायस्याधिकाःसोर्थदः॥ श्वेतारक्तकपीतकृष्णवसुधास्स्वादुःकटुस्तिक्तकाकाषायाघृतशोणितान्नमदिरागंधाःशुभाविप्रतः ॥ २ ॥**

अष्टाविति । एतदुक्तंभवति । अआइईउऊइत्यादिकः षोडशाक्षरोवर्गःपूर्वस्यांबली कादिकःपंचाक्षरआग्नेय्यां चादिकोदक्षिणस्यां टादिकोनैर्ऋत्यां तादिकःपश्चिमायां पादिकोवायव्यां यादिकउत्तरस्यां शादिकईशान्यांबली । अयमर्थः । स्वनामादिमाक्षरांतवर्गंज्ञात्वास्वस्थानेगृहं कार्यमितिभावः । यतःस्वस्वस्थानेप्राणिनोबलवंतइतिलोके प्रसिद्धम् । किंलक्षणावर्गाः स्वपंचमपराः स्वेभ्यःपंचमाःपराःवैरिणोयेषांतेतथा यथा

अवर्गस्यपंचमस्तवर्गःसोस्यवैरी कवर्गस्यपंचमःपवर्गःसोस्यवैरी एवंसर्वेषांवर्गाणांवैरिणोज्ञातव्याः। वैरित्वंहिस्वामिवशेन। एतदुक्तंभूपालवल्लभे" वर्गेशास्ताक्ष्यमार्जारसिंहाः श्वासर्पमूषकौ ॥ इभैणौपूर्वतस्तेषांस्ववर्गात्पंचमोरिपुः" इति तस्मात्स्ववैरिवर्गस्यादिशिगृहंनकार्यमितिभावः। अर्थादन्यत्रमध्यमं तत्रापिस्वदिग्वर्गासन्नंशुभम् वैरिदिगासन्नमशुभमितिबुद्ध्याज्ञेयम् एवंस्ववर्गग्रामवर्गयोर्मित्रारित्वमवलोक्यवासःकर्तव्यइतिसिद्धम्। तत्रराशिघटितवर्गघटितयोर्मध्येराशिघटितंबलवत्। एतदुक्तंज्योतिःसागरे "केप्याहुरथवर्गाणांस्वस्थानेशुभदंगृहम्" इति। अथवर्गघटितेकाकिणिकाआह। द्विघ्न इति। स्ववर्गोग्रामवर्गःवसतिकर्तुर्वर्गश्चद्विघ्नःद्विगुणितःकार्यःमिथःअन्ययुक्अन्यवर्गयुक्कार्यः गजैरष्टभिस्तष्टःशेषितःसन् काकिणिकाःस्युः। इमाःकाकिणिकाःयस्यअधिकाः सोर्थदोधनदाता स्यात्। एवंग्रामदिङ्नियममुक्त्वाइदानीं "निर्माणेपत्तनग्रामक्षेत्रादीनांसमंततः॥ क्षेत्रमादौपरीक्षेतगंधवर्णरसप्लवैः" इत्युक्तत्वात् तावद्वर्णपरत्वेनभूमेर्वर्णरसगंधात्वृत्तार्द्धेनाह। श्वेतेति। श्वेतारक्तकपीतकृष्णवसुधाः विप्रतः ब्राह्मणात् सकाशात्वर्णानांशुभाःशोभनाःस्युः। श्वेतवसुधापृथ्वीब्राह्मणस्य आरक्तवसुधाक्षत्रियस्य पीतवसुधावैश्यस्य कृष्णवसुधाशूद्रस्य शोभनेति अर्थाद्मिश्रजातीनांमिश्राशोभना। तथाचवसिष्ठः "श्वेताशस्ताद्विजेंद्राणांरक्ताभूमिर्महीभुजाम् ॥ विशांपीताचशूद्राणांकृष्णान्येषांचमिश्रिता" इति एवंवर्णमुक्त्वाइदानींरसमाह। स्वादुरिति। स्वादुर्मधुरावसुधाब्राह्मणस्यशोभना कटुर्मरिचरसाक्षत्रियस्यतिक्तकानिंबरसावैश्यस्य काषायाहरीतकीरसाशूद्रस्यशोभनेति अर्थान्मिश्राणांमिश्राशोभनातथाचनारदः ॥ "मधुरंकटुकं तिक्तंकषायश्चरसाःक्रमात्" एवंरसानुक्त्वागंधानाह। घृतेति। घृतगंधाब्राह्मणस्य शोणितगंधारक्तगंधाक्षत्रियस्य अन्नगंधावैश्यस्य मदिरागंधामद्यगंधाशूद्रस्य मिश्राणांमिश्रगंधाशुभेत्यर्थः। तथाचोक्तंकारिकायाम् ॥ "घृतासृगन्नमदिरागंधाचक्रमशो भवेत्" इति। नानाग्रंथेषुरसगंधानांनानात्वंतद्विकल्पतोग्राह्यम्। तथाचनारदः "मधुपेरान्नपिशितगंधवर्णानुपूर्वकम् ॥ मधुरंकटुकंतिक्तंकषायश्चरसाःक्रमात् ॥" पेरगंधाकषायगंधा अन्यत्सुगमम्। तथाचकारिकायाम् ॥ "घृतासृगन्नमद्यानांगंधाचक्रमशो भवेत् ॥ मधुरास्यात्कषायाम्लकटुकाचानुपूर्वशः" इति ॥ २ ॥

भा०-अपने वर्गसे ५ पांचमा वर्ग शत्रु होताहै ॥ और अपने वर्गको द्विगुणित करके ग्रामके वर्गको युक्त करणा ॥ ऐसेही ग्रामको दूणा करिके अपना जोडना फेर आठका भाग देना शेषरहै सो काकिणी होतीहै--जिसकी अधिक होय वह दूसरेको धन देवै ॥ तथा उदाहरणम् ॥ जैसे मोडुराम शर्माका ६ छठा वर्ग भया द्विगुण किया तो १२ भया और योधपुरका वर्ग ७ सात भया बारहमें युक्त किया तो १९ भया ॥ और योधपुरके वर्गको द्विगुण किया तो १४ भया फेर मोडुराम शर्माका वर्ग ६ युक्त किया तो भया २० वीस--और १९ को ८का भाग या तो रहा ३ तीन ॥ और २० को ८ का भागदिया तो रहा ४ चार ऐसे योधपुरकी

काकिणी अधिक होणेसे मोडुरामशर्माको योधपुर धनदाता है-और ब्राह्मणादिवर्णोंके रहनेके लियं क्रमसे ऐसी पृथ्वी चाहिये-ब्रा० श्वेता० क्ष० रक्ता वै० पीता शू० कृष्णा और ब्राह्मणके स्वादी भूमि-क्ष० कट्वी- वै० तिक्ता--शू०कषाया और ब्राह्मणके घृतगंधा क्ष०रुधिरगंधा--वै० अन्न गंधा--शूद्रके मद्यगंधा पृथ्वी श्रेष्ठा होय ॥ २ ॥

**सौम्यादिप्लवभूतलेविरचयेद्विप्रादिकोग्र्योखिलेनान्येषांनियमोथ यत्रनिखिलाःकुर्युर्गृहंहत्स्थिरम्॥ सद्मप्रश्नकृतोमुखात्प्रथमतोव-र्गादिवर्णोद्गमश्चेत्तद्दिग्गतमादिशेत्तुहपयैःशल्यंसुधीर्मध्यतः ॥३॥**

एवंपृथ्वीवर्णादिकमभिधायइदानींवर्णपरत्वेनभूप्लवत्वमाह । सौम्यादिषुउत्तरादिषुदिक्षु प्लवोनिम्नत्वंयस्यतच्चतद्भूतलंचतस्मिन्विप्रादिकोब्राह्मणादिकः गृहंविरचयेत् । एवंवर्ण-परत्वेनभूप्लवत्वमुक्त्वाब्राह्मणस्यविशेषमाह । अग्र्योखिलइति । अग्र्योब्राह्मणः अखिलेस-र्वप्लवेगृहंविरचयेत् । तथाचभृगुः "उदगादिप्लवमिष्टंविप्रादीनांप्रदक्षिणेनैव ॥ विप्रःसर्वत्र वसेदनुवर्णमथेष्टमन्येषाम्" इति । अथपक्षांतरमाह । यत्रेति । निखिलाःसर्ववर्णास्तत्र गृहंकुर्युःातत्रकुत्र यत्रभुविहृत्अंतःकरणंस्थिरंस्यात् । अयमर्थः। यस्यांभूमौअन्तःकरण-प्राशस्त्यंस्यात्तत्रैवगृहंकर्तव्यमित्यर्थः।तथाचवास्तुशास्त्रे "मनसश्चक्षुषोर्यत्रसंतोषोजा-यतेभुवि । तस्यांकार्यंगृहं सर्वैरितिगर्गादिसंमतम्॥" इति । अथशल्यज्ञानं वृत्तार्द्धेनाह। सद्मप्रश्नेति ।सद्मप्रश्नकृतःअत्र गृहंकर्तव्यमित्यादिगृहप्रश्नकर्तुर्मुखाच्चेद्यदिप्रथमतःवर्गा-दिवर्णोद्गमःस्यात् । वर्गाणांप्रथमाक्षरोदयःस्यात् । अकचटतपयशानामन्यतमाक्षरो-द्गमः स्यात्तदाशल्यंतद्दिग्गतंतस्यवर्णस्यदिग्गतंसुधीरादिशेत् । शल्यमत्रास्तीतिकथये-दित्यर्थः । एतदुक्तंभवति । गृहसंमितांभूमिंदक्षिणोत्तररेखाभिः समतयानवधाकृत्वाव-र्गाद्यक्षरैः अकचटतपयशैरष्टभिःक्रमेणाष्टासुपूर्वादिदिक्षुशल्यमादिशेत् । अकारेप्रश्नाद्य-क्षरेसतिपूर्वस्यांदिशिशल्यमादिशेत् ककारे आग्नेय्यां चकारेदक्षिणस्याम् इत्याद्यष्टसु दिक्षु अष्टभिरक्षरैरादिशेदित्यर्थः । तुपुनःहपयैस्त्रिभिरक्षरैर्मध्यतोमध्यकोष्ठेशल्यमादि-शेत् हपयानांत्रयाणामक्षराणामन्यतमेप्रश्नाद्यक्षरेसतिमध्येशल्यमादिशेदित्यर्थः । त-थाचोक्तंज्योतिर्निबंधे "स्मृत्वेष्टदेवतांचर्क्षवचनस्याद्यमक्षरम् । गृहीत्वातुततःशल्याश-ल्यंसम्यग्विचार्यते ॥ अकचटतपयशा हपयांवर्णाःपूर्वादिमध्यांताः । शल्यकराइहना-न्येशल्यगृहेनिवसतांनाशः ॥ " इति । एतदेवस्पष्टंतत्रैवोक्तम् । "पृच्छयायदिअःप्रा-च्यांनरशल्यंतदाभवेत् । सार्द्धहस्तप्रमाणेनतच्चमानुषमृत्युकृत् ॥ आग्नेय्यांदिशिकः प्रश्नेखरशल्यंकरद्वये । राजदंडोभवेत्तत्रभयंनैवनिवर्तते॥याम्यायांदिशिचः प्रश्नेकुर्यादा-कटिसंस्थितम् । नरशल्यंगृहेशस्य मरणंचिररोगतः ॥ नैर्ऋत्यांदिशिटः प्रश्नेसार्द्धह-स्तादधःस्थले । शुनोस्थिजायतेतत्रबालानांजनयेन्मृतिम् ॥ तः प्रश्नेपश्चिमायांतुशि-शोः शल्यंप्रजायते । सार्द्धहस्तेगृहस्वामी न तिष्ठतिसदागृहे ॥ वायव्यांदिशिपःप्रश्नेतु-षांगाराश्चतुष्करे । कुर्वंतिमित्रनाशंचदुःस्वप्नदर्शनंतदा ॥ उदीच्यांदिशियःप्रश्नेविप्रश-

ल्यंकटेरधः । तच्छीघ्रंनिर्धनत्वायकुवेरसदृशस्यहि ॥ ऐशान्यांदिशिशः प्रश्नेगोशल्यं सार्द्धहस्ततः । तद्गोधनस्यनाशायजायतेगृहमेधिनः॥हपयामध्यमेकोष्ठेवक्षोगात्रेभवेदधः। नृकपालमथोभस्मलोहंतत्कुलनाशकृत्'' इति ॥ ३ ॥

भा०--और उत्तरप्रवाहकी पृथ्वीपर ब्राह्मणका मकान श्रेष्ठ होता है--क्ष० पूर्वप्रवाहकी वै० दक्षिणप्रवाहकी--शू० पश्चिमप्रवाहकी--और ब्राह्मण सर्वप्रवाहमें करै ॥ अथ ब्राह्मणादि सर्ववर्ण जिस पृथ्वीको हृदय चाहे वहां करै ॥

### अब शल्यज्ञानका वर्णन करतेहैं ।

| ई. | पू. | आ० |
|---|---|---|
| श. | अ. | क. |
| उ. य. | हपय | च. द० |
| प. | त. | ट. |
| वा. | प. | नै० |

भा०--गृहकर्ताके प्रश्नके आद्याक्षरमें--अकचटतपयश--यह अक्षर होंयतो वर्णोंकी दिशामें शल्य कहना । वर्णदिशाका ज्ञान यंत्रको देख-नेसे होगा और प्रश्नके आद्याक्षर ह प य होंयतो मध्यमें शल्य होता है ॥ ३ ॥

**श्वभ्रंहस्तमितंखनेदिहजलंपूर्णंनिशास्येन्यसेत्प्रातर्दृष्टजलंस्थलंसदजलंमध्यंत्वसत्स्फाटितम् ॥ ज्ञात्वैवंनिखनेद्गृहाधिकभुवंनत्वा जलांतंस्तरोयावद्वापुरुषस्ततःकपिशिरस्तुल्याश्मभिःपूरयेत्॥४॥**

एवंशल्यमभिधायेदानींस्थलस्यशुभाशुभज्ञानस्योपायमाह । श्वभ्रमिति । श्वभ्रंगर्तंहस्तमितंखनेत् ।इहास्मिन्श्वभ्रेनिशास्येरात्रिमुखेऽर्द्धसूर्यास्तेजलंपूर्णंन्यसेत् तच्चेद्यदिप्रातः सजलंस्यात्तदातत्स्थलंसच्छुभंस्यात् वृद्धिकरंस्यात् । यदिअजलंगतजलंस्यात् तदा मध्यमम् । यदास्फाटितंस्फुटितंस्यात्तदाअसत् नानाविधहानिकरंस्यादित्यर्थः । तथा चनारदः ''तथानिशादौतत्कृत्वापानीयेनप्रपूरयेत् ।प्रातर्दृष्टजलेवृद्धिः समंपंकेव्रणेक्षयः '' इति । एवंशुभाशुभस्थललक्षणमभिधायेदानींभूमिशोधनमाह । ज्ञात्वेति । एवमुक्तप्रकारैः स्थानंज्ञात्वागृहाधिकभुवंनत्वाजलांतंयथाभवतितथाखनेत् गृहादधिकागृहाधिका साचासौभूश्चतथातां कल्पितगृहात्किंचिदधिकांभूमिंजलपर्यंतंखनेदित्यर्थः । अधिकखननंशुद्धभूभागेभित्तिरचनार्थम् । वाइत्यथवा स्तरोयावत्तावत्खनेत् पृथ्वीगर्भेमृद्भेदानां स्तराःसंतितत्रान्यस्तरपर्यंतंखनेदित्यर्थः । अथवा यावत्पुरुषस्त[illegible]तंवापुरुषमात्रंखनेत् इदंशक्त्यपेक्षयाज्ञातव्यम् । पुरुषप्रमाणंपंचारत्नयः । तथाचशुल्वम् ''पंचारत्निर्दशवितस्तिर्विंशतिशतांगुलःपुरुषः'' इति । पंचारत्न्यादयः पुरुषपर्यायाः । किंकृत्वा नत्वा नमस्कृत्यखनेदित्यर्थः ।ततस्तदनंतरं तत्खातंकपिशिरस्तुल्याश्मभिः वानरशिरःप्रमाणैः ग्रावभिः पूरयेत्पूर्णंकुर्यात । तथाचमांडव्यः ''जलांतमस्तरांतंवापुरुषांतमथापिवा । क्षेत्रंसंशोध्यचोद्धृत्यशल्यंसदनमारभेत् ॥'' इति । तथाचमत्स्यपुराणे ''कपिशीर्षप्रमाणै

श्वग्रावभिःपूरयेद्दृढम् । खातंतत्रसमंकृत्वाततः प्राचींप्रसाधयेत्'' इति । खन्यमाने क्षेत्रेयदाप्यतेतस्यफलंकारिकायामुक्तम् ॥ ''खन्यमानेयदाक्षेत्रेपाषाणः प्राप्यतेतदा । धनायुश्चिरतास्यस्यादिष्टकासुधनागमः ॥ कपालांगारकेशाद्यैर्व्याधिनापीडितोभवेत्'' इति ॥ ४ ॥

### अब स्थलका शुभाशुभ ज्ञान कहतेहैं।

भा०-जिस भूमिमें मकान करै तहां एक हाथका चतुरस्रगर्त करकै सूर्यके अर्द्धास्तसमयमें जलसे पूर्ण करणा। यदि जल प्रभाततक रहै तो शुभ होय-और न रहै तो मध्यम होय-फाट जांय तो अशुभ होय-ऐसे भूमिकी परीक्षा करकै मकानसे अधिक खोदै वा जल दीखे तहां तक खोदे वा मट्टीके दूसरे थर तक खोदै वा एकपुरुषके बराबर खोदै और उसमें बंदरके मस्तक जैसे पत्थरसे भरै ॥ ४ ॥

**प्राक्साध्योज्जयिनीस्थलाद्यमदिशित्वाष्ट्रानिलाभ्यंतरात्सौम्येसोग्न्युदयादुदग्ध्रुवमुखाद्दिङ्मूढकेस्यान्मृतिः ॥ गेहंमाधवपौषफाल्गुननभोमार्गेषुमृद्वा निलैःपाश्यर्केज्यवसुध्रुवैःस्थिरतनौकुर्यात्सुकेंद्राष्टमे ॥ ५ ॥**

एवंस्थलशुद्धिमभिधायाधुनादिक्साधनमाह। उज्जयिनीस्थलात् यमदिशिदक्षिणस्यांदिशित्वाष्ट्रानिलाभ्यंतरात् प्राक्साध्या, नरैरित्यध्याहारः। त्वाष्ट्रंचित्रा अनिलं स्वाती अनयोरंतरंमध्यंतस्मात्प्राचीसाध्येत्यर्थः। तदेतदुक्तंभवति। संभवेसतिरात्रौप्राङ्मुखउपविश्ययुगमात्रोदितांचित्रांनलिकयाविलोकयन्नलिकाग्राल्लंबंभूमिपर्यंतंमुक्त्वा भूमौचिह्नंकृत्वा तथैवाचलस्तेनैवनेत्रेणस्वातीमवलोकयंस्तथैवनलिकाग्रात्सकाशाल्लंबं भूमिपर्यंतंमुक्त्वालंबपातंचिह्नंकृत्वानेत्राल्लंबं मुक्त्वातथैवचिह्नंकुर्यात् एवंचिह्नद्वयंचित्रास्वातीचिह्नयोरज्जुंतन्मितांधृत्वारज्जुप्रांतौएकीकृत्यमध्येचिह्नंकुर्यात्। पुनस्तत्रतथैव प्रसार्यमध्यचिह्नेशंकुंनिधायतस्मात्पश्चिमचिह्नपर्यंतंरज्जुंप्रसारयेत् तत्प्राचीसूत्रम्। एवमुज्जयिन्यादक्षिणतःप्राचीसाधनमुक्त्वाऽथानंतरमुत्तरतः प्राचीसाधनमाह। सौम्ये इति। अतःउज्जयिन्याः सौम्येउत्तरभागे अग्न्युदयात्कृत्तिकोदयात् प्राचीसाध्या। एतदुक्तंभवति। पूर्ववन्नलिकयायुगमात्रोदितांकृत्तिकामालोक्यनलिकामूलाग्राभ्यांलंबौमुक्त्वाभूमौचिह्नद्वयंकृत्वातयोरुपरिप्राचीसूत्रम्। अथोत्तरसाधनमाह। उदगिति। ध्रुवमुखात्उदग्उत्तरादिक्साध्या इदंसर्वेषांसाधारणम्। अथदिङ्मूढत्वेदोषमाह। दिङ्मूढकेस्यान्मृतिरितिस्पष्टम्। तथाचोक्तं देवयजनदीपिकायाम् ''चित्रास्वात्यंतरे श्रोणाद्दक्षिणापथवासिनाम्। प्राचीतुकृत्तिकाज्ञेया उत्तरापथवासिनाम् ॥'' इति श्रोणात्उज्जयिन्याः। तथाचशुल्वं ''कृत्तिकाश्रवणं पुष्यंचित्रास्वात्योर्यदंतरम्।

एतत्प्राच्यादिशोरूपंयुगमात्रोदितेपुरः ॥" इति । युगप्रमाणंषडशीत्यंगुलानि । तथाचशुल्वसूत्रम् "अंगुलैरथसंमितायाःप्रमाणम्॥तत्राष्टाशीतिशतमीषाः चतुःशतमक्षःपक्षः षडशीतिर्युगम् चत्वारोष्टकाःशस्याः" इति । तथांच स्फुटकरणे "ध्रुवलंबकरेखायारेखांतःसौम्ययाम्यहरितौस्तः । तन्मत्स्यपुच्छमुखतः पश्चिमपूर्वाभिधेविद्याद् ॥" इति। वृद्धनारदः "प्रासादेसदनेलिंगेद्वारेकुंडेविशेषतः । दिङ्मूढेकुलनाशःस्यात्तस्मात्संसाधयेद्दिशम् ॥" इति । अथकेषुमासेषुगृहंकर्तव्यमित्याह । गेहमिति । माधवादिषुमासेषुमृद्वादिभिर्नक्षत्रैर्गेहंगृहंकुर्यात् माधवोवैशाखःपौषफाल्गुनौप्रसिद्धौ नभाःश्रावणः मार्गोमार्गशीर्षस्तेष्वित्यर्थः । मृदूनिचित्रानुराधारेवतीमृगाः आनिलंस्वाती पाशीवरुणस्तद्भंशततारा अर्कोहस्तः इज्यःपुष्यः वसुर्धनिष्ठा ध्रुवाणिरोहिणीउत्तरात्रयंचतैः स्थिरतनौस्थिरलग्ने । किंलक्षणे सुकेंद्राष्टमेशोभनानिपापग्रहरहितानिकेंद्राष्टमानियस्य तत्तथातस्मिन्। स्थिरतनावितिवापाठः । शेषंपूर्ववत् ॥ ५ ॥

### अब दिशाका साधन कहतेहैं ।

भा०–यदि उज्जैनसे स्वदेश दक्षिणमें होयतो चित्रा स्वातीके मध्यसे पूर्वदिशाका साधन करणा–और उज्जैनसे पश्चिममें होयतो कृत्तिकासे और ध्रुवसे उत्तरदिशाका साधन करणा और दिङ्मूढ होनेसे मृत्यु होय–और वैशाख–पौष–फाल्गुन–श्रावण–मार्गशीर्ष यह मास गृह बनानेमें लेना ॥ और मृदु–स्वा० शत० हस्त–पुष्य–धनिष्ठा–ध्रुव यह नक्षत्र लेना ॥ और स्थिरलग्न लेना–और १ । ४ । ७ । १०।८ इन्हीं स्थानोंमें पापग्रह नहीं होयतो शुभ होय॥५॥

**नोपृष्ठाग्रविधौनरिक्तकतिथौनार्कारवारांशयोरुक्तर्क्षेष्वपिकुंभमीनगविधौस्तंभोच्छ्रितिंनाचरेत्॥तुर्यात्पंचदशात्रिदृक्परिमितादृद्रेदाब्धिपंचक्रमान्निंद्यान्यर्कयुतादिगेहकरणेभानिप्रवेशेपिच ॥६॥**

अथोक्तेष्वपिनक्षत्रेषुविशेषमाह । नोपृष्ठाग्रइति । पृष्ठाग्रविधौसतिनोविरचयेत् । एतदुक्तंभवति । कृत्तिकादीनिसप्तनक्षत्राणिपूर्वस्यांमघादिसप्तदक्षिणेइत्यादिसप्तशलाकाचक्रस्थितनक्षत्राणांमध्येमृद्वानिलादीष्टचंद्रनक्षत्रंयस्मिन्दिग्भागेभवतितद्दिङ्मुखेगृहेसंमुखश्चंद्रोज्ञेयः तत्पृष्ठस्थेपृष्ठतोज्ञेयः एवमग्रगेपृष्ठगेवाचंद्रेसतिगृहंनकर्तव्यमित्यर्थः । तथाचभृगुः "चक्रेसप्तशलाकाख्येकृत्तिकादीनिविन्यसेत् ॥ ऋक्षंचंद्रस्यवास्तोश्चपुरः पृष्ठेचनो शुभम्"इति तथा ब्रह्मशंभुः "धनलाभःप्रवासःस्यादायुश्चौरभयंक्रमात्।दक्षाग्रवामपृष्ठस्थेगृहकर्तुर्निशाकरे ॥" इति। नरिक्तकतिथौस्पष्टम् । नार्कारवारांशयोः अर्कभौमयोर्वारनवांशयोःनकुर्यात्।उक्तर्क्षेष्वपिकुंभमीनगविधौसतिस्तंभोच्छ्रितिंनाचरेत्।अर्थादन्यत्सर्वम् आचरेत्।तथाचमांडव्यः"पंचकेषुचविष्ण्येषुनकुर्यात्स्तंभमुच्छ्रयम्।क्षेत्रसूत्रशिलान्यासंप्राकारादिसमाचरेत्॥"इति।अथवृषभवास्तुमाह।तुर्यादिति।अर्कयुतादिस्यं

नक्षत्रादितुर्यात्चतुर्थात् पंचदशात् त्रिदक्पपरिमितात् त्रयोविंशात्सकाशात् क्रमेण-वेदाब्धिपंचभानिनक्षत्राणिगृहस्यकरणेरचनायांप्रवेशेपिनिंद्यानिस्युः। तथाचव्यवहार-सारे "त्रिवेदाब्धित्रिवेदाब्धिद्वित्रिभेष्वर्कतः शशी ॥ कुर्याल्लक्ष्मीसमुद्रासंस्थैर्यलक्ष्मींद-रिद्रताम् ॥ धनंव्याधिंक्रमान्मृत्युंप्रवेशारंभयोर्वृषे" इति ॥ ६ ॥

भा०-प्रथम तो कृत्तिकादिक सात सात नक्षत्रोंको पूर्वादिदिशाओंमें देके सप्तश-लाका चक्रको बनाना-फेर तहां जिस दिशामें इष्ट नक्षत्र होय उस दिशाके घरमें संमुख चंद्र होय ॥ ऐसे पृष्ठमें और आगे चंद्रमा होयतो अशुभ होय-और ४ । ९ । १४ ये ति-थियों और सूर्य भौमवार और सूर्य भौमका नवांश अशुभ होय-और उक्त नक्षत्रोंमें भी ११ कुंभ १२ मीनका चंद्रमा होयतो स्तंभको नहीं लगाना-और सूर्यके नक्षत्रसे चौथे नक्षत्रतक-और पन्द्रहवेंसे चारतक-और तेवीसवेंसे पांचतक घर नहीं बनाना और प्रवेश भी नहीं करना ॥ ६ ॥

**शेतेभाद्रपदात्रिषुत्रिषुसुरःप्रागादिशीर्षोत्रहिप्रोक्तंसद्मसुखंतुगो-ल्यजघटेष्वर्केयमोदङ्मुखम्॥हृद्रोगैणकुलीरलेयगरवौपूर्वापरा-स्यंगृहं नान्यस्थेभुजकोविघातइभहृच्छेषंस्युरायाःक्रमात् ॥ ७ ॥**

अथचतुर्धाद्वारनिर्णयमाह। शेतेइति। भाद्रपदात्रिषुत्रिषुमासेषु सुरोवास्तुपुरुषः प्रागादिशीर्षः शेतेइति। एतदुक्तंभवति भाद्रपदादिमासत्रयेपूर्वशीर्षः मार्गशीर्षादिमा-सत्रयेदक्षिणशीर्षः फाल्गुनादिमासत्रयेपश्चिमशीर्षः ज्येष्ठादिमासत्रयेउत्तरशीर्षोवास्तु पुरुषः शेतेइति। अत्रयस्यांशीर्षंतस्यांदिशायांसद्मसुखंगृहसुखंदक्षिणाभिमुखंप्रोक्तम्। अथसंक्रांतिपरत्वेनमुखनिर्णयमाह। गोल्यजेति। गोल्यजघटेष्वर्केसतियमोदङ्मुखंगृ-हंकार्यम् गौर्वृषः अलिर्वृश्चिकः अजोमेषः घटस्तुला एषुराशिषुअर्केसूर्येसतियमोदङ्मुख-मुत्तराभिमुखं वागृहंकार्यमित्यर्थः। हृद्रोगैणकुलीरलेयगरवौसतिपूर्वापरास्यं पूर्वा-भिमुखंपश्चिमाभिमुखंवागृहंकार्यमित्यर्थः। हृद्रोगः कुंभः एणोमकरः कुलीरः कर्कटः लेयः सिंहः एतान्गच्छतिसतथासचासौरविश्चतस्मिन्सतिपूर्वापरास्यं पूर्व-पश्चिममुखंवागृहंकार्यम्। अन्यस्थेअन्यराशिस्थेरवौसतिगृहंनकार्यम्। अथायपर-त्वेनगृहमुखनिर्णयंविवक्षुस्तावदायसाधनमाह। भुजेति। भुजकोटिघातइभहृच्छेष-मायाः स्युः। भुजोगृहदैर्घ्यविस्तारयोरन्यतमस्यनाम तदन्याकोटिः। तथाच लीलावत्याम् "इष्टोबाहुर्यस्यां तत्स्पर्द्धिन्यांदिशीतरोबाहुः ॥ त्र्यस्रेचतुरस्रेवा साकोटिः कीर्तितातज्ज्ञैः" इति। तयोर्घातोगुणनम् इभहृच्छेषंपूर्वादियथास्या-त्तथाध्वजादयः आयाः क्रमात्स्युः ॥ ७ ॥

अब चार प्रकारसे द्वारनिर्णय करतेहैं।

भा०-भाद्रपद-आश्विन-कार्तिक मासमें पूर्वशीर्ष वास्तु होता है-और मार्गशीर्ष-पौष-

माघमें दक्षिणशिर वास्तु होता है और फाल्गुन चैत्र वैशाखमें पश्चिमशिर वास्तु होता है ॥ और ज्येष्ठ आषाढ श्रावणमें उत्तर शिर होता है ॥ सो जिस दिशामें वास्तुका शिर होय उस दिशामें घरका मुख करणा- और २ । ८ । १ । ७ इन्होंके सूर्यमें दक्षिण मुख वा उत्तर मुखका घर करणा- और ११ । १० । ४ । ५ इन्होंके सूर्यमें पश्चिम मुख वा पूर्वमुख घर बनाना ॥ और गृहके भुजकोटिको गुणकै आठका भागदेणेसे शेष रहै सो ध्वजादि- आय पूर्वादिक होय ॥ ७ ॥

**पूर्वादिध्वजधूमसिंहशुनकोक्षाणःखरेभोष्ट्रकाधार्याःस्वस्वपदेध्वजोखिलमुखः प्राग्याम्यवक्त्रोगजः॥प्रागास्योवृषभोविवारुणमुखःसिंहःप्रशस्ताइमेधूमोग्नेःशुनकोंत्यजस्यखगपस्योष्ट्रोद्दपत्न्याःखरः ८**

पूर्वादिषुध्वजादयोवलिष्ठाइतिभावः । एतेध्वजादयः स्वस्वपदेस्वस्वस्थाने ध्वजः पूर्वे धूमआग्नेय्यामित्यादिधार्याः । अयमर्थः । मुख्यगृहापेक्षयादिक्षुवक्ष्यमाणगृहेषुधार्याइत्यर्थः । अथवास्वसदृशवस्तुषुधार्याः । अथवास्वसदृशसत्त्वगृहेषुधार्याः अथवाक्रूरकर्मसाधनवस्तुषुपराक्रमिणोधार्याः अथवास्वसदृशवस्तुसत्त्वोपजीविनांगृहेषुधार्याः अथवास्वानुरूपवस्तुसाध्यहितवस्तुगृहेषुयथायोग्यंधार्याइत्यर्थः । एतत्स्पष्टमुक्तंवास्तुप्रदीपे " खेटखर्वटकोटेषुनृपः सिंहोगजःशुभः ॥ वापीकूपतडागादौ गजोदेयोविचक्षणैः ॥ आसनेयोजयेत्सिंहंशयनेचैवकुंजरम् ॥ वृषंभोजनपात्रेचदद्याच्छालादिषु ध्वजम् । महानसेऽग्निशालायांगृहेचाग्न्युपजीविनम् ॥ धूमंदद्यात्तथाश्वानंयवनांत्यजयोर्गृहे ॥ खरोवेश्यागृहेयोज्योध्वांक्षः पक्षिपतेर्गृहे ॥ वृषंसिंहंगजंदद्यात्प्रासादेपुरमंदिरे " ॥ तथाचशिल्पशास्त्रे "वस्त्रजेधर्मशालायांकुंभेस्तंभेध्वजेध्वजः ॥ गोगजौभूगृहेचैवसाधारणगृहेशुभौ ॥ यंत्रेशस्त्रे रथेसिंहोभांडागारे शुभोगजः ॥ धान्यांबुस्थानेगोश्वेभाः शालायांवृषभः शुभः ॥ नाट्यभागोद्वाहवेद्यां गजसिंहवृषाः शुभाः"इत्यादि। एवमायसाधनमुक्त्वेदानींतेषांमुखान्याह। ध्वजोऽखिलमुखः सर्वदिग्द्वारः प्राग्याम्यवक्त्रोगजः सुगमम् प्रागास्योवृषभः आस्यंमुखं प्राङ्मुखो वृषभः स्पष्टम् विवारुणमुखः सिंहः वरुणस्यायंवारुणोदिग्विभागः पश्चिमदिक्विगतः वारुणोयेभ्यस्तत्रमुखंयस्यसतथा पश्चिमदिशंविनासर्वदिग्द्वारइत्यर्थः । योयोयदिङ्मुखआयस्तत्संभूतगृहस्यतत्तद्दिशिमुखंकर्तव्यमित्यर्थः । एवमायपरत्वेनगृहमुखमुक्त्वा प्रसंगेनआयानांशुभत्वमाह । प्रशस्ताइमेइति । इमेचत्वारआयाः प्रशस्ताः सर्वेषांशुभाः अर्थादन्येचत्वारः समाआयाअप्रशस्ताः । तथाचगर्गः"कीर्तिः शोकोजयोवैरंधनंनिर्धनताशुखम् ॥ रोगश्चेतिगृहारंभेध्वजादीनांफलंक्रमात्" इति ॥ अथदुष्टेपिसमये विशेषमाह । धूमोग्नेरिति । अग्नेर्गृहेधूमोधूमायः प्रशस्तः अंत्यजस्यशुनकः प्रशस्तः खगपस्यपक्षिपालकस्यउष्ट्रः प्रशस्तः अद्दपत्न्यावेश्यायाः गृहेखरः खरायः प्रशस्तः॥८॥

भा०-ध्वज-धूम-सिंह-शुनक-वृष-खर-गज-ध्वांक्ष ये ध्वजादिक अपनी अपनी दिशामें बलवान् होंय-ध्वज सर्व दिशाओंमें बलवान् होय-पूर्वमुख वृषभ-सिंह पश्चिम विना यह चारा आय शुभ होंय-और अग्न्यागारमें धूमाय शुभ होय-और अंत्यजके शुनक शुभ है-और पक्षिपालकके उष्ट्र शुभ है-और वेश्याके घरमें खराय शुभ है॥ ८॥

प्राहुःप्राङ्मुखमंत्यवृश्चिककुलीराणांप्रचेतोमुखंजूकोपांत्यगवांयमास्यमबलायुग्मैणकानांहितम्॥सौम्यास्यंगृहमाद्यसिंहधनुषामत्रेष्टकाष्ठाननंकृत्वाताान्यककुब्गवाक्षवदनंतत्कार्यमास्यंनसत्॥९॥

एवमायपरत्वेनगृहमुखमुक्त्वाधुनाराशिपरत्वेनाह। अंत्यवृश्चिककुलीराणांप्राङ्मुखं गृहंहितंप्राहुः। अंत्योमीनः वृश्चिकः प्रसिद्धः कुलीरः कर्कः एषामित्यर्थः। जूकोपांत्यगवांप्रचेतोमुखंपश्चिमाभिमुखम् जूकः तुला उपांत्यः कुंभः गौर्वृषः एषामित्यर्थः। अबलायुग्मैणकानांयमास्यंदक्षिणामुखम् अबलाकन्या युग्मंमिथुनमेणोमकरः एषामित्यर्थः।आद्यसिंहधनुषांसौम्यास्यम् आद्योमेषः सिंहधनुषीप्रसिद्धे एषांसौम्यास्यमुत्तरामुखंगृहंहितं प्राहुराचार्याः। एवंचतुर्धागृहमुखमभिधायेदानींतन्निर्णयमाह।अत्रेष्टकाष्ठाननमितिगृहमुखपक्षेषुशोभावकाशानुरूपमिष्टकाष्ठाननमिष्टदिङ्मुखंकृत्वातद्गृहमाप्तान्यककुब्गवाक्षवदनंकार्यम्। आप्ताश्चताअन्यककुभश्चताासुगवाक्षएववदनानियस्यतत्तथा उर्वरितपक्षत्रयप्राप्तदिक्षुगवाक्षाः कार्याइत्यर्थः। तथाचवास्तुशास्त्रे "द्वारंचतुर्विधंप्रोक्तंवास्तुसंक्रांतिभावजम्। कृत्वाचान्यतमंमुख्यंगवाक्षाद्यैः पराणिच" इति। आस्यमिति। आस्यंगृहस्यमुखंकोणस्तंभादिभिर्विद्धंनसत्स्यात्॥ ९॥

भा०- १२।८।४ इन्हों राशियोंके पूर्वमुख गृह शुभ होय-और ७।११।२ इन्हों राशियोंके पश्चिममुख गृह होय-६।३।१०। इन्हों राशियोंके दक्षिणमुख गृह होय-और १।५।९ इन्हों राशियोंके उत्तर मुखका घर शुभ होय--एक दिशामें गृहका द्वार करके शेष ३ तीन दिशाओंमें झिरीका कराणा -और घरके द्वारमें धारी नहीं देणी॥ ९॥

कोणाध्वभ्रमकूपकर्दमतरुद्वाःस्तंभदेवेक्षितंसद्मौच्च्यद्विगुणाधिकांतरभवेवेधेनदोषःकिल॥अष्टमेगृहभूफलेभविहृतेशेषंगृहर्क्षंभवेद्दक्षेसर्पहृतेव्ययोगृहमसत्स्वल्पायभूरिव्ययम्॥ १०॥

एवंगृहमुखनिर्णयमुक्त्वाधुनाकोणादिविद्धमुखस्यदोषंतदपवादंचाह। कोणाध्वेति। कोणोभित्तिकोणः अध्वामार्गः भ्रमोभ्रमयंत्रं घरट्टकुलालचक्रादि कूपः प्रसिद्धः कर्दमः स्नानादिजनितोनिरंतरस्थायी तरुर्वृक्षः द्वाः द्वारांतरं स्तंभःप्रसिद्धः देवः स्थावरः एभिर्विद्धेमुखंनसत्स्यादित्यर्थः। अथास्यापवादमाह। सद्मौच्च्येति। सद्मौच्च्यद्विगुणाधिकांतरभवेवेधेनदोषः सद्मनोगृहस्यऔच्च्यंतस्यापेक्षयाद्विगुणाधिका-

तरभवेद्विगुणाधिकांतरेजातेवेधेकोणादिवेधेनदोषः अर्थान्न्यूनेदोषः किलेत्यागमेनिश्च-येवा । तथाचागमांतरेउक्तम् "मार्गतरुकोणकूपभ्रमविद्धमशुभदंद्वारम् । सद्मोच्छ्रायाद्द्वि-गुणांत्यक्त्वाभूमिंनदोषाय" इति । कात्यायनगृह्यकारिकायामप्युक्तम् "विद्धंकूपतरु-स्तंभपथपंकैः सदैवतैः ॥ तद्द्वारमशुभंप्रोक्तमत्युच्चंनीचमेवच" इति । अथग्रहनक्षत्रान-यनंव्ययानयनंचाह । अष्टघ्नइति । गृहभूफलेगृहक्षेत्रफलेअष्टघ्नेअष्टगुणितेभविहृतेसप्तविं-शतिहृतेसतिशेषंगृहर्क्षंगृहनक्षत्रंभवेत् । ऋक्षेसर्पहृतेअष्टहृतेसतिशेषंव्ययोभवेत् । एवमा-यव्ययावभिधायाधुनातत्फलंविशेषणद्वाराह । गृहमसदिति । स्वल्पायभूरिव्ययंगृहम् असत् अशुभंस्यात् । स्वल्पायश्चभूरिव्ययश्चतौ अर्थाद्वृद्धायाल्पव्ययंशुभम् ॥ १० ॥

भा०-और भीतके कोणसे-मार्गसे-घरट कुलाल चक्रादिकसे-कूएसे-कर्दमसे-वृक्षसे-द्वारांतरसे-स्तंभसे-देवसे-विद्ध घर नहीं करणा-यदि कोणादिकोंका वेध गृहसे द्विगुण होयतो दोष नहीं होय-गृहके क्षेत्रफलको आठ ८ गुणा करके २७ सतावीसका भाग देणेसे शेष गृहनक्षत्र होय-और गृह नक्षत्रको आठ ८ का भाग देणेसे शेष व्यय होय-और आय कम होय और व्यय बहुत होय तो वह घर अशुभ होय ॥ १० ॥

**मेषेश्वित्रितयंहरौत्रिपितृभंमूलत्रयंधन्विनिद्वेद्वेभेपरतोगृहेशघटितंप्राग्वत्तुनाड्यन्यथा॥ एकादिद्विगुणोत्तरागृहमुखाद्दिक्ष्वंककाः स्युःक्रमाच्छालाशांकयुतिःकुयुग्ध्रुवमुखान्योकांसिसंतिस्फुटम् ११**

नक्षत्रेज्ञातेराशिनिर्णयमाह । अश्वित्रितयंमेषेज्ञेयम् त्रिपितृभंमघात्रयंहरौसिंहेज्ञेयम् मूलत्रयंधनुषिज्ञेयम् अन्येषुराशिषुद्वेद्वेभेज्ञेये । तथाचगर्गः "अश्विन्यादित्रयंमेषेसिंहे प्रोक्तंमघात्रयम् । मूलादित्रितयंचापेशेषभेषुद्वयंद्वयम्" इति । अथगृहतत्स्वामिनोर्घटि-तमाह । गृहेशेति । गृहंप्रसिद्धम् ईशः स्वामी तयोर्घटितंप्राग्वत्विवाहवत्योज्यम् । तत्र विशेषमाह । नाड्यन्यथेति । नाडीएकनाडीअन्यथायोज्या विवाहवत्तनयोज्येत्यर्थः अत्रएकनाड्येवप्रशस्तेतिभावः । तथाचवृद्धगर्गः । "प्रभुः पण्यांगनामित्रंदेशंग्रामंपु-रंगृहम् । एकनाडीस्थितंभाव्यंविरुद्धंवेधवर्जितम् " इति । तथाचज्योतिःसागरे "सेव्यसेवकयोश्चैवगृहतत्स्वामिनोरपि । परस्परंमित्रयोश्चएकनाडीप्रशस्यते" इति ॥ अथांशसाधनार्थंगृहाणितन्नामाक्षरसंख्यांचाह । एकादीति । गृहमुखात्सकाशात् क्र-मात्प्रदक्षिणक्रमात् दिक्षुचतसृषुदिक्षुएकादिद्विगुणोत्तराअंकाः स्युः । एतदुक्तंभवति द्वारदिशिएकः तस्माद्द्वितीयदिशिद्वौ तृतीयदिशिचत्वारः चतुर्थदिशिअष्टौ एवंभवंती-त्यर्थः । शालाशांकयुतिः शालदिगंकयोर्योगः कार्यः कुयुक् एकयुक्तासती ध्रुवमुखा-निध्रुवादिकानिशास्त्रोदितानिगृहाणिस्फुटंसंभवंति । तानियथा "ध्रुवंधन्यंजयंनं-दंखरंकान्तंमनोरमम् ॥ सुमुखंदुर्मुखंक्रूरंसुपक्षंधनदंक्षयम् ॥ आक्रंदंविपुलंचैवविजयंचेति-षोडशम्" इति ॥ ११ ॥

## अब राशिका निर्णय करतेहैं ।

भा०-अ० भ० कृ० मेषराशिके नक्षत्र हैं ॥ म० पू० उ० सिंहके हैं ॥ मू० पू० उ० धनके हैं ॥ अन्य राशियोंके दोय दोय नक्षत्र होवेहैं ॥ और गृहके तथा गृह स्वामीके विवाहवत् गणादिक देखणा चाहिये ॥ और गृह तथा गृहस्वामीकी एक १ नाडी होय तो शुभ होय ॥ अब अंश साधनके लिये गृहको तथा गृहके नामाक्षरोंको कहते हैं-घरके द्वार दिशामें एक १ देणा दुजी दिशामें २ दोय और तीजीमें ४ चोथीमें ८ पीछे शालाके और दिशाके अंकका योग करके एक युक्त करणा-तब ध्रुवादि गृह होवेहै ॥ ११ ॥

आषष्ठाद्दशमंत्रयोदशमिमेद्व्यर्णाःपरेत्र्यक्षराःषष्ठांत्यंचतुरक्षरंखलु गृहंस्युःषोडशैवंगृहाः ॥ गेहक्ष्माफलयुग्व्ययोगृहभवैर्नामाक्षरैः संयुतस्तष्टोवह्निभिरंशकानशुभदंपस्त्यंद्वितीयांशकम् ॥ १२ ॥

नामाक्षरसंख्यामाह । आषष्ठादिति । षष्ठंमर्यादीकृत्येत्याषष्ठं तस्मात्प्रथमद्विती-यतृतीयचतुर्थपंचमषष्ठानिदशमंत्रयोदशमिमेअष्टगृहाः द्व्यर्णाः द्व्यक्षराः षष्ठांत्यंसप्तमं गृहं चतुरक्षरंचत्वारिअक्षराणियस्मिंस्तत्तथा अन्येगृहाः त्र्यक्षराः एवंषोडशगृहाः स्युः। "गृहाःपुंसिचभूम्न्येवनिकाय्यनिलयालयाः"इत्यमरः। अथांशकसाधनमाह। गेहक्ष्मे-ति । गेहक्ष्माफलयुग्व्ययःगृहक्षेत्रफलयुक्तः पूर्वानीतोव्ययः गृहभवैर्नामाक्षरैः संयुतः वह्निभिस्त्रिभिस्तष्टः शेषितः सन् अंशकाः स्युः । इंद्रोयमोराजेतितन्नामानिग्रंथांतरेउ-क्तानि तत्रद्वितीयांशकंपस्त्यंगृहंनशुभदम् अर्थात्प्रथमतृतीयांशकंशुभदमित्यर्थः । "निशांतपस्त्यसदनंभवनागारमंदिरम्" इत्यमरः ॥ १२ ॥

## अब नामाक्षर संख्याको कहतेहैं ।

भा०-१।२।३।४।५।६।१०।१३ ये गृह दोय अक्षरके हैं ॥ और सातमा घर ४ चार अक्षरका है-और अन्य घर तीन अक्षरके होतेहैं ॥ ऐसे १६ षोडश घर होते हैं ॥

## अब अंशके साधनको कहतेहैं ।

भा०-गृह क्षेत्रफल युक्त व्यय करके घरके अक्षरको युक्त करणा फेर ३ तीनका भाग देणा शेष रहै सो अंश होय ॥ इंद्र यम राजा ये तीन ३ अंश होतेहैं ॥ जिसमें यमका अंश अशुभ है ॥ १२ ॥

यावद्भूरिगुणंहृदिस्फुरतितत्तावद्विचार्यकरैश्चेत्तैर्नोतनुयादिहां-गुलमुखंक्षिस्वाविहायाथवा ॥ श्रीगोपीपतिमंगलालुगिसुखै-रायासविच्छित्तयेस्वेष्टायक्षेफलंनिबद्धमिहतज्ज्ञात्वास्थलंसाध-येत् ॥ १३ ॥

अथगुणविचारणावधिमाह । यावत्पर्यंतंकरैःहस्तैःकृत्वाभूरिगुणंबहुगुणंगृहंहृदिअंतः करणेस्फुरति तत्तावद्विचार्यम् । चेद्यदितैः केवलैःकरैःहस्तैःकृत्वाबहुगुणंनस्फुरतितदा अंगुलमुखमंगुलादिकंकरेषुक्षिप्त्वाथवाविहायतनुयात् कुर्यात् । अथोपायांतरसूचनामा-ह । श्रीगोपीपतीति । गोपीपतिर्गोपीराजः मेंगःमेंगनाथदैवज्ञः झालुगिर्झालुगिदैवज्ञः एतन्मुखेज्योतिर्विद्भिःआयासविच्छित्तयेस्वेष्टायर्क्षफलंनिबद्धम् । तदिहास्मिन्गृहाणां विषयेज्ञात्वास्थलंस्वाभीष्टस्थलंसाधयेत् । तथाचगोपीराजः "विष्णुंव्येकायगोभू १९ हतिभयुजिफलंगोपिराजोभ २७ शेषात्सायंवाहाष्टिदृग्घ्नेर२१६ष्टयुतमहि ८ हताद्दक् २ प्रकृत्याख्य २१ विश्वे १३ ॥ बाणः ५ सिद्धा २४ ष्टि १६ नागो ८ डु २७ विधृति १९ गिरिश ११ त्र्या ३ कृतीं २२ द्र १४ तु ६ तत्त्वा २५ त्यष्टयं १७ क ९ क्ष्मा१ नखे २० ना १२ र्णव ४ विकृति२३ दिना१५द्रयु७त्कृती२६धृत्य१८थाशाः १० " इति ॥ अस्यार्थःगोपीराजः विष्णुंविष्णुनामानंशिष्यंप्रत्याहेत्यन्वयः । किमाह । हेवि-ष्णोव्येकायगोभू १९ हतिभयुजिभ २७ शेषात् अहि ८ हताद्दक् २ प्रकृत्यादयःफलं स्यात् । विगतःएकोयस्मात्सव्येकः सचासौआयश्चव्येकायः व्येकायश्चगोभूश्चअनयो-र्हतिर्गुणनं व्येकायगोभूहतिश्चभंचव्येकायगोभूहतिभे तयोर्युक्योगःतस्यां भशेषात् सप्त-विंशतिहृच्छेषात् एकादिषुसप्तविंशतिपर्यंतेषु अहिहताअष्टहताद्दक्प्रकृत्यादयः फलंक्षेत्र-फलंस्यादित्यर्थः । कथंभूतंफलं सायमायेनसहवर्तमानंसायमिष्टायसहितमित्यर्थः । एतत्स्वेष्टायनक्षत्रजंफलंभवति । न्यासः वाइत्यथवातत्सायंफलमिष्टाष्टिदृ १२१६ घ्न्यायुतंसत्फलंस्यात् । इष्टश्च अष्टिदृक्चइष्टाष्टिदृक् तयोर्घ्निर्हतिः तयायुतमित्यर्थः । इदमपि स्वेष्टायनक्षत्रजंफलंभवतीति । अत्रांकन्यासएवव्याख्यानम् । तथाचमेंगनाथदैव-ज्ञस्यसूत्रम् "इष्टभात्यष्टिघातेयआयस्तेनोनितेष्टकः ॥ त्रिहृल्लब्धहतागाश्वि २७ युतेचे-ष्टायभंभवेत् " इति ॥ अस्यार्थः इष्टभात्यष्टिघातेइष्टभंचअत्यष्टिश्चतयोर्घातोगुणनंत-स्मिन्पृथक् स्थापितेयआयस्तेनऊनितेष्टकःयदिऊनोनभवति । तदाअष्टौप्रक्षिप्यस्फोट-नीयः ऊनितेष्टायःत्रिहृल्लब्धहतागाश्वियुते लब्धेनआहताश्वतेअगाश्विनश्वतैः पृथक्स्था-पितेइष्टभैरत्यष्टिघातेयुतेसतिइष्टायभंक्षेत्रफलंभवेत् । आयश्चभंचआयभेइष्टेआयभेयस्मि-स्तत्तथा अत्रयदित्रिभिर्निःशेषोभागोनगच्छति तदातत्रतावत् अष्टौक्षेप्याः यावत्त्रिभि-र्भागो गच्छति । तथाचझालुगिदैवज्ञस्यसूत्रम् "व्येकेष्टर्क्षहताद्विबाणशशिनो १५२ त्यष्ट्यायुता १७स्तेपिचव्येकेष्टायहतैकनाग ८१ सहिताः षण्मूर्च्छनाभि २१६ र्हताः॥ शेषंक्षेत्रफलंभवेदभिमतस्वेष्टायनक्षत्रजंस्याद्दैर्घ्यंतदभीष्टविस्तृतिहृतंदैर्घ्याद्धृतिर्विस्तृतिः" इति स्पष्टार्थोयंश्लोकः । इत्यादिविचारणयाइष्टंक्षेत्रफलमवकाशानुरूपंहृदिधृत्वास्थलं साधयेदित्यर्थः ॥ १३ ॥

भा०-जितने हाथका बहु गुण घर अपने हृदयमें स्फुरै उतनाही करणा ॥ और जो हाथोंसे गुण स्फुरण नहीं होय तो अंगुलादिकोंको जोडना वा काढना ॥

अब दूसरा उपाय बतानेके लिये कहतेहैं ।

भा०-आर गोपीराज वा मंगनाथ वा ह्मालुगि इन ज्योतिषियोंने श्रम मिटानेके लिये जो स्वेष्टायर्क्षफल कहा है सो जानके इष्टभूमि साधन करणा ॥ १३ ॥

**द्विघ्नायाममितंद्विपाशमजरत्सूत्रंविधायांकयेत्र्यायामांघ्रिमितेच-विस्तृतिदलेतौकर्षकोणाभिधौ॥पाशौक्षेत्रविरामशंकुनिहितौकृ-त्वाद्यमाकर्षयेत्कोणेशंकुरितीतरोविनिमयद्रज्ज्वंतयोश्चापरौ १४**

अथस्थलसाधनायसूत्रमोटनलक्षणमाह । अजरत्सूत्रंनूतनसूत्रं द्विघ्नायाममितंद्विपाशं चविधाय अंतात् एकस्मात्सूत्रांतात्अंकयेदित्यन्वयः द्विघ्नश्चासौआयामश्चद्विघ्नायामः आयामोदैर्घ्यम् तेनमितंद्विगुणितदैर्घ्यसमानमित्यर्थः।द्विपाशंद्वौपाशौयस्मिन्तद्विपाशम् एवंविधंसूत्रंविधायकृत्वाअंतात्सकाशात् अंकयेत्चिह्नयेत् एतदुक्तंभवति । पूर्वकल्पित-क्षेत्रस्यदैर्घ्यमितंसूत्रंद्विगुणंविधायतदंतयोःपाशंकृत्वाअंकयेत् । कुत्रकुत्रांकयेदित्याह । आयामांघ्रिमिते च परंविस्तृतिदले अंकयेत् त्रयश्चते आयामांघ्रयश्चतेतथातैर्मितंतस्मि-न् एतदुक्तंभवति । क्षेत्रदैर्घ्यंचतुर्भिर्भक्तालब्धमंघ्रिप्रमाणमेकस्मादंतात् अंघ्रित्रयंहित्वा चिह्नयेत् विस्तृतिदलेक्षेत्रस्यविस्तारार्धमिते अंकयेत् तौअंकौकर्षकोणाभिधौस्तः अंघ्रि-त्रयेकृतः कर्षाख्यः विस्तृतिदलेकृतांकः कोणाख्यः । एवंसूत्रमोटनमुक्त्वा । स्थलसाध-नमाह । पाशाविति । पाशौक्षेत्रविरामशंकुनिहितौकृत्वाआद्यमंकमाकर्षयेदित्यन्वयः । क्षेत्रस्यविरामौअंतौतयोः शंकुनिहितौनिक्षिप्तौकृत्वाआद्यमंकंकर्षाख्यंआकर्षयेत् । एतदु-क्तंभवति । क्षेत्रस्यमध्यभागेसाधितदिक्सूत्रोपरिइष्टदैर्घ्यमितंसूत्रंप्रसार्यतदंतयोः शंकुनि-खातयोः शंकोः मोटितसूत्रांतपाशौनिधायकर्षाख्यंचिह्नंधृत्वाएकस्यांदिशिआकर्षयेत् यथोभयशंकुगतारज्जुः समानाआकृष्टास्यात्तथाआकर्षयेदित्यर्थः । कोणेशंकुरिति । कोणेकोणचिह्नेयत्रकोणचिह्नमागतं तत्रभुविशंकुंनिखायेत्यध्याहारः । इत्यमुनाप्रकारे-णइतरः शंकुर्निखेयः । एतदुक्तंभवति । तदेवकर्षचिह्नमन्यस्यांदिशिआकृष्यकोणेशंकु-र्निखेयः । एवं कोणद्वयसाधनमभिधायअन्यकोणद्वयसाधनमाह । विनिमयादिति रज्ज्वंतयोर्विनिमयात्विपरीतधारणात्अपरौकोणशंकूनिखेयौ । एतदुक्तंभवति । रज्ज्वंतौविपरीतौधृत्वापूर्ववत्कर्षाकर्षणंकृत्वाकोणयोः शंकूनिखेयौ ॥ १४ ॥

अब स्थलसाधनके लिये सूत्रमोटनके लक्षणको कहतेहैं ।

भा०-पूर्वकल्पित क्षेत्रके नूतन दैर्घ्य सूत्रको द्विगुण करणा ॥ और दोनों तरफ अंतमें पाशीं करिके चिह्न करणा ॥ चिह्नके स्थानको बताते हैं । क्षेत्रकी दैर्घ्यमें चारका ४ भाग देकै एक अंतमें तीन पादको त्याग करके फेर एक पादपाद पर चिह्न करणा ॥ और दूसरा क्षेत्रका विस्तारके अर्द्धभागमें चिह्न करणा । यहां अंघ्रित्रयका चिह्न कर्षाख्य है ॥ और विस्तारके अर्द्धभागके चिह्नकी कोण संज्ञा है ॥

## अब स्थलके साधनको कहतेहैं ।

भा०—क्षेत्रके मध्यभागमें साधित दिक्सूत्रके ऊपर इष्ट दैर्घ्यमित सूत्रको फैलायके उन्होंके अंतमें शंकुओंको गाडके शंकुओंमें पाशोंको रखके कर्णाख्य चिह्नको लेके एक दिशामें खेंचणा जैसे कि उभय शंकुगत रज्जु तुल्य आकृष्ट हो वैसे खेंचणी और जहां कोण चिह्न आवै तहां शकु देणा—ऐसे दोय कोणोंको साधके फेर रज्जुको उलट देणेसे दूसरे दोय कोण फेर होतेहैं ऐसे चतुष्कोण होजाते हैं ॥ १४ ॥

**आग्नेयादिदृढंप्रदक्षिणगतंसूत्रंसमासादयेन्मध्येवामकपार्श्वसुतपुरुषंध्यात्वातमुत्तानकम् ॥ अष्टाश्व्यं २८ शमगेंदु १७ संमितलवान्पुच्छाद्विहायाग्रगोभागोनाभिरितःखनेद्लवमितंवामेऽश्मभिःपूरयेत् ॥ १५ ॥**

एवंक्षेत्रसाधनमुक्त्वासूत्रन्यासमाह । आग्नेयादिति । आग्नेयादिदृढंप्रदक्षिणगतंसूत्रम् आसादयेत् मध्येक्षेत्रमध्येवामकपार्श्वसुतंपुरुषंप्रागुदक्शिरस्कंध्यात्वातंध्यातंपुरुषमुत्तानकंध्यायेत् । कथंभूतम् पार्श्वस्थंलघुमध्यगुरोः परंस्याद्यथोपरितथैवपूरयेत् पश्चिमंच गुरुभिः पुनःपुनः सर्वमेवलघुरित्येवं विधिरिति । कथंभूतम् अष्टाश्व्यंशमष्टाश्विनोंशा भागा यस्मिन्नसतथातम् । अयमर्थः । क्षेत्रप्रमाणंकृकलासरूपंवास्तुपुरुषंप्रकल्प्यततोष्टाविंशतिधाकुर्यात् एवमष्टाश्व्यंशंप्रकल्प्यपुच्छात्सकाशात् अगेंदुसंमितलवान्सप्तदशभागान्विहायत्यक्त्वाअग्रगस्तदग्रगोभागोनाभिः इतोनाभेः सकाशात्वामेवामभागेलवसंमितंखनेत् अनंतरं चाश्मभिः पूरयेत् । तथाच ब्रह्मशंभुः "सूत्रभित्तिशिलान्यासस्तंभस्यारोपणं तथा । पूर्वदक्षिणयोर्मध्येकुर्यादित्याह काश्यपः ॥" इति नारदः "नभस्यादिषुमासेषुत्रिषुत्रिषुयथाक्रमम् । पूर्वादिदिक्शिरावामपार्श्वशायीप्रदक्षिणम् ॥" इति । तथाचशिल्पशास्त्रे "वास्तोः शिरसिपुच्छेचयास्यकुक्षौचपृष्ठतः ॥ आयुष्कामः खनेन्नैववामकुक्षौखनिःशुभा ॥ वास्तुक्षेत्रप्रमाणंचकल्पयित्वास्यवामके ॥ कुक्षौ खातं विधायादौग्रावभिः पूरयेत्ततः" इति॥ तथाचलल्लः "त्यजेद्दशशिरोभागोह्यग्रेसप्तदशांशकान् । मध्येनाभिंविजानीयात्तत्रशंकुंप्रतिष्ठयेत् ॥ अस्थिरस्यशिरोयत्रवास्तोस्तद्गणयत्करैः । दैर्घ्यं वाविस्तृतिंचैवकृत्वाष्टाश्विमितांशकान् ॥ इति" ॥ १५ ॥

## अब सूत्रन्यासको कहतेहैं ।

भा०—प्रथम तो दृढसूत्रको अग्निरूपसे देणा ॥ और क्षेत्रके मध्यमें वामपार्श्वसे और प्रागुदक्शिरसे सोता भया पुरुषका ध्यान करणा फेर उसी पुरुषके उत्तानका ध्यान करणा ।। ऐसे वास्तुपुरुषकी कल्पना करके उसका अट्ठावीश २८ विभाग करणा ॥ फेर उसके सतरह १७ भागको छोडके आगे नाभिस्थान समझना । फिर नाभिके वामभागमें अंशप्रमाण खोदके पत्थर भरणा ॥ १५ ॥

**नाकालेत्रनिधेयउक्ततरुजोग्र्यात्सिद्ध२४विंशा२०ष्टच१६हः कृ-त१२ संख्यांगुलकस्त्रिभागचतुरस्राष्टास्रकानस्रकः॥ कंवक्षस्थ-लमूरुपादयुगलंसंस्पृश्यविप्रादिकोरेखांसूत्रवदग्निजेनरचयेत्तद्वच्च भित्तेःशिलाः॥ १६॥**

अथशंकुन्यासमाह। नाकालेइति। अत्रकुक्षिस्थलेनानरः शंकुः कालेमुहूर्तसमये निधेयः। सकियत्प्रमाणइत्यपेक्षायांनृमानमाह। अग्र्यात्विप्रात्सकाशात्वर्णपरत्वेन सिद्ध २४ विंशा २० ष्टच १६ हःकृत १२ संख्यांगुलकःनिधेयः प्रतिष्ठापनीयः। एतदुक्तंभवति। विप्रेणसिद्धसंख्यांगुलकश्चतुर्विंशांगुलोनिधेयः क्षत्रियेणविंशांगुलः वैश्येनअष्टचंगुलः षोडशांगुलः शूद्रेणाहःकृतसंख्यांगुलोद्वादशांगुलोनिधेयइत्यर्थः। किं-लक्षणो ना उक्ततरुजः शास्त्रोक्तवृक्षोद्भवः।पुनः किंलक्षणः त्रिभागचतुरस्राष्टास्रकानस्रकः त्रिभागेषुचतुरस्राष्टास्रकानस्रकाणियस्मिन्सतथा। एतदुक्तंभवति। यथाप्रमाणंशंकुंत्रि-धाविभज्य आद्यांशंचतुरस्रं द्वितीयांशमष्टास्रं तृतीयांशमनस्रंवर्तुलंकुर्यादितिभावः।तथा-चोक्तंग्रंथांतरे "स्याच्चतुर्विंशविंशाष्टद्वादशांगुलकैःक्रमात्। विप्रादीनांशंकुमानंस्वर्णवस्त्रा-द्यलंकृतम्॥ खदिरार्जुनशालोत्थंयुगपत्रतरूद्भवम्। रक्तचंदनपालाशरक्तशालकिलाल-जम्॥ निंबकारंजकुटजंवैणवंबिल्ववृक्षजम्। शंकुंत्रिधाविभज्याद्यंचतुरस्रंततःपरम्॥ अ-ष्टास्रंचतृतीयांशमनस्रमृजुमव्रणम्। एवंलक्षणसंयुक्तंपरिकल्प्यशुभेदिने"॥ इति॥ अथरेखाकरणमाह।कमिति।अग्निजेनसुवर्णेनब्राह्मणादिकः कादिसंस्पृश्यसूत्रवद्रेखांरचये-त्। सूत्रवदिति आग्नेय्यादिगृहप्रदक्षिणंकुर्यादित्यर्थः। एतदुक्तंभवति। ब्राह्मणःकंशिरः स्पृष्ट्वातर्जन्यावाकृत्वाआग्नेयादिप्रदक्षिणंसूत्रानुगतांरेखांकुर्यात्। तथैवक्षत्रियोवक्षःस्थलं स्पृष्ट्वारेखांकुर्यात्। वैश्यः ऊरुयुगलंस्पृष्ट्वारेखांकुर्यात्। शूद्रःपादयुगलंस्पृष्ट्वारेखांकुर्यात्। तथाचलल्लः "कृत्वासूत्रनिपातंमध्यांगुल्याथवाप्रदेशिन्या। अंगुष्ठेनह्यथवाकनका-क्षतरजतमुक्ताभिः॥ रेखांकुर्यात" इत्यादि। तथाचभृगुः "विप्रःशीर्षंनृपोवक्षोवैश्यश्चो-रूपरःपदे। स्पृष्ट्वारेखांगृहारंभेकुर्यादग्नेःप्रदक्षिणम्"॥ इति॥ अग्नेरित्याग्नेय्याः। तथा-चकारिकायाम् "अंगुष्ठकेनदेशिन्यारेखांकुर्वीतसूत्रतः। स्वर्णेनमणिनारूप्यमुक्तादधि-फलाक्षतैः॥ कुसुमैर्वानशस्त्रेणनलोहेननभस्मना। काष्ठादिभिर्नापसव्यां नवक्रांदो-षदर्शनात्॥ शस्त्रेणशस्त्रमृत्युःस्यादित्यादिस्पष्टमीरितम्॥" इति॥ तथाचबृहद्वास्तु-पद्धतौ "शस्त्रेणशस्त्रमृत्युर्वधोलोहेनभस्मनाग्निभयम्। तस्करभयंतृणेनचलिखिताकाष्ठे-नराजभयम्॥ वक्राचपादलिखितारिपुभयदाक्लेशदाविरूपाच। चर्मांगारास्थिकृतादं-तेनचकर्तुरशुभाय॥ वैरमपसव्यलिखिताप्रदक्षिणासंपदोविनिर्देश्या॥" इति॥ अथशि-लान्यासमाह। भित्तेःशिलाअपिसूत्रवदाचरेयुः आग्नेयादिप्रदक्षिणंस्थापयेयुरित्यर्थः। तथाचवराहः "दक्षिणपूर्वकोणेकृत्वापूजांशिलांन्यसेत्प्रथमम्। शेषाःप्रदक्षिणेनस्तंभाश्चै-वंप्रतिष्ठाप्याः॥" इति॥ १६॥

## अब शंकुन्यासको कहतेहैं ।

भा॰—मुहूर्तसमयमें वास्तुकी कुक्षिमें शंकु देणा ॥ ब्राह्मणके शंकु २४ चौबीस अंगुलका करणा ॥ और क्षत्रियके २० बीस अंगुलका शंकु होता है ॥ और वैश्यके सोलह १६ अंगुलका शंकु होताहै ॥ शूद्रके १२ अंगुलका होता है ॥ और शास्त्रोक्तवृक्षका शंकु होता है॥ और शंकुके तीन भाग करके आद्यभागमें चतुरस्र करणा ॥ और द्वितीयभागमें अष्टास्र करणा और तृतीयांशमें वर्तुल करणा ॥ अब रेखाकरण कहतेहैं ॥ ब्राह्मण अपने मस्तकको स्पर्श कीरके सुवर्णसे आग्नेयादि प्रदक्षिणक्रमसे सूत्रानुगत रेखा करै ॥ ऐसेही क्षत्रिय वक्षःस्थलको स्पर्श करके रेखा करै ॥ और वैश्य दोनों ऊरुको स्पर्श करके रेखा करै ॥ ऐसेही शूद्र पादको स्पर्श करके रेखा करै ॥

## अब शिलान्यासको बतातेहैं ।

ऐसेही आग्नेयादि प्रदक्षिणक्रमसे भित्तिके शिलाका स्थापन करणा ॥ १६ ॥

**पूर्वादौत्रिषडर्थपंचमलवेद्वाःसव्यतोऽकोद्धृतेदैर्घ्येव्द्यंशसमुच्छ्रिता-**
**ब्धिलवकेसर्वासुदिक्षूदिता॥स्तंभोग्नेर्दिशिपूजितःसुसमयेस्थाप्यः**
**शिरश्छत्रभाग्विस्ताराष्टिलवान्वितैःकृतकरैस्तुल्यंगृहोच्चंविदुः १७**

अथभित्तिप्रसंगेनद्वारमाह। दैर्घ्येगृहदैर्घ्ये अंकाप्तेनवभिर्भाजितेसति पूर्वादौदिशिक्रमेणसव्यतोनामभागात्रिषडर्थपंचमलवेद्वाःद्वारमुक्तंमुनिभिरितिशेषः।त्रयश्चषट्चअर्थाश्च पंचचत्रिषडर्थपंच एतेषांसंख्यापूरकात्रिषडर्थपंचमास्तेचतेलवाश्चतेषांसमाहारस्तस्मिन् एतदुक्तंभवति। गृहदैर्घ्यंनवभागंकृत्वा पूर्वाभिमुखेगृहेक्रियमाणेवामभागात्अंशद्वयंत्यक्त्वातृतीयांशेद्वारंकर्तव्यम्।दक्षिणाभिमुखेतथैवांशपंचकंत्यक्त्वाषष्ठेंशेकार्यम्। पश्चिमाभिमुखेतथैवांशचतुष्कंत्यक्त्वापंचमांशेकार्यम्।उदङ्मुखेपश्चिमांशेएवद्वारंकर्तव्यम् । सर्वासु दिक्षुअब्धिलवकेचतुर्भागेद्वारुदिता।किंलक्षणाद्वाः द्व्यंशसमुच्छ्रिता द्विभागोच्चा। तथाच वराहः "दैर्घ्येनवांशाःपदमत्रसव्याद् द्वारंशुभंप्राक्त्रिचतुर्थभागे। चतुर्थषष्ठेदिशिदक्षिणस्यांपश्चाच्चतुष्पंचमकेतथोदक्॥" इति ॥ तथाचच्यवनः "मानाधिकोनदिग्भागे द्वारे नीचसुखक्षयः" इति। अथनिष्पन्नासुभित्तिषुस्तंभप्रतिष्ठामाह। स्तंभोग्नेर्दिशीति।अग्नेर्दिशि आग्नेयांसुसमयेपूर्वोदितेस्तंभः स्थाप्यः। अत्राप्युक्ततरुजइत्यनुवर्तते। किंलक्षणस्तंभः पूजितःस्रक्चंदनार्चितः पुनःकिंलक्षणः शिरश्छत्रभाक्शिरसिछत्रंभजतेइतितथा छत्रंतु काकादिपक्ष्युपवेशनभयात्स्तंभोपरिक्रियते। तथाचवराहः "छत्रस्रग्वंधयुतकृतधूपविलेपनः समुत्थाप्यः। स्तंभस्तथैवकार्योद्वारोच्छ्रायःप्रयत्नेन॥" इति। तथाचोत्पलः स्तंभोपरियदोलूककाकगृध्रादिपक्षिणः। व्यालादयश्चतिष्ठंतितदाकर्तुर्नशोभनम्॥ तस्मात्स्तंभोपरिच्छत्रं शाखांफलवतींतुवा। धारयेदथवावस्त्रं बुधैरत्नादिनिक्षिपेत्॥" इति ॥ गुर्जरदेशेक्वचित्कालसर्पमवलोक्यतच्छून्यदिशिप्रथमंस्तंभप्रतिष्ठांकुर्वंति। तदसत्। यत-

स्तदवलोकनंविवाहवेद्यांकोणेषुश्रृंगारार्थस्तंभान्रोपयंतितद्विषयम् । तदप्येकदेशीयम् न बहुसंमतम् । कालसर्पस्तुयथा "ईशानतःसर्पतिकालसर्पोविहायसृष्टिगणयेद्विदिक्षु । पश्चाद्गतिस्तन्मुखमध्यपुच्छं त्रिकंत्रिकंवैवृषसंक्रमादेः ॥ अहेःफणायांमरणंवरस्य मध्ये कुमार्याःस्वजनस्यपुच्छे । विधेयमेकंकिलशून्यदेशे विवाहवेद्यांनिखनेच्चकीलम् ॥" इति। वृषादित्रिषुराशिषुरवौआग्नेय्यांस्तंभारोपणंकार्यम् । सिंहादिषुईशान्यां वृश्चिकादित्रिषु वायव्यां घटादित्रिषुनैर्ऋत्यां कर्तव्यमिति । एतद्विवाहएव गृहेसिंहादवलोकनीयं वृषाद्वे-द्याम् । तथाच "वृषाद्वेद्यांगृहेसिंहान्मीनात्रीणिसुरालये । मुखंमध्यंतथापुच्छं हित्वा स्तंभंनियोजयेत् ॥" इति । अन्यत्रगृहस्तंभप्रतिष्ठापनंबहुभिर्ग्रन्थकारैराग्नेय्यांवाभिहि-तम् । तथाच ब्रह्मशंभुः "सूत्रभित्तिशिलान्यासं स्तंभस्यारोपणंतथा । पूर्वदक्षिणयोर्म-ध्ये कुर्यादित्याहकश्यपः ॥" इति ॥ तथाचशार्ङ्गधरः "प्रासादेषुचहर्म्येषुगृहेष्वन्येषु सर्वदा । आग्नेय्यांप्रथमंस्तंभंस्थापयेत्तद्विधानतः ॥" इति ॥ तथाचवराहमिहिराचा-र्याः "दक्षिणपूर्वेकोणेकृत्वापूजां शिलांन्यसेत्प्रथमाम् । शेषाःप्रदक्षिणेनस्तंभाश्चैवंप्र-तिष्ठाप्याः ॥" इति ॥ कात्यायनगृह्यकारिकायामप्युक्तम् "एकैकमुच्छ्रयेत्स्तंभंमंत्रै-रेतैः शिलातले । श्रियोवसानइत्यंतैरिमामित्यादिभिर्गृही । आग्नेय्यादिषुकोणेषुमंत्रैरेतैः शिलांन्यसेत् ॥" इति । गृह्येहरिहरभाष्येशालापद्धतिष्वप्येवमेवोक्तम् । इत्यलमति-प्रसंगेन । उक्तत रुजइत्युक्तत्वाच्छास्त्रांतरात्काष्ठान्यवगंतव्यानि । तथाचवास्तुशास्त्रे "श्रीपर्णीरोहिणीशाकसर्जाश्चसरलाःशुभाः । पतंगलोध्रशालाख्यास्तालार्जुनकशिंश-पाः ॥ चन्दनाशोकवदरीमधूकाश्चकदंबकाः । प्रशस्ताश्चशमीनिंबबिल्ववर्जंगृहांतिके । गृहेकाष्ठंसमंश्रेष्ठमलिंदेविषमंशुभम् ॥" इति । नारदः "प्लक्षोदुंबरचूताख्या निंबस्नु हिविभीतकाः । दग्धाःकंटकिनोवृक्षा वटाश्वत्थकपित्थकाः ॥ अगस्तिशिग्रुतालाख्या-स्तिन्तिडीकाश्चनिंदिताः । अन्येचगृहनिर्माणे योजनीयाःसदाद्रुमाः ॥" इति । तथाच वराहः "पितृवनमार्गसुरालयवल्मीकोद्यानतापसाश्रमजाः । चैत्यसरित्संगमभवाश्चघट-तोयेसक्ताश्च ॥ कुंजानुजातवल्लीनिपीडितावज्रमारुतोपहताः । स्वपतितहस्तिनिपी-डितशुष्काग्निप्लुष्टदुष्टमधुनिलयाः ॥ तरवोवर्जयितव्याः शुभदाःस्युःस्निग्धपत्रकुसुम-फलाः । सुरदारुचंदनसमामधुकरतरवःशुभाद्विजातीनाम् ॥ क्षत्रस्यारिष्टाश्वत्थखदिर-विल्वावृद्धिकराः । वैश्यानां जीवखादिरकसिंदूरकस्यंदनाश्चशुभफलदाः ॥ तिंदुककेत-कसरलार्जुनोत्थसालाश्चशूद्राणाम् । सर्वेषांवाशस्ताःसर्वेवृक्षाश्चनिंदिता नोचेत् ॥" इति व्यासोपि "अन्यवेश्मस्थितंदारुनैवान्यस्मिन्प्रयोजयेत् । नतत्रवसतेःकर्त्ता वसेत्तत्रनजी-वति ॥" इति । समरंगणे "इष्टकालोष्टपाषाणमृत्तिकाजीर्णमायसम् ॥ तृणंपर्णंबुधैः प्रोक्तं दारुनूतनंगृहायवै ॥" इति ॥ शार्ङ्गधरेपि "नूतनेनूतनंकाष्ठं जीर्णेजीर्णं प्रशस्यते जीर्णेचनूतनंश्रेष्ठं नोजीर्णंनूतनेशुभम् ॥" इति । वृक्षच्छेदनप्रार्थना ग्रथांतरे उक्ता "यानीहभूतानिवसंतितानि बलिंगृहीत्वाविधिवत्प्रयुक्तम् । अन्यत्रवासंपरिकल्पयंतु

क्षमंतुतान्यद्यनमोऽस्तुतेभ्यः ॥" इति । अथस्तंभप्रसंगेनगृहोच्चतामाह । विस्तारेति । विस्तारस्यगृहविस्तारस्यअष्टिलवः षोडशांशस्तेनअन्वितैर्युक्तैः कृतकरैश्चतुर्हस्तैस्तुल्यं समानंगृहोच्चंविदुर्मुनयइत्यध्याहारः । तथाचरत्नकोशे "विस्तारषोडशांशश्चतुर्हस्तोभवेद्गृहोच्छ्रायः" इति । तथाचलल्लः " नात्युच्छ्रितंनातिनीचंकुड्योत्सेधंयथारुचि " इति ॥ १७ ॥

## अब द्वारको कहतेहैं ।

भा०–गृहके दैर्घ्यका नव ९ भाग करकै पूर्वाभिमुख गृह करणा होयतो वामभागसे अंशद्वयको त्याग करके तृतीयांशमें द्वार करणा ॥ और दक्षिणाभिमुख करणा होयतो पांच अंशको छोडके छठे अंशमें करणा ॥ और पश्चिमाभिमुख करणा होयतो चार अंशको छोडके पांचमा अंशमें करणा ॥ उत्तरमुख करणा होयतो पश्चिमांशमें करणा ॥ और सब दिशाओंमें चौथे भागमें द्वार करणा ॥ द्वारोंको दोय भाग ऊंचा करणा ॥ और पूर्वोदित समयमें अग्निकोणमें स्तंभस्थापन करणा ॥ उक्त काष्ठका स्तंभ करणा ॥ और चंदनपुष्पादिकोंसे स्तंभका पूजन करणा ॥ और स्तंभके मस्तकपर छत्र करणा ॥ अब स्तंभके प्रसंगसे गृहकी उच्चताको कहते हैं । गृहके विस्तारका षोडशांशयुक्त चार हाथ घरको ऊंचा करणा ॥ १७ ॥

**स्नानाग्निस्वपिवस्त्रभोजनपशुद्रव्यामरौकःस्थितिंपूर्वादौजलमीशितुर्दिशिपरंवायोरपाङ्मूत्रकम् ॥ अल्पेशक्तिभुवोर्यथारुचिपरे गेहस्यदक्षेघरट्टांबूलूखलचुल्लिकापितृपदप्रक्षालनान्यूचिरे ॥ १८॥**

अथमुख्यगृहात्तकस्यगृहंकस्यांदिशिकर्तव्यंतदाह । स्नानेति । स्नानंप्रसिद्धम् अग्निः प्रसिद्धः स्वपिःशयनं वस्त्राणिप्रसिद्धानि भोजनंप्रसिद्धं पशवोगवादयः द्रव्याणिसुवर्णादीनि अमरादेवाः एषामोकांसिगृहाणि तेषांस्थितिःस्थापनं पूर्वादौदिशिक्रमेणकार्यमित्यध्याहारः । तथाचनारदः "स्नानागारंदिशिप्राच्यामाग्नेय्यामग्निमंदिरम् । याम्यायां शयनागारंनैर्ऋत्यांवस्त्रमंदिरम् ॥ प्रतीच्यांभोजनागारंवायव्यांपशुमंदिरम् । भांडकोशं तूत्तरस्यामीशान्यांदेवमंदिरम् ॥ " इति ॥ अथजलस्थानमाह । ईशितुरीशानस्यदिशिजलं कार्यंनान्यत्र । तथाचलल्लः "प्राच्यादिदिक्स्थेसलिलेसुतहानिः शिखिभयंरिपुभयंच । स्त्रीकलहंस्त्रीदौष्टचंनैष्ठ्यंचिंतात्मजविवृद्धिःस्यात् ॥" इति॥अथान्यदप्याह । परमिति । परमनूक्तंपदार्थजातंवायोर्दिशिकार्यम् । अन्यानिमारुत्यामितिलल्लोक्तत्वात् । अपागदक्षिणस्यांदिशिमूत्रकंकार्यम् । स्थलसंकोचेसतिएतद्यत्प्रोक्तंतद्गृहमध्येवाह्यतश्चस्वस्थानेतारतम्येनयोज्यम् । अथशक्तिभुवोःसंकोचेसतिकर्तव्यमाह । अल्पे इति । शक्तिभुवोरल्पेसतियथारुचिकार्यम् । गेहस्यदक्षेपरेआचार्याःघरट्टादिकमूचिरे । घरट्टःपिष्टयंत्रम् अंबुउदकम् उलूखलादिकंप्रसिद्धम् । तथाचोक्तंग्रंथांतरे "उलूखलंपिष्टयंत्रमग्निस्थानजलाश्रयम् । वेश्मनोदक्षिणेपार्श्वेपितृणांपादशौचनम् ॥ " इति ॥ १८ ॥

## अब कहतेहैं कि किसका गृह किस दिशामें करणा ।

भा०-पूर्वमें स्नानागार बनाना ॥ अग्निकोणमें अग्निस्थान ॥ दक्षिणमें शयनस्थान ॥ नैर्ऋतमें वस्त्रस्थान ॥ पश्चिममें भोजनशाला ॥ वायव्यमें पशुशाला ॥ उत्तरमें द्रव्यशाला ॥ ईशानमें देवमंदिर करणा ॥ और ईशान दिशामें जलस्थान ॥ और अन्य संपूर्ण पदार्थों को रखणेके लिये वायव्यकोणमें शाला करणी ॥ और दक्षिण दिशामें मूत्रस्थान करणा ॥ और स्थल थोडा होय तो उन दिशाके घरमें करणा वा बाहर करणा ॥ और शक्ति भूमि अल्प होयतो यथारुचि करणा ॥ और घरके दक्षिणमें चक्की जलस्थान ऊखल चुल्हिका पितृयोंके पादशौचादिकका करणा यह कोई आचार्यका मत है ॥ १८ ॥

**द्वात्रिंशाधिकहस्तमब्धिवदनंतार्णत्वलिंदादिकंनेष्वायादिकमीरितंतृणगृहंसर्वेषुमास्सूदितम् ॥ छन्नंवश्यकपाटमर्चिततमंवेश्मोक्तरीत्यादिशेदारंभोदितमास्सुनारदमतान्माघोर्जशुक्रेषुतु ॥ १९ ॥**

अथकेषुकेषुगृहेषु आयादिकंभाव्यंकेषुनभाव्यमित्याह । द्वात्रिंशेभ्यःअधिकाःहस्ताः यस्मिनगृहेप्रमाणंतत्द्वात्रिंशाधिकहस्तमब्धिवदनंचतुर्मुखं तार्णंतृणगृहम् अलिंदादिकम् अलिंदंपट्टिशालेतिलोकेप्रसिद्धम् । आदिशब्देननिर्व्यूहादिगृहभूषणंगृह्यते एषुआयादिकंनईरितंनोक्तम् । तथाचदैवज्ञवल्लभे "अलिंदनिर्व्यूहविनिर्गमाद्याश्चतुर्दिशंयेगृहभूषणाय ॥ आयादिकंतेषुनाचिंतनीयंयतोनतेवास्तुपरिग्रहेस्युः" इति । तथाचचिंतामणौ "यत्रैदैर्घ्यग्रहादीनांद्वात्रिंशद्धस्ततोधिकम् ॥ नतत्रचिंतयेद्धीमान्गणनायव्ययादिकम्" इति । तथाचराजमार्तण्डे "आयव्ययौमासशुद्धिंचिंतयेन्नतृणालये।" इति । तथाचवसिष्ठः "एकादशेयवादूर्ध्वंयावद्वात्रिंशहस्तकम् ॥ तावदायादिकं चिंत्यंतदूर्ध्वंनैवचिंतयेत्" इति । अथतृणगृहेविशेषमाह । तृणगृहंसर्वेषुमास्सुउदितम् सर्वमासेषुकर्तव्यमित्यर्थः । अथनिष्पन्ने गृहेप्रवेशमाह । छन्नमिति । आरंभोदितमासेषुशास्त्ररीत्यावेश्मगृहंविशेत् आरंभायउदिताःप्रोक्तास्तेचतेमासाश्चतेषुशास्त्ररीत्यासूत्राद्युक्तविधिनागृहंप्रविशेत्स्वामीत्यर्थः । कथंभूतंवेश्म छन्नंकुड्यैराच्छादितम्। पुनःकिंलक्षणं वश्यकपाटंवश्यमधीनंकपाटंयस्यतत्तथातत्वश्यमिति लापितउद्घाटितेवातथैवस्थिरंभवति । पुनः किंलक्षणम् अर्चिततमं तोरणमालाद्यलंकृतम् । तथाचनारदः "अकपाटमनाच्छन्नमदत्तबलिभोजनम् ॥ गृहंनप्रविशेदेवविपदामाकरंहितत्" इति । तथाचच्यवनः "स्वयमुद्घाटितेरोगोऽपिहितेचकुलक्षयः । नानाधिकोनदिग्भागेद्वारेनीचेसुखक्षयः" इति । अथ प्रवेशेमासविशेषमाहनारदमतात्। "माघोर्जशुक्रेषुमासेषुगृहंप्रविशेत्"इति माघःप्रसिद्धः ऊर्जःकार्तिकःशुक्रोज्येष्ठःएषुगृहंप्रविशेदित्यर्थः । आरंभोदितमास्स्वित्यनेनतृणगृहस्य सर्वमासेषुविहितत्वात् प्रवेशोपिसर्वमासेषु विहितः । तथाचनारदः "प्रवेशोमध्यमोज्ञेयः सौम्यकार्तिकमासयोः ॥ माघफाल्गुनवैशाखज्येष्ठमासेषुशोभनः" इति । तथाच

ज्योतिःप्रकाशे "गृहारंभोदितैर्मासैर्धिष्ण्यैर्वारैर्विशेद्गृहम्" इति । तथाचग्रंथांतरे विशेत्सौम्यायनेहर्म्यंतृणागारंतुसर्वदा" इति । तथाच व्यवहारसारतत्त्वे "सौम्यायने श्रावणमार्गपौषेजन्मर्क्षलग्नोपचयंदशांशे ॥ वामंगतेर्केगृहवास्तुपूजांकृत्वाविशेद्वेश्मभकूटशुद्धम्" इति ॥ १९ ॥

## अब कौन कौन घरमें आयादिक देखणी और कौन २ में नहीं देखणी सो कहतेहैं ।

भा०-और ३२ बत्तीस हाथके ऊपर घरमें और चतुर्मुखमें और तृणके घरमें और अलिंद याने जिसको पट्टिशाल कहते हैं आदि शब्दसे गृहभूषणादिकमें आयादिक नहीं देखणी ॥ और घासके मकानको संपूर्ण मासोंमें करणा ॥

## अब सिद्ध गृहमें प्रवेशका मुहूर्त कहतेहैं ।

भा०-और जो घर भीतोंसे आच्छादित होय ॥ और खोलणे ढांकणे योग्य जिसमें किमाड होय ॥ और तोरण मालादिकोंसे अलंकृत होय जिस घरमें सूत्रोक्त वास्तुशांति करके गृह बनानेमें कहे मासोंमें प्रवेश होना शुभ है ॥ और नारदके मतमें माघ: कार्तिक ज्येष्ठ मासोंमें भी प्रवेश करणा लिखा है ॥ १९ ॥

**प्रारंभोदितभैःप्रवेशउदितोपूर्वः सपूर्वःस्थिरैर्मैत्रैश्चाच्युतमूलदस्रसहितैरारंभभैर्द्वयात्मकः ॥ कृत्यंवेश्मभवंदिवैवविहितंरात्रौप्रवेशः क्वचित्सूर्यर्क्षादिभपंचकमनुमितादष्टप्रवेशेनसत् ॥ २० ॥**

इदानीमपूर्वादिप्रवेशानाह। प्रारंभेति । प्रारं[illegible]दितभैःगृहप्रारंभोदितनक्षत्रैरपूर्वः प्रवेशःउदितःमुनीन्द्रैरित्यध्याहारः ।अप्रारंभोदितभै[illegible]त्युपलक्षणम् तेनप्रारंभोदिततिथिभादिकंसर्वंग्राह्यम् । अपूर्वोनामनूतनगृहेप्रथमःप्रवेशउच्यते।स्थिरैर्मित्रैश्चनक्षत्रैः सपूर्वःप्रवेश उदितः सपूर्वोनामयात्रावसानेयःक्रियते । अथ अच्युतमूलदस्रसहितैरारंभभैर्द्वयात्मकः प्रवेशः उदितः द्वयात्मकोनामअग्न्यादिनानष्टगृहेपुनर्यःक्रियते । तथाचज्योतिःप्रकाशे "अपूर्वःप्रवेशोगृहारंभधिष्ण्यैर्विधेयःकरोमध्यमोत्रेतिकेचित्॥ सपूर्वःस्थिरैर्मित्रभैरेवशुद्धैरतोन्योश्विमूलाच्युतारंभधिष्ण्यैः"वसिष्ठः "अपूर्वसंज्ञंप्रथमंप्रवेशंयात्रावसानेचसपूर्वसंज्ञम्॥द्वंद्वाह्वयंचाग्निभयादिजातंगृहप्रवेशंत्रिविधंवदंति"॥अथगृहकृत्यविषयेदिनरात्रिविशेषनिर्णयमाह।कृत्यंवेश्मभवमिति ।वेश्मभवंगृहभवंयत्किंचित्कृत्यंतद्दिवैवविहितंनरात्रौ क्वचिद्दिवामुहूर्ताभावेसतिरात्रौप्रवेशोविहितः नान्यत् । तथाचवसिष्ठः "दिवाप्रवेशःशुभदःसपुत्रपौत्रादिवृद्ध्यैनिशिभास्करेंद्वोः ॥ बलेनमत्स्यध्वजवासरस्यरात्रिंविनासूर्यतिथिश्चरात्रिम्" इति । अथकलशवास्तुनक्षत्रशुद्धिमाह । सूर्यर्क्षादिति । सूर्यनक्षत्रादिभपंचकंनक्षत्रपंचकंतथासूर्यर्क्षादिमनुमिताच्चतुर्दशमितान्नक्षत्रादष्टनक्षत्राष्टकंप्रवेशेनसत् नशुभंस्यात् अन्यानिशुभानीत्यर्थात्सिद्धम् । अत्रपूर्वोक्तानांनक्षत्राणांशुभाशुभत्वंज्ञातव्यम् ॥ २० ॥

## अब अपूर्वादिप्रवेशोंका मुहूर्त कहतेहैं ।

भा०-प्रारंभके नक्षत्रोंमें नूतनगृहमें प्रवेश करणा ॥ इस जगह उपलक्षणसे प्रारंभोदित तिथि नक्षत्रादिकोंकोभी लेणा ॥ और स्थिर नक्षत्रोंमें और मैत्र नक्षत्रोंमें यात्रासे आयके प्रवेश शुभ होता है ॥ और पुष्य-मूल-अश्विनीसहित आरंभके नक्षत्रोंमें अग्न्यादिकोंके भयसे फेर प्रवेश करना शुभ है ॥ गृहकर्मदिनमें मुहूर्त न होयतो रात्रिमें प्रवेश होवेतो शुभ होय ॥ अब कलशवास्तुनक्षत्रकी शुद्धिको कहते हैं ॥ सूर्यनक्षत्रसे पांच नक्षत्रोंमें और सूर्यनक्षत्रसे चौदमा १४ नक्षत्रसे ८ आठ नक्षत्रोंमें प्रवेश नहीं करणा ॥ २० ॥

लग्नेचोपचयस्थितैरविमुखैःप्रारंभवत्संस्थितैःसूर्येवामगतेस्वदिग्वदनभैर्वेश्मप्रवेशःशुभः॥रंध्रेषुद्विभवेभ्यआसुतगतःसूर्योयदास्यात्तदापूर्वाद्याननमालयंप्रविशतांस्याद्वामगोऽसौक्रमात् ॥ २१ ॥

इतिश्रीनारायणदैवज्ञविरचितेमुहूर्तमार्तण्डेवास्तुप्रकरणंसमाप्तम्॥

अथप्रवेशेलग्नशुद्धिमाह । लग्नेशः शुभःस्यात् । रविमुखैःसूर्याद्यैःप्रारंभवत्संस्थितैः गृहारंभार्थमुक्तंतद्वत्संस्थितैरित्यर्थः । कस्मिन्सति सूर्येवामगतेसति । पुनःकैः स्वादिग्वदनभैः यद्दिङ्मुखंगृहंतद्दिङ्मुखैः प्रवेशोदितैर्नक्षत्रैरित्यर्थः । अथवामसूर्यलक्षणमाह । रंध्रइति । रंध्रे ८ षु ५ द्वि २ भवे ११ भ्यः लग्नादिअष्टमपंचमद्वितीयैकादशेभ्यः सकाशात् आसुतगतः आपंचमगतः सूर्योयदास्यात्तदापूर्वाद्याननमालयंपूर्वादिमुखं गृहंप्रविशतांमनुष्याणामसौसूर्यः क्रमाद्वामगतः स्यात् । एतदुक्तंभवति । अष्टमात्पंचसुवर्तमानोर्कःपूर्वमुखगृहेप्रविशतांवामोभवति । पंचमात्पंचसुगतोदक्षिणमुखेगृहेप्रविशतांवामोभवतीत्यर्थः ॥ २१ ॥

इतिस्वोक्तमुहूर्तमार्तण्डटीकायांमार्तण्डवल्लभायांवास्तुप्रकरणंसमाप्तम् ॥

भा०-जन्मलग्नसे और जन्म राशिसे उपचयवाले स्थिरलग्नमें गृहप्रवेश शुभ होय ॥ और सूर्यादिकग्रह प्रारंभमें जैसे होंय ॥ और वामसूर्य होय तब करणा ॥ और जिस दिशामें घरका मुख होय उस दिशाके उक्त नक्षत्रोंमें प्रवेश करणा ॥ यह वार्ता एक २ दिशामें सात २ नक्षत्र रखके प्रवेश द्वारदिशामें उक्त नक्षत्र देखणा सो सप्तशलाका बनाके देखणा ॥

## अब वामसूर्य कहतेहैं ।

लग्नसे अष्टमसे ५ पांचतक सूर्य होय तो पूर्वमुख घरमें प्रवेश होणेवालोंके वामसूर्य होय ॥ और पांचमेसे पांचतक दक्षिणमुख गृहमें प्रवेश होणेवालोंके वामसूर्य होय ॥ और दोयसे पांचतक पश्चिम मुखघरमें प्रवेश होणेवालोंके वामसूर्य होय ॥ और ग्यारेसे पांचतक उत्तरमुख गृहमें प्रवेश होणेवालोंके वामसूर्य होय ॥ २१ ॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्रमोडुरामविरचितायां मार्तण्डदर्शिन्यां वास्तुप्रकरणं समाप्तम् ॥

अथमुहूर्तमार्तण्डेयात्राप्रकरणंप्रारभ्यते ॥ ॥ वारेचोपचयावहस्यसुदशास्विष्टप्रयाणंजगुःकर्णात्त्यादितिभद्विकेषुमृगमैत्रार्केषु नोजन्मभे॥ सार्पार्द्राग्नियमाजपादपितृषुत्वाष्ट्रत्रयेचाशुभंरिक्ता४ ९, १४ पर्व १५, ३० गुहा ६ ष्टमी ८हरि १२ सितास्येषुज्ञशुक्रोन्मुखम् ॥ १ ॥

अथयात्राप्रकरणंव्याख्यायते,तत्रादौयस्मिन्कालेयात्राकर्तव्येत्याह।सुदशासु शोभना दशांतर्दशाविदशोपदशासु उपचयावहस्यग्रहस्यवारेगोचराष्टकवर्गादौशुभफलग्रहस्यवारेप्रयाणमिष्टंशुभंजगुराचार्याः।केषु कर्णात्यादितिभद्विकेषु कर्णःश्रवणः अंत्यंरेवती अदितिभंपुनर्वसुः एषांद्विकाः श्रवणधनिष्ठे रेवत्यश्विन्यौपुनर्वसुपुष्यौ एष्वित्यर्थः।पुनःकेषु मृगमैत्रार्केषु मृगःप्रसिद्धः मैत्रमनुराधा अर्कोहस्तः एषुनवनक्षत्रेषुप्रयाणंशुभमित्यर्थः। तत्र विशेषमाह। नोजन्मभइति । जन्मभेजन्मनक्षत्रेश्रवणाद्यन्यतमेपियानंशुभंनोजगुः। अथयेषुअशुभंतान्याह। सार्पेति। सार्पमाश्लेषा आर्द्राप्रसिद्धा अग्निःकृत्तिका यमोभरणी अजैकपादः पूर्वाभाद्रपदा पितरोमघा त्वाष्ट्रत्रयेचित्रात्रयेच एषुनवनक्षत्रेषुयानमशुभंजगुः।अन्यानिनवनक्षत्राणिमध्यमानीत्यर्थतःसिद्धम्। अथयासुतिथिषुअशुभंतदाह। रिक्तेति। चतुर्थीनवमीचतुर्दश्यः पर्वणीपूर्णिमामावास्ये गुहःषष्ठी अष्टमीप्रसिद्धा हरिर्द्वादशी सितास्यंशुक्लप्रतिपत् तेषु प्रयाणंयानमशुभंजगुः अर्थादन्यासुतिथिषुशुभम्। अन्यद्दुष्टमाह। ज्ञेति। ज्ञोबुधः शुक्रःप्रसिद्धः तयोरुन्मुखंसंमुखयानमुक्तेष्वपितिथिनक्षत्रादिषुयानमशुभंजगुः। बुधशुक्रसंमुखंगमनंनकर्तव्यमित्यर्थः ॥ १ ॥

अथ यात्राप्रकरणम्।

भा०-शुभग्रहकी दशा होवै। और उपचयावह ग्रहका वार होय तब यात्रा करणी॥ श्र० रे० पुन० अश्वि० पुष्य० मृ० अनु० हस्त० इतने नक्षत्र यात्रामें शुभ हैं ॥ और जन्मनक्षत्रमें यात्रा नहीं करणी ॥ और आश्लेषा-आर्द्रा-कृत्तिका-भरणी-पूर्वाभाद्रपदा-मघा-चित्रा-स्वाती-विशाखा इतने नक्षत्र यात्रामें अशुभ हैं-और शुभाशुभसे अन्य नक्षत्रमें यात्रा मध्यम है॥ और ४। ९। १४। ३०। ६। ८। १२ शुक्लपक्षकी १ इन तिथियोंमें यात्रा अशुभ है॥ और बुध शुक्रके संमुखमें यात्रा नहीं करना॥ १॥

प्राक्चंद्रासितशक्रभंवसुपराद्धोत्पंचभेज्यानपाक्पश्चात्कार्कसितानुदक्कुजबुधार्यम्णस्त्यजेच्छूलकान्॥ त्रिंशाष्टौनवभूमयोग्निगिरिशाविश्वेषवोऽर्काब्धयः षड्शक्रास्तिथिपर्वतादशद्दशोप्येतांस्तिथीनीशतः ॥ २ ॥

अथशूलानाह। प्रागिति। प्राक्पूर्वस्यांदिशिचंद्रासितशक्रभंत्यजेत् चंद्रः सोमवारः असितःशनिवारः शक्रभंज्येष्ठा एतत्त्रयंपूर्वदिशित्यजेदित्यर्थः। अपाक्दक्षिणस्यां वसुपरार्द्धात् धनिष्ठोत्तरार्द्धात्पंचनक्षत्राणि ईज्योबृहस्पतिवारः एतान्दक्षिणस्यांत्यजेत्। पश्चात्पश्चिमायांदिशिकार्कसितान्त्यजेत् कःरोहिणी अर्कोरविः सितःशुक्रः एतान्पश्चिमायांत्यजेदित्यर्थः। उदक् उत्तरस्यांदिशि कुजबुधार्यम्णस्त्यजेत् कुजोमंगलवारः बुधः प्रसिद्धः अर्यमानामोत्तराफाल्गुनी एतान्शूलकानुत्तरस्यांत्यजेत्। शूलपदस्यप्रत्येकंसंबंधः। अथयोगिनीमाह। त्रिंशाष्टाविति। एतान्प्रत्येकपदगतान् तिथीन् ईशतः ईशान्याः सकाशात्प्रदक्षिणक्रमेणजह्युः एतांस्तिथीन्त्यजेत्। एतेके त्रिंशा ३० ष्टौ ८ ईशान्यांनव ९ भूमयः १ प्राच्याम् अग्निः ३ गिरिशाः ११ आग्नेय्यां विश्वे १३ पव: ५ दक्षिणस्याम् अर्का १२ब्धयः ४ नैर्ऋत्यांषट् ६ शक्राः १४ पश्चिमायां तिथि १५ पर्वताः ७ वायव्यां दश १० दृशः २ उत्तरस्यां अत्रांकन्यासएवव्याख्यानम्॥ २॥

## अब शूलको कहतेहैं।

भा०-चंद्र शनिवार और ज्येष्ठा नक्षत्र इन्होंके दिन पूर्वदिशामें यात्रा अशुभ है॥ और धनिष्ठाके अर्द्धभागसे पांच नक्षत्रमें और गुरुवारके दिन दक्षिणयात्रा नहीं करणी॥ और रोहिणीनक्षत्रमें और सूर्य शुक्रके दिनमें पश्चिममें यात्रा अशुभ होय॥ और भौम बुधवारमें और उत्तराफाल्गुनी नक्षत्रमें उत्तरदिशामें यात्रा नहीं करणी॥

## अब योगिनीको कहतेहैं।

भा०-अमावास्यामें और अष्टमीमें ३०। ८ ईशानमें योगिनी त्याज्य है॥ और ९। १ पूर्वमें नहीं जाणा॥ और अग्निकोणमें ३। ११ त्याज्य है॥ और दक्षिणमें १३। ५ त्याज्य है। और १२। ४ नैर्ऋत्यमें त्याज्य है॥ और ६। १४ पश्चिममें त्याज्य है॥ और वायुमें १५।७ त्याज्य है॥ और १०। २ उत्तरमें त्याज्य है॥ २॥

**ऐंद्याद्यग्निभसप्तसप्तभगणोवाय्वग्निकाष्ठास्थितोनोल्लंघ्यः परिघस्त्वपाग्वरुणभैःप्राच्यैरुदङ्नोव्रजेत्॥ सर्वाशासुरवीज्यमित्रतुरगैर्यायादथावश्यकेहित्वाशूलमनिष्टभैर्यदिनिजाशेष्टांगलब्धिर्व्रजेत्**

अथान्यन्नियमाह। ऐंद्रचेति। ऐंद्यादिषुदिक्षुअग्निभात्कृत्तिकायाःसकाशात्सप्तसप्तभगणोभवेत्। एतदुक्तंभवति सप्तशलाकाचक्रंनिष्पाद्यपूर्वगतासुसप्तसुरेखासुईशानतः कृत्तिकादीनिसप्तनक्षत्राणिन्यसेत्। तत्पुरःस्थानिसप्तदक्षिणगतरेखासुन्यसेत्। एवंपश्चिमोत्तररेखासुक्रमेणन्यसेत्। ततोवायव्याग्नेयदिग्गतांरेखांकुर्यात् अस्यारेखायाः परिघ इतिसंज्ञा। एवंनिष्पादितेचक्रेप्रयोजनमाह। वाय्वग्निकाष्ठास्थितइति। वायुःप्रसिद्धः अग्निःप्रसिद्धः अनयोःकाष्ठेदिशौवायव्याग्नेय्यौ तत्रस्थितःपरिघःनोल्लंघ्यः। अथान्य

त्प्रयोजनमाह । अपागिति । अपाग्दक्षिणस्यांवरुणभैः प्रतीच्यैर्नक्षत्रैर्नव्रजेत् । प्राच्यैर्नक्षत्रैः उदक्उत्तरस्यांदिशिनव्रजेत् न गच्छेत् । तत्तद्दिक्स्थापितनक्षत्रैस्तत्तद्दिग्गमनं सिद्धमेव । सर्वासुसर्वदिक्षुरवीज्यमित्रतुरगैर्यायात् रविर्हस्तः ईज्यःपुष्यः मित्रमनुराधा तुरगोश्विनी एभिर्नक्षत्रैः सर्वासुदिक्षुगमनंशुभमित्यर्थः । अथावश्यकेकृत्येअस्यापवादमाह । अथावश्यकेति । आवश्यकेकृत्येसतिनिंद्यैःअनिष्टभैः यद्दिक्षुयानिनिंद्यानितैः पूर्वोक्तैर्नक्षत्रैस्तस्यांदिशितदाव्रजेत् । तदाकदा यदानिजाशेष्टांगलब्धिर्भवेत् निजाशायांनिजगमनदिशायामिष्टांगलब्धिः इष्टलग्नलाभःस्यात् । इष्टलग्नंवक्ष्यमाणलक्षणं तद्यथोक्तगुणसंपन्नंयदास्यात्तदागच्छेदित्यर्थः । नोचेन्नेत्यर्थात्सिद्धम् । किंकृत्वा शूलभं हित्वा पूर्वोक्तशूलनक्षत्रंत्यक्त्वा शूलनक्षत्रेसति निजाशेष्टांगलब्धावपिनगच्छेदित्यर्थः ॥ ३ ॥




भा०—कृत्तिकादि सात नक्षत्रोंको पूर्वादि चार दिशाओंमें देके वायुकोण अग्निकोणमें एक रेखा देणी ॥ इस रेखाकी परिघसंज्ञा है इसका उल्लंघन नहीं करणा । पश्चिमदिशाके नक्षत्रोंमें दक्षिणकी यात्रा नहीं करणी ॥ और पूर्वदिशाके नक्षत्रोंमें उत्तरकी यात्रा नहीं करणी ॥ जिस दिशाका नक्षत्र होय उसी दिशामें जाणा ॥ और हस्त–पुष्य–अनुराधा–अश्विनी इन नक्षत्रोंमें सारी दिशाओंमें यात्रा करणी अच्छीहोय ॥ और नक्षत्र अशुभ होय पर वक्ष्यमाण इष्टलग्नका लाभ होयतो यात्रामें जाणा परंतु शूलका त्याग करणा ॥ ३ ॥

**मिश्राख्यैर्ध्रुवभैर्दिनादिमलवेतीक्ष्णैर्द्वितीयेंतिमेक्षिप्रैर्नक्रमशोमृदूग्रचरभैरात्रित्रिभागेष्वियात्॥श्रुत्यर्केज्यमृगेष्वयंननियमोवैश्वांत्यपादश्रवस्तिथ्यंशस्त्वभिजिद्गमेसफलदोयामींविनापिक्षणः ४॥**

अथान्यदाह । मिश्राख्यैरिति । दिनादिमलवेत्रिधाभक्तस्यदिनस्याद्यंशे मिश्राख्यैः साधारणैर्नक्षत्रैः ध्रुवभैश्चनइयात्नगच्छेत् । द्वितीयभागेतीक्ष्णैः अंतिमेतृतीयभागे क्षिप्रैर्नक्षत्रैर्नेयात् । अथरात्रित्रिभागेषुक्रमशोमृदूग्रचरभैर्नेयात् रात्रेःप्रथमेभागेमृदुभिः द्वितीयेभागेउग्रैः तृतीयेभागेचरभैर्नेयात् । अथविशेषमाह । श्रुतीति । श्रुत्यर्केज्यमृगेषु अयंनियमोन । श्रुतिःश्रवणः अर्कोहस्तः ईज्यःपुष्यः मृगःप्रसिद्धः एभिर्नक्षत्रैः सर्वभागेषु गंतव्यमितिभावः । अथाभिजिल्लक्षणंतत्फलंचाह । वैश्वेति । वैश्वमुत्तराषाढातस्यांत्यपादश्चतुर्थचरणः श्रवणस्यआद्यस्तिथ्यंशः प्रथमःपंचदशांशः एतत्प्रमाणोऽभिजित्स्यात् सोभिजिद्यामींदक्षिणांदिशंविनासर्वदिक्षुफलदः क्षणोमुहूर्तोपि अभिजिद्यामीं विनाफलदः यातॄणामभीष्टफलदोभवतीत्यर्थः ॥ ४ ॥

भा०-दिनके तीन भाग करणा सो प्रथम भागमें मिश्र ध्रुव नक्षत्र होंय तो यात्रा अशुभ होय ॥ और द्वितीय भागमें तीक्ष्ण नक्षत्र होंय तो नहीं जाणा ॥ और तृतीय भागमें क्षिप्र नक्षत्र होंय तो नहीं जाणा ॥ और रात्रिके प्रथम भागमें मृदुमें यात्रा नहीं करणी और रात्रिके द्वितीय भागमें उग्र नक्षत्र होय तो यात्रामें नहीं जाणा । और रात्रिके तृतीय भागमें चर नक्षत्र होय तो यात्रा करना अशुभ होय ॥ और श्रवण-हस्त-पुष्य-मृग इन नक्षत्रोंमें सारी दिशाओंमें यात्रा शुभ है ॥ और उत्तराषाढाका चौथा ४ भाग और श्रवणके आदिके १५ भागका नाम अभिजित् है ॥ यह अभिजित् दक्षिण विना और दिशामें शुभ है । और अभिजित् मुहूर्तका विचार भी ऐसा होय है ॥ अर्थात् अभिजित्नक्षत्रमें और अभिजित् मुहूर्तमें दक्षिण यात्राका निषेध है ॥ ४ ॥

**एकार्केंद्वयनानुकूलमनिशंभेदेदिवारात्रयोर्भौमेप्राक्छनिचंद्रयोर्ग-तमपाक्पश्चाज्ज्ञगुर्वोर्हितम् ॥ भृग्वर्काह्व्युदगर्कभाद्युभमगैस्तष्टं द्विसप्ताडलरुय्यंगाभ्यांविडलोनयोर्नगमनंश्रीदेवलोक्त्याहितम्५॥**

अथान्यदाह । एकार्केंद्वयनानुकूलमिति । अर्कश्चइंदुश्चतयोरयनमर्केंद्वयनम्एकंचतद-केंद्वयनंचतत्तथा तस्यानुकूलंगतंगमनमनिशमहर्निशंहितंस्यात् । भेदेसतिदिवारात्रयोःक्र-मेणशस्तंस्यात् । अयमर्थः । सूर्योदिनस्वामी चंद्रोरात्रिस्वामी द्वौचेदुत्तरायणेस्यातां तदाहर्निशमुदग्गमनंशस्तं द्वौचेद्दक्षिणायनेभवतस्तदाअहर्निशंदक्षिणगमनंशस्तं रात्रौ चंद्रायनदिशं प्रति गमनंशस्तंस्यात् । अर्थात्अन्यथानशस्तंस्यात् । अत्रप्राचीउत्तरसं-बंधिनीज्ञेया तस्माद्यदाउदग्गमनंशस्तंतदाप्राग्गमनमपिशस्तंभवति । प्रतीचीदक्षिण-संबंधिनीज्ञेया तेनयदादक्षिणदिग्गमनंशस्तंतदाप्रतीचीगमनमपिशस्तंस्यात् । तथाच-रत्नकोशे "दिनकरकरप्रतप्तामकराद्यावुत्तरांचपूर्वांच । यायाच्चकर्कटादौयाम्याशा-स्यंप्रतीचींच" ॥ अथान्यदाह । भौमेइति । भौमेप्राक्पूर्वदिशिगतंगमनंहितंस्यात् शनिचंद्रयोरपाक्दक्षिणस्यां ज्ञगुर्वोः बुधगुर्वोः पश्चात्पश्चिमायां भृग्वर्काह्निशुक्ररवि-दिनेउदगुत्तरस्यांगतंहितंस्यात् । अथाडलंविडलंचाह । अर्कभादिति । सूर्यनक्षत्राद्युभं दिननक्षत्रं अगैः सप्तभिस्तष्टं शेषितंसत् द्विसप्त द्वौवासप्तवायदाभवंतितदाडलःस्यात् । रुय्यंगाभ्यांत्रिषट्संख्याकाभ्यां विडलः स्यात् । अनयोराडलविडलयोर्गमनंश्रीदेवलो-क्त्यादेवलर्षिवचनेनहितं स्यात् ॥ ५ ॥

भा०-दिनस्वामी सूर्य और रात्रिस्वामी चंद्र यह उभय उत्तरयाण होंय तो अहर्निश उत्तरमें और पूर्वमें यात्रा अच्छी होय ॥ और उभय दक्षिणायनमें होंय तो अहर्निश दक्षिणमें और पश्चिममें यात्रा करना अच्छा होय ॥ रात्रिमें चंद्रायनमें जाणो शुभ होय ॥ अर्थात् अन्यथा नेष्ट होय ॥ और भौमवारके दिन पूर्वयात्रा उत्तमा होय ॥ और शनि चंद्रके दिन दक्षिणमें श्रेष्ठ है ॥ और बुधके दिन पश्चिममें श्रेष्ठ है ॥ और शुक्रके दिनमें उत्तरमें श्रेष्ठ है ॥

## अब अडल विडलको कहतेहैं ।

भा०-सूर्य नक्षत्रसे दिननक्षत्रतक गिणके सात ७ का भाग देणेसे शेष २ । दोय वा ७ सात रहै तो अडल योग होय ॥ और ३ तीन वा ६ छ रहै तो विडलयोग होय ॥ इन्हों दोनू योगोंमें यात्रामें नही जाणो ॥ ५ ॥

**आज्यंदुग्धगुडौतिलान्दधियवान्माषानिनात्प्राश्यनोशूलेयान-मनिष्टमिंद्रककुभोथाज्यंतिलान्नंतिमीन् ॥ दुग्धंप्राश्यचहस्त्य नोहयनरैर्यानंसुयानंतयोर्ध्यानाद्वाभवति ध्रुवेथहरिजंतिथ्यादि लक्षाधिकम् ॥ ६ ॥**

अथवारशूलदोहदमाह । सुगमम् । इनात्सूर्यवारात्सकाशात् आज्यादीनिप्राश्य अशयित्वाशूलेवारशूलेयानंप्रयाणमनर्थकृन्नोभवति । अथदिग्दोहदमाह । आज्यमिति । घृतादिकंप्राश्यऐंद्र्यादिषुपूर्वादिषुहस्त्यादिभिर्यानंसुयानंभवति । हस्तीप्रसिद्धः अनः शकटः हयोअश्वःनरः शिविकावाहकः । एतदुक्तंभवति घृतंप्राश्यहस्तिनाप्रागगमना-त्सिद्धिः तिलान्नंतिलौदनंप्राश्यरथेनदक्षिणगमनात्सिद्धिः मत्स्यान्प्राश्यअश्वेनपश्चिम-गमनात्सिद्धिः दुग्धंप्राश्यनरैरुदग्गमनात्सिद्धिः स्यादित्यर्थः । असतिसंभवेअभक्ष्येच निर्णयमाह । तयोर्भक्षवाहनयोर्ध्यानाद्वायानंसुयानंभवति । अथलग्नशुद्धिंसहेतुकांमाह । ध्रुवेऽथहरिजमिति । अथहरिजंलग्नंध्रुवेवच्मि । कथंभूतं तिथ्यादिलक्षाधिकंतिथ्यादि-भ्योलक्षाधिकंबलिष्ठमित्यर्थः ॥ ६ ॥

## सूर्यादि वारोंमें क्रमसे घृतादिको भोजन करके जाय तो वारशूलका दोष नहीं होय ॥

भा०-जैसे सूर्यके दिन घृतको ॥ १ ॥
भा०-चंद्रके दिन दुग्धको ॥ २ ॥
भा०-भौमके दिन गुडको ॥ ३ ॥
भा०-बुधके दिन तिलको ॥ ४ ॥
भा०-गुरुके दिन दहीको ॥ ५ ॥
भा०-शुक्रके दिन यवको ॥ ६ ॥
भा०-और शनिके दिन उडदको खाके यात्रामें जाय तो दोष नहीं होय ॥

## अब दिग्दोहदको कहते हैं ।

भा०-घृत भक्षण करके हाथीकी सवारीसे पूर्वदिशामें जाणा शुभ है ॥ और तिलौदन-को खाके याने तिल चावलोंके पाकको भोजन करके रथसे दक्षिणमें जाणो शुभ है ॥ और मत्स्यको भक्षण करके अश्वसे पश्चिममें जाणो शुभ है ॥ और दुग्धपानकरके नरवाहनसे उत्त-रमें जाणो शुभ है ॥ यदि यह वाहन और खानेकी वस्तु नहीं होय तो ध्यान करलेणो ।

अब लग्नको कहतेहैं ।

भा०-तिथ्यादिसे लक्ष गुण लग्न बलवान है ॥ ६ ॥

**स्वर्क्षानर्द्धिघटास्तभानृजुगृहान्षष्ठंरिपोर्भादनुस्वर्क्षांगेशरिपुंखलं जनिबलत्यक्तंतथासांप्रतम् ॥ यात्रालग्नगतंत्यजेदथदिशामीशो-र्केशुक्रौकुजोराहुर्मंदशशांकसौम्यगुरवःकेंद्रेदिगीशेव्रजेत् ॥ ७ ॥**

स्वर्क्षंस्वर्क्षानर्द्धिघटादिकंयात्रालग्नगतंत्यजेत् स्वर्क्षंस्वराशिः अनर्द्धिःस्वराशेरनुपचय-भवनं घटःकुंभः अस्तभमस्तगतग्रहस्यराशिः अनृजुगृहंवक्रग्रहस्यराशिः एतान् रिपो-र्भात्वैरिराशेःषष्ठम् अनुपृष्ठोदयम् । तथाचबृहज्जातके "गोजाश्विकर्किमिथुनाःसमृगा निशाख्याः पृष्ठोदयाविमिथुनाःकथितास्तएव" इति ॥ वृषमेषधनकर्कमकराःपृष्ठो-दयाः । स्वर्क्षांगेशरिपुमृक्षंच अंगमृक्षांगेतयोरीशःस्वामीतस्यारिपुः तं खलःप्रसिद्धः जनिबलत्यक्तंजन्मनिबलहीनंग्रहं तथासांप्रतंप्रस्तुतंबलत्यक्तमित्युक्तंसर्वंयात्रालग्नगतं त्यजेत् । अथदिक्पतीनाह । दिशामिति । दिशांपूर्वादीनामीशाः स्वामिनःअर्कशुक्रादयः पाठक्रमात्स्युः । केंद्रेदिगीशे १, ४, ७, १० सतिव्रजेद्गच्छेत् । यस्मिन्केंद्रेललाटगत्वं भवति । तत्केन्द्रं वर्जयित्वा अन्यकेंद्रेदिगीशेसतिव्रजेत् । इदमग्रिमश्लोकेवक्ष्यति ॥७॥

भा०-स्वराशि-अनुपचयस्थान-कुंभ-अस्तग्रहकी राशि-वक्रकी राशि-वैरीराशिसे छठी राशि ॥ पृष्ठोदय २ । १ । ९ । १० । ४ स्वराशि लग्न स्वामीका शत्रु-पापग्रह-और जन्मपत्रीमें बलहीन होय सो ग्रह-और यात्रा समयमें बलहीन ग्रह और पूर्वोक्त सारा यात्रालग्नमें त्याज्य है ॥ सूर्य शुक्र भौम राहु शनि चंद्र बुध गुरु ये ग्रह क्रमसे पूर्वादि दिशाओंके स्वामी हैं ॥ और दिशाका स्वामी ललाटग केंद्रविना केंद्रमें होय तो यात्रामें शुभ है ॥ ७ ॥

**दिक्पेनप्रवसेल्ललाटगइनःप्राच्यांतनौभालगःस्यात्पश्चान्मदनेर्कजोंबुगबुधःसौम्यांखगोपाक्कुजः ॥ ऐश्यांद्वित्रिगतोगुरुर्ज्वलनदिश्यायव्ययस्थोभृगुर्वायौषट्सुतगोविधुर्निर्ऋतिदिश्यष्टांकसंस्थं तमः ॥ ८ ॥**

अथदिक्पतौललाटगत्वंतद्दिग्गमननिषेधंललाटक्षणंचाह । दिक्पेललाटगेसतिन प्रवसेत् प्रवासंनकुर्यात् । तनौलग्नेवर्तमानइनःसूर्यः प्राक्प्राच्यांदिशिभालगःललाटस्थितः स्यात् । मदनेसप्तमेवर्तमानोर्कजःशनिः पश्चिमायांललाटस्थितःस्यात् । अंबुगबुधः चतुर्थगतोबुधः सौम्यामुत्तरस्यांललाटस्थितःस्यात् । खंदशमंतद्गतःकुजोभौमः अपाक्दक्षिणस्यांललाटस्थितःस्यात् । द्वित्रिगतोगुरुःऐश्यामीशान्यांललाटस्थितः स्यात् । आयव्ययस्थःभृगुःकविःज्वलनदिशिआग्नेय्यांललाटगःस्यात् । षट्सुतगोविधुश्चंद्रःवायौवायव्यांललाटस्थितःस्यात् । अष्टांकसंस्थंतमः अष्टमनवमस्थानस्थोराहुः निर्ऋतिदिशिललाटसंस्थःस्यादिति ॥ ८ ॥

भा०-जो दिशा पति ललाटमें होयतो यात्रामें नहीं जाणा ॥

## अब ललाटको कहतेहैं ।

भा०-सूर्य लग्नमे होय तो पूर्वमें ललाटस्थित होय ॥ और शनि सातमें होय तो पश्चिम दिशामें ललाट स्थित होय ॥ और बुध चौथे होयतो उत्तर दिशामें ललाट स्थित होय ॥ और मंगल दशमें होय तो दक्षिण दिशामें ललाट स्थित होय ॥ गुरु दूजे वा तीजे होयतो ईशानमें ललाट स्थित होय ॥ और शुक्र ११ ग्यारमें वा १२ बारमें होवे तो अग्नि दिशामें ललाट स्थित होय ॥ और चंद्र ६ । ५ छटे वा पांचमें होय तो वायुमें ललाटस्थित होय ॥ और राहु ८ आठमें वा ९ नवमें होय तो नैर्ऋतमें ललाट स्थित होय ॥ ८ ॥

वक्रीकेंद्रगतस्तदीयदिवसोलग्नेऽस्यवर्गोभवेद्यातुर्नाशकरःशुभोपितनुगोजन्मर्क्षलग्नेड्रिपुः ॥ द्वीशाग्न्यंब्वजभाग्यभानिगुरुभंपौष्णांतकेसार्पभंजन्मर्क्षाणिरवेरुपप्लुवहतंखेटस्तनौहानिकृत् ॥९॥

वक्रीति । वक्रीग्रहःकेंद्रगतःसन् यातुर्गमनकर्तुर्नाशकरः स्यात् । तदीयदिवसोपिवक्रग्रहस्यदिवसोपियातुर्नाशकरः स्यात् । लग्नस्यवर्गोपिनाशकरःस्यात् । जन्मर्क्षलग्नेड्रिपुः शुभोपितनुगोयातुर्नाशकरः स्यात् । जन्मराशिजन्मलग्नेतयोःईशौतयोःरिपुः । अथसूर्यादीनांजन्मनक्षत्रमाह । द्वीशेति । रवेःअर्कतःग्रहाणांद्वीशादीनिजन्मर्क्षाणिजन्मनक्षत्राणिस्युः । द्वीशंविशाखासूर्यस्य अग्निःकृत्तिकाचंद्रस्य अंबुपूर्वाषाढाभौमस्य अजः श्रवणोबुधस्य भाग्यभंपूर्वाफाल्गुनीगुरोः गुरुःपुष्यःशुक्रस्य पौष्णं रेवतीशनेःयाम्यंभरणीराहोः सार्पमाश्लेषाकेतोः । उपप्लुव इति उपप्लुवगतोनाम यदीयभंयस्यग्रहस्यभं जन्मनक्षत्रंहतंत्रिविधोत्पातहतंस्यात् । असौग्रहोलग्नेस्थितोहानिकृत्स्यात् ॥ ९ ॥

भा०-वक्री ग्रह जो केंद्र १ । ४ । ७ । १० में होय तो यात्रा करणेवालेकी मृत्यु होय । और यात्रामें वक्र ग्रहका दिन भी अशुभ है ॥ और जन्मराशिका और जन्मलग्नके स्वामीका शत्रु शुभ ग्रह होयतो भी लग्नमें अशुभ है ॥ और यह क्रमसे सूर्यादिकोंके जन्म नक्षत्र हैं सो दिखाते हैं ॥ सूर्यका जन्मनक्षत्र विशाखा है । चंद्रका कृ० । भौमका पू० षा० । बुधका श्र० । गुरुका पूर्वाभा० । शुक्रका पुष्य । शनिका रे० । राहुका भ० । केतुका आश्लेषा है ॥ जिस ग्रहका जन्म नक्षत्र उत्पातहत होय वह ग्रह लग्नमें होय तो अशुभ है ॥ ९ ॥

वेशिः सौम्ययुतस्तनौजनुषियेसद्भिर्युताराशयोजन्माब्जोपचयस्थिताअपितनोःस्वर्क्षोच्चमित्रर्क्षगाः ॥ पापाअप्यतिशोभनास्तनुगताजन्मेश्वरौकेंद्रगौस्वारात्यह्नितनौशुभोनफलदोमित्राह्निपापोर्थदः ॥ १० ॥

वेशिरिति । सूर्याद्वितीयोराशिर्वेशिः ससौम्ययुतःसन् अंगगोलग्नगोऽतिशोभनःस्यात् । जनुषिजन्मकालेसद्भिर्ग्रहैर्युतायेराशयःतनुगताःअतिशोभनाःस्युः । जन्माब्जोपचयस्थिताः जन्माब्जोजन्मचंद्रः तस्मादुपचयानित्रिषडेकादशतमानितेषुस्थिताग्रहास्तेतनुगताअतिशोभनाः तनोरपिजन्मलग्नादप्युपचयस्थलग्नगताअतिशोभनाःस्युः । स्वर्क्षोच्चमित्रर्क्षगाः जन्मनियेस्वर्क्षगाः उच्चगाः मित्रर्क्षगास्तेअपिशोभनाःस्युः । जन्मेश्वरौजन्मराशिजन्मलग्नस्वामिनौकेंद्रगौअतिशोभनौस्याताम् । स्वारात्यद्विस्ववैरिवारे शुभःशुभग्रहः तनौलग्नेवर्तमानोनफलदोभवति । मित्राह्निपापःतनौवर्तमानोऽर्थदःस्यात् । तथाचयवनः "रक्षकावर्द्धकाश्चैवयेस्युर्जन्मनिनायकाः । तान्पापानपिनिःशंकोयात्रालग्नेनियोजयेत् ॥" इत्यादि ॥ १० ॥

### जन्मपत्रिकामें जहां सूर्य होय उससे द्वितीय राशिकी वेशिसंज्ञा है ।

भा०-वह राशि सौम्यग्रह युक्त यात्रालग्नमें होयतो शुभ होय॥ जन्मसमयमें सौम्य ग्रहसे युक्त राशियाँ यात्रालग्नमें होंयतो शुभ होय ॥ जन्म चंद्रसे ३ । ६ । ११ । १० इन्हीं स्थानोंमें स्थित ग्रह यात्रालग्नमें होवेतो शुभ होय ॥ और जन्मसमयमें स्वर्क्षग उच्चग मित्रर्क्षग जो पापग्रह होयके यात्रालग्नमें होवेतो शुभ होय ॥ जन्मराशि और जन्मलग्नस्वामी १ । ४ । ७ । १० । इन्हीं स्थानोंमें होवे तो शुभ होय ॥ और जो शुभ ग्रह लग्नमें होवै और अपने रिपुग्रहका वार होयतो अनिष्ट होय ॥ और पापग्रह लग्नमें होवै और मित्रग्रहका दिन होयतो अर्थद होय ॥ १० ॥

**त्र्यायार्यन्यगताःखलाः खइनजोब्जोंत्याद्यषष्ठाष्टगोभूयःसोपचितोस्तखांबुसुतगःशुक्रोस्तईज्योमृतौ ॥नष्टज्ञोव्ययगोग्रहान्वितशशीयातुर्महाविघ्नदाअन्यस्थानगताजयार्थसुखदास्त्याज्यंपुरोक्तंनचेत् ॥ ११ ॥**

अथयात्रालग्नेइष्टानिष्टांश्चश्लोकेनैकेनाह । त्र्यायार्यन्यगताःखलाः त्र्या३या ११ रिभ्यः ६ अन्यानि १, २, ४, ५, ७, ८, ९, १०, १२ तत्रगताःखलाःपापग्रहाःखेदशमे इनजःशनिः । त्र्यायार्यन्यगताःखलाइत्यनेनैवसिद्धोपिविशेषदुष्टफलज्ञापनार्थखइनजइत्युक्तम् । अंत्या१२द्य १ षष्ठा ६ ष्ट ८ गोब्जश्चंद्रः भूयःपुनःसचंद्रःअपचितःक्षीणचंद्रः कृष्णपक्षचंद्रः अस्तः ७ खां १० बु ४ सुत ५ गःअस्तः७शुक्रःईज्योगुरुर्मृतौ ८ नष्टज्ञोस्तमितबुधोव्यय१२ गतःग्रहान्वितःशशीयेनकेनापिग्रहेणग्रहाभ्यामपिग्रहैर्वायुक्तश्चंद्रमाः एतेप्रत्येकंयातुर्महाविघ्नदाःस्युः । नानाप्रकारेणमरणभंगादीन्ददतीत्यर्थः । अन्यस्थानगताःउक्तेभ्योऽन्यस्थानगताःसंतस्तदाजयार्थसुखदाः । तदाकदा चेयदिपुरोक्तंत्याज्यंनस्यात ॥ ११ ॥

भा०-और १ । २ । ४ । ५ । ७ । ८ । ९ । १० । १२ इन्हीं स्थानोंमें पापग्रह होवैं ॥ और १० दशम स्थानमें शनि होवै ॥ और १२ । १ । ६ । ८ में चंद्रमा होय ॥ और क्षीणचंद्रमा ७ । १० । ४ । ५ इन्हीं स्थानोंमें होवै ॥ और शुक्र ७ सातमें होय ॥ और गुरु ८ आठमें होय ॥ और अस्त बुध १२ बारहमें होय ॥ और चंद्रमा कोई ग्रहसे युक्त होयतो यात्रा कर्ताके यह प्रत्येक महाविघ्न करैं ॥ और प्रथम कहे त्याज्य नहीं होवेतो यह ग्रह उक्तसे अन्य स्थानोंमें शुभ होते हैं ॥ ११ ॥

**स्वग्रामैकपुरात्मसद्मसुचतुर्वक्रे चतुःशालकेतूद्वाहेषु वधूप्रवेशनृपभीदुर्भिक्षपीडासु च ॥ तीर्थस्वामिनि देशयोर्भृगुवसिष्ठात्र्यंगिरःकाश्यपे भारद्वाजजवात्स्ययोर्हितकरं यानं सितज्ञोन्मुखम् ॥ १२ ॥**

अथप्रतिबुधशुक्रापवादमाह । स्वग्रामेति । स्वग्रामः प्रसिद्धः एकपुरंप्रसिद्धम् आत्मसद्मआत्मगृहं चतुर्वक्त्रे चतुर्मुखे चतुःशालकंप्रसिद्धं उद्वाहाः विवाहाः ब्राह्मादयःविवाहाः तेषुवधूप्रवेशः नृपभीराजभयं दुर्भिक्षपीडाः प्रसिद्धाः तासु तीर्थस्वामिनिदेशयोः तीर्थेतीर्थगमनं स्वामिनिदेशः स्वाम्याज्ञा तयोः भृगुवसिष्ठात्र्यंगिरःकाश्यपेभृग्वादिगोत्रसमूहे भारद्वाजजवात्स्ययोर्गोत्रयोः एषूक्तेषुसितज्ञोन्मुखं शुक्रबुधसंमुखंयानंगमनंहितंस्यात् । अत्रवधूप्रवेशेप्रतिशुक्रदोषोनोक्तः तच्चभर्त्रासहगमनविषयं भर्त्राविनागमने दोषोदृश्यते नवोढायास्तुवंध्यात्वमिति । तथाचभीपराक्रमे "स्वामिनानीयमानायांप्रतिशुक्रोनविद्यते" इति ॥ तथाचमतान्तरे "नवोढायास्तुवंध्यात्वंयदुक्तंसंमुखेभृगौ । तदत्रविबुधैर्ज्ञेयंकेवलंतुद्विरागमे ॥" इति । तथाचलल्लः "स्वभवनपुरप्रवेशेदेशानांविग्रहेतथोद्वाहे । नववध्वागृहगमनेप्रतिशुक्रविचारणानास्ति ॥ इति । तथाचमत्स्यपुराणे 'चतुःशालचतुर्द्वारमलिंदैःसर्वतोयुतम् । नाम्नातत्सर्वतोभद्रंनतत्रप्रतिशुक्रता ।' इति ॥ तथाचवसिष्ठः "काश्यपेषुवसिष्ठेषुभृग्वत्र्यांगिरसेषुच । भारद्वाजेषुवात्स्येषुप्रतिशुक्रोनविद्यते ॥" इति ॥ १२ ॥

भा०-भृगु वशिष्ठ अत्रि अंगिरा काश्यप भारद्वाज वत्सगोत्रवाले पुरुषोंके और अपने ग्रामप्रवेशमें-और एकपुरमें-स्वगृहमें-चतुर्मुखमें-विवाहमें-भर्ताके साथ वधूप्रवेशमें-राजभयमें-दुर्भिक्षमें-तीर्थयात्रामें-स्वामीकी आज्ञामें बुधशुक्रके संमुख यात्रामें जानेका दोष नहीं है ॥ १२ ॥

**चंद्रेपूषभमेषगे सति सितोंधः स्यात्तदा संमुखं यानं सत्परपूर्वयोः सितविपर्यासात्सदावश्यके ॥ राजातर्पितवह्निभूसुरसुहृत्स्नेहानुवृत्तिं त्यजंस्तत्तः कार्यमनाव्रजेत्रिदिवसैरेकाब्धिषट्क्रोशकान् ॥ १३ ॥**

अथान्यंचापवादमाह । चंद्रेइति । चंद्रेपूषभमेषगेसतिसितःशुक्रःअंधःस्यात् । तदा संमुखंयानंसत् शुभंस्यात् । तथाचगर्गः "पौष्णादिवह्निभाद्यंघ्रौयावत्तिष्ठतिचंद्रमाः । तावदंधोभवेच्छुक्रःप्रवेशेनिर्गमेशुभः ॥" इति ॥ अथआवश्यकेप्रवृत्तिमाह । परपूर्वयोरिति

परपूर्वयोःपश्चिमपूर्वयोः सितविपर्यासात्शुक्रविपर्यासात् आवश्यकेकृत्येसति यानंस्यात् । एतदुक्तंभवति । शुक्रेपूर्वकपालगतेसतिपश्चिमांगच्छेत् पश्चिमकपालंगतेसति पूर्वांगच्छेत् । तथाचज्योतिष्प्रकाशे "अत्युत्सुकेषुयावत्प्राक्पालस्थोभृगुर्भवेत् । तावत्पाशिदिशंगच्छेत्प्राचींप्रत्यक्स्थितस्तथा ॥" इति । अथप्रयाणविधिमाह । राजेति । राजात्रिदिवसैरेकाब्धिषट्कोशकान्व्रजेत् । एतदुक्तंभवति । प्रथमदिनेकोशंगच्छेत् द्वितीयदिनेचतुष्कोशान् तृतीयेषट्कोशान् अर्थात्परतोयथेच्छंगच्छेत् । कथंभूतोराजा तर्पितवह्निभूसुरसुहृत् वह्निरग्निः भूसुराब्राह्मणाः सुहृदोबांधवाः तेतर्पिताः वह्निभूसुरसुहृदोयेनसतथा । अत्रायंभावः समिच्चरुतिलादिनावह्निंतर्पयित्वा दक्षिणान्नादिभिर्भूसुरांस्तर्पयित्वा वस्त्रालंकरणादिभिःसुहृदः कलत्रादींस्तर्पयित्वाव्रजेदिति । किंकुर्वन् स्नेहानुवृत्तिंत्यजन्सन् स्नेहेनअनुवृत्तिः पुनर्गृहागमनम्। अयंभावः यात्रार्थंबहिर्गत्वापुत्रादिस्नेहवशात्तदवलोकनार्थंगृहंनागच्छेदिति । कथंभूतोराजा तृप्तःबुभुक्षितोनगच्छेदितिभावः। पुनः किंलक्षणः कार्यमनाः कार्यायउत्कंठितांतःकरणः । तथाचरत्नावल्याम् "स्वनिकेतात्सुरभवनात्प्रधानादाश्रमाद्गुरुगृहाद्वापि । यायात्कृताग्निकार्यःप्राश्यहविष्यंद्विजानुमतम्" इति । तथाचबृहस्पतिः "दैवज्ञंपूजयित्वातुविदुषंःपूज्यशक्तितः । प्रदक्षिणमिमान्कृत्वातिष्ठन्ध्यायेदुमापतिम् ॥" इति । तथाचज्योतिष्प्रकाशे "संतोष्यस्वांगनांविप्रांश्चह्यात्प्रतिरथादिकम् । शुचिःशुक्लांबरोष्णीषोनत्वेष्टंसुमनाव्रजेत् ॥" इति । तथाचकश्यपः "यात्रासमयेवृद्धानुपरागेग्रहस्यवैषम्ये । गोभूहिरण्यवस्त्रैःसंपूज्यश्रद्धयाचदैवज्ञम्" ॥ इति । बृहद्यात्रायाम् "स्नातोभुक्तोनुलिप्तश्चसर्वालंकारभूषितः । शुक्लांबरधरःश्रीमानध्वगःसुखमेधते" इति । भूपालवल्लभे "ब्राह्मणान्नावमन्येतकोपयेन्ननिजांगनाम् । यात्रांकृत्वागृहंनैवसिद्धिकामोविशेद्गृहम्" इति । लल्लः "यात्रायांप्रस्थितोयश्चब्राह्मणानवमन्यते ॥ तदंतंजीवितंतस्यनासौप्रतिनिवर्तते" इति । बृहद्यात्रायाम् "यस्तुसंप्रस्थितोयात्रांस्वभार्यांनाभिनंदति । भार्यावानाभिनंदेतनास्यप्रतिनिवर्तनम्" इति । तथाचरत्नावल्याम् "क्रोशंवायदिवाप्यर्धं प्रथमेहनिशस्यते । द्वितीयेयोजनंगत्वानिवसेच्चमहीपतिः ॥ तृतीयेयोजनंसार्द्धंवसेदाक्रम्यदूरतः । ततः परंयथेष्टंतुयायान्मार्गं महीश्वरः" इति ॥ १३ ॥

भा०-चंद्रमा रेवती नक्षत्रका होय वा मेषका होय तब शुक्र अंधा होता है तब शुक्रके संमुख जाणेका दोष नहीं है ॥ और शुक्र पूर्व कपालमें होयतो पश्चिममें जाना और शुक्र पश्चिम कपालमें होयतो पूर्वमें जाना शुभ है ॥ यह विधि आवश्यकमें है ॥ राजा भोजनसे तृप्त होके और अपने कार्यको मनमें विचारके और अग्निमें हवन करके ब्राह्मणोंको भोजन करवाके और ब्राह्मणोंको दक्षिणा देके-और स्त्रीपुत्रोंको वस्त्र अलंकारोंसे तृप्त करके पहिले दिन एक कोश चले-और दूसरे दिन ४ चार कोश चले-और तीसरे दिन ६ छ कोश चले-फेर अपनी इच्छापूर्वक चले ॥ और यात्राके लिये निकलके पीछे पुत्रादिकोंके स्नेहसे न आवे ॥१३॥

क्रोधक्षौररतिश्रमामिषगुडद्यूताश्रुदुग्धासवक्षाराभ्यंगभयासितांबरवमीस्तैलंकटूज्झेद्गमे ॥ क्षीरक्षौररतीः क्रमात्त्रिशरसप्ताहंपरंतद्दिनेरोगंरुग्यार्तवकंसितान्यतिलकंप्रस्थानकेपीतिच ॥ १४ ॥

अथयातृकस्यानियमानाह। क्रोधःप्रसिद्धः क्षौरंप्रसिद्धं रतिर्मैथुनं श्रमःक्लेशः आमिषंमांसं गुडःप्रसिद्धः द्यूतंद्यूतवरणम् अश्रु अश्रुमोचनं दुग्धंप्रसिद्धम् आसवोमद्यं क्षारं क्षारधान्यंमाषादि अभ्यंगस्तैलाभ्यंगः भयंशंका रिपुभयमित्यर्थः । असितांबराणि अशुभ्रवस्त्राणि रक्तकृष्णादीनि वमिर्वमनं तैलंप्रसिद्धं कटुमरिचादि इत्येतद्गमे गमने उज्झेत् त्यजेत् । अथउक्तेषुकिंकिंकतिदिनंत्यजेदित्याह । क्षीरेति । क्षीरक्षौररतीः क्रमात् त्रि ३ शर ५ सप्ताहं ७ त्यजेत् क्षीरंदुग्धंत्र्यहं ३ क्षौरंशराहंपंचाहं ५ रतिं सप्ताहंत्यजेदित्यर्थः । परमुर्वरितंतद्दिनेप्रयाणदिनेत्यजेत् रोगंव्याधिंयावद्बाधंत्यजेत् रुग्यार्तवंबीजदानपर्यंतंत्यजेत् सितान्यतिलकं श्वेतव्यतिरिक्ततिलकं पीतकौंकुमादिकंतद्दिनेत्यजेत् प्रस्थानकेपिइत्येतत् त्यजेत् प्रस्थानकंनाममुहूर्तसमयेकिंचिदभीष्टवस्तुचालनम् । तदुक्तंरत्नमालायाम् "छत्रायुधाद्यंमनसस्त्वभीष्टंप्रचालयेद्वैजयिकंजयार्थी" इति । एतत्तुकार्यवशात्क्रियते प्रस्थानेसंपूर्णफलंनास्ति । तथाचरत्नकोशे "कार्यवशात्स्वयमगमेभूभर्तुः केचिदाचार्याः । छत्रायुधाद्यभीष्टंवैजयिकंनिर्गमेकुर्युः" इति । तथाचगर्गः "स्वशरीरेणयःकश्चिन्निर्गच्छेच्छ्रद्धयान्वितः । तस्ययात्राफलंसर्वंसंपूर्णंपथिसिद्ध्यति" इति । तच्चालनावधिर्ग्रंथांतरात् "गृहाद्गृहांतरंगर्गआहसीमांतरंभृगुः । शरक्षेपाद्भरद्वाजोवसिष्ठोनगराद्बहिः" इति । एवंप्रस्थानेकृतेपिस्वयमन्यस्मिन्सुदिने गच्छेत् । तथाचज्योतिष्प्रकाशे "प्रस्थानेपिकृतेनेयान्महादोषान्वितेदिने ॥ गर्भयोगं विनाकालवृष्ट्यादौचाप्लुते तथा" इति । रत्नमालायाम् "वसेन्नचैकत्रदशक्षितीशो दिनानिनोसप्तचमांडलीकः ॥ यः प्राकृतःसोपिचपंचरात्रंभद्रेणयात्रापरतः प्रयोज्या" इति । एवंविधेप्रस्थानेपिक्रोधक्षौररत्यादीन्वर्जयेदित्यर्थः । गर्गः "क्रोधंक्षौरंतथावांतिंतैलाभ्यंगाश्रुमोक्षणम् ॥ द्यूतंमांसंगुडंतैलंयानंमद्यंपरित्यजेत्" इति । रत्नकोशे "कालीयकंहिंगुलकः कुंकुमंरक्तचंदनम् ॥ पीतंरक्तंचवसनंयातुर्नेष्टानितत्क्षणात्" इति बृहद्यात्रायाम् "कटुतैलगुडक्षौरपक्वमांसाशनंतथा ॥ भुक्त्वायोयातिमोहेनव्याधितः सनिवर्तते" इति । लल्लः "प्रमत्तो व्याधितोभीतःश्रांतः क्रुद्धोबुभुक्षितः ॥ अध्वानंनप्रपद्येतक्लीबवेषस्तथैवच" ॥ रत्नावल्याम् "स्वकीयांपरकीयांवास्त्रियंपुरुषमेववा ॥ ताडयित्वातुयोगच्छेत्तदंतंतस्यजीवितम्" इति । भृगुः "त्रिरात्रंवर्जयेत्क्षीरंपंचाहंक्षुरकर्मच ॥ तदहश्चावशेपाणिसप्ताहंमैथुनंत्यजेत्" इति । यात्रायागमनलक्षणंगर्गोक्तंज्ञेयम् "मुहूर्तसमयेप्राप्तेहंसचारांघ्रिणाव्रजेत् । दैवज्ञामात्यविप्राद्यपुरोगैःस्वजनैर्वृतः ॥ पूर्वंदक्षिणमुद्धृत्यपादंयात्रांनराधिपः ॥ द्वात्रिंशतंपदंगत्वायानमारुह्यसंव्रजेत् ॥ ततोनिरीक्षयेत्सम्यक्शकुनांश्चशुभाशुभान् ॥ तथैवसदसच्छब्दान्निमित्तानिचसंव्रजेत्" इति ॥ १४ ॥

भा०-और यात्रा करे तब क्रोध नहीं करणा और क्षौर-मैथुन-क्लेश-मांस-गुड-जूआ अश्रुपात-दुग्ध-मद्य-धान्य-उडद आदिक-तैलाभ्यंग-भय-शंका-कृष्णवस्त्र-वमन-तैल-मरिच आदिक इन्होंका यात्रामें त्याग करणा ॥ और यात्रा करनेके पूर्व तीन दिन दुग्धपान नहीं करणा ॥ और सात दिन पूर्व स्त्रीसंग नहीं करणा ॥ और अन्य कामोंको उसी प्रयाण दिनमें नहीं करणा ॥ और रोग जहांतक होय तहांतक प्रयाण नहीं करणा ॥ और बीजदान पर्यंत स्त्रीके आर्तवमें प्रयाण नहीं करणा ॥ और श्वेतविना रक्त पीतादि तिलक उसी दिन नहीं करणा ॥ और मुहूर्त समयमें अपने प्रिय वस्तुको भेजे वह प्रस्थान होताहै । उस प्रस्थानमेंभी पूर्वोक्तका त्याग करणा ॥ १४ ॥

**वस्त्रालंकरणातिपूर्णकलशस्तौर्यध्वनिः पुत्रवाञ्छंखादर्शनृपाश्वदं-तिसुरभिस्त्रीपुष्पधान्यादि च ॥ दोलादीपविधूमवह्निसुरभिद्रव्या-णिशुभ्रोवृषोवेश्याच्छत्रवितानचामरकुमार्योमीनगोरोचने ॥ १५ ॥**

इदानींशकुनानाह । वस्त्रेति । वस्त्राणिश्वेतवस्त्राणि अन्यान्यपशकुनमध्येपठितानि अलंकरणानि सुवर्णादिनिर्मितानि भूषणानीत्यर्थः । पूर्णकलशः प्रसिद्धः तौर्यध्वनिः वाद्यध्वनिः पुत्रवान्वर्द्धमानःपुरुषः शंखः प्रसिद्ध आदर्शोमुकुरः नृपोराजा अश्वःप्रसिद्धः दंती हस्ती सुरभिर्गौः स्त्रीसौभाग्यवती पुष्पाणिश्वेतानि धान्यानि अकृष्णानि कृष्णानित्वपशकुनमध्येपठितानि आदिशब्देनसुवर्णादिधातवः दोलाप्रसिद्धः दीपःप्र. विधूमवह्निः धूमरहितोग्निः सुरभिद्रव्याणि सुगंधद्रव्याणि कर्पूरचंदनादीनि शुभ्रोवृषः श्वेतवृषभः वेश्याप्रसिद्धा छत्रंप्र० वितानंवस्त्रनिर्मितंप्र० चामरंप्र० कुमारीप्र० मीनोमत्स्यः जलादुद्धृतः गोरोचनंप्रसिद्धम् ॥ १५ ॥

अब शकुनका वर्णन करतेहैं ।

भा०-सपेद वस्त्र । सुवर्णादि आभूषण । पूर्ण कलश । बाजेकी ध्वनि । पुत्रवान् पुरुष । शंख । काच । राजा । घोडा । हाथी । गौ । सौभाग्यवती स्त्री । श्वेतपुष्प । काला धान विना कोई धान । पालणा । दीप । विना धूंएकी अग्नि । सुगंध वस्तु । सपेद वृष । वेश्या । छत्र । वितान । चामर । कुंआरी कन्या । मत्स्य । गोरोचन ॥ १५ ॥

**यद्यत्स्वांतनितांततोषकरणंकोरुद्धृतंगोमयंमृच्चांभोर्थघटान्वितः सहचरोधौतांबरोमौत्रकः॥ दूर्वादर्भरथाःपलास्रमदिरावर्णीगुरुर्दैवविद्विप्रौमित्रमृगावरोदनशवंसिद्धार्थदुग्धादि च ॥ १६ ॥**

अथसंकोचेनाह । यद्यदिति । यद्यद्वस्तुस्वांतनितांततोषकरणं स्वांतमंतःकरणंतस्यनितांतमतिशयेनतोषकरणंसंतोषजनकंतत् किंबहुनोक्तेन एवंसंकोचेनोक्तेदानींयेषु संतोषाभावस्तानिपूर्वाचार्यैःशकुनमध्येपठितान्याह । कोरुद्धृतंगोमयं कोःपृथिव्या

उद्धृतंगोमयं मृच्चपृथिव्याः उद्धृतामृत्तिका अंभोर्थघटान्वितःसहचरः उदकार्थंकुंभयु-क्तोजनःसन्सहचरः सहचरतीतिसहचरः "जलार्थीरिक्तकुंभस्तुपथिकेनसहव्रजेत् ॥ निव-र्ततेयथापूर्णःकृतार्थःपथिकस्तथा" इत्युक्तत्वात्। धौतांबरोमौत्रकः धूतवस्त्ररजकः दूर्वाप्र-सिद्धा दर्भःप्रसिद्धः दूर्वादर्भौतृणेअपिशुभे अपशकुनमध्येयत्तृणंपठितंतदेतद्व्यतिरिक्तं रथःप्रसिद्धः पलंमांसम् अस्रंरक्तं मदिरामद्यं वर्णीब्रह्मचारी गुरुःप्रसिद्धः दैवविज्ज्यौतिषी विप्रौद्वौब्राह्मणौ मित्रमिष्टः मृगःप्र. अरोदनशवंरोदनरहितंप्रेतं सिद्धार्थागौरसर्षपाःदुग्धा-दिदुग्धदध्याज्यं ननुयद्यत्स्वांतनितांततोषकरणमित्यनेनदुग्धग्रहणत्वात्सिद्धं पुनः किमुक्तंदुग्धमिति।सत्यम्।दुग्धंभक्षणेनिषेधितंतत्संदेहनिवृत्त्यर्थंदुग्धपठनमित्यदोषःएव-मेवात्रविचारणीयम्।तथाचवसंतः "दध्याज्यदूर्वाक्षतपूर्णकुंभसिद्धान्नसिद्धार्थकचंदनानि॥ आदर्शशंखामिषमीनमद्यगोरोचनागोमयमुद्धृतंगोः" इति॥ भारद्वाजः "राजाविप्रौसुहृद्वे-श्यासपुत्रास्त्रीकुमारिका ॥ अभिरूपोनरोस्त्रीवागजोवाजीवृषःसितः॥ रज्ज्वाधृतान्यवर्णै-गौःसवत्साचविशेषतः॥ उद्धृतंगोमयंनीतंमृत्तिकाचोद्धृतातथा ॥ रजकोधौतवस्त्रश्चवेश्या तौर्यत्रिकध्वनिः ॥ जयमंगलशब्दश्चशांतिपाठःसदीपकः ॥ दीपोवाप्रज्वलद्वह्निःपूर्णकुं-भोनृपासनम् ॥ मद्यंमांसंचरुधिरंभक्ष्याणिविविधानिच॥ इक्षवोमधुतांबूलंवस्त्रालंकरणा-निच ॥ रौप्यंताम्रंमणिस्वर्णद्रव्यंदर्पणमक्षताः ॥ वितानंचामरंछत्रंदूर्वादर्भतृणध्वजाः॥ दोलाचारुरथोवृद्धःपुत्रपौत्रार्थयुक्शुचिः ॥ चंदनानिसुगंधीनितथापुष्पाणिरोचना॥घृतं दधिपयःप्रेयान्सिद्धमन्नंवचः शुभम्॥ दैवज्ञःसगुरुर्देवश्चित्तोत्साहकराणिच॥ दृष्ट्वैतानिनरो यायात्सर्वार्थंलभतेतुसः" इति ॥ १६ ॥

भा०-और अपनी प्रियवस्तु ॥ पृथ्वीके ऊपरका गोमय॥ पृथ्वीसे निकाली भई मट्टी । पथिकके साथ घडा लेके पाणिको जाता होय वो ॥ धोये वस्त्र लिये धोबी । दूर्वा । दर्भ । रथ । मांस । लोहू । मदिरा । ब्रह्मचारी । गुरु । ज्योतिषी । दोय ब्राह्मण । मित्र । मृग । रुदन-विनाका प्रेत । गौर सर्षप । दुग्ध । दही । घृत । यह और उक्त श्वेतवस्त्रादिकोंको प्रयाणकालमें देखणा शुभ होताहै ॥ १६ ॥

कुर्वन्दक्षिणतःसदेतदितरद्वामेप्रकुर्वन्व्रजेद्भस्मास्थीन्धनविट्तुषा-श्मलवणोपानत्तृणायस्कराः॥पिण्याकौषधकृष्णधान्यरुदनंतक्रं सधूमानलः कार्पासारुणपुष्पचर्मचगुडस्तैलायसीकर्दमः॥१७॥

अथाशुभान्याह।कुर्वन्निति। एतत् अनंतरोक्तंसत्शुभं दक्षिणतःदक्षिणभागेकुर्वन् सन् इतरत् अशुभंवक्ष्यमाणंवामेकुर्वन्सन्व्रजेत्गच्छेत् । भस्मेति। भस्मप्रसिद्धम् अस्थिप्र० इंधनंप्र० विट्विष्ठा तुषंधान्यादीनांत्वक्फल्गु अश्मापाषाणः लवणंसामुद्रिकं उपानहौप्र-सिद्धौ तृणंप्र० अयस्करोलोहकारः। पिण्याकंमर्दिततिलाः औषधंप्र० कृष्णधान्यं

माषादि रुदनंरोदनादि तक्रंप्र० सधूमानलः धूमसहितोऽग्निः कार्पासःप्र०अरुणपुष्पं जपादि चर्मप्र० गुडःप्र० तैलंप्र० अयोलोहं कर्दमःपंकः ॥ १७ ॥

अब अशुभ शकुनोंको कहतेहैं ।

भा०-शुभ शकुनोंको दक्षिणमें लेणा ॥ और अशुभोंको वाममें लेणा । भस्म । हड्डी । लकडी छाणा । विष्ठा । भूसा । पत्थर । लूण । जूता । घास । लोहार । खल । औषध । कृष्णधान्य । रोदन । छाछ । धूएंकी अग्नि । लाल पुष्प । चर्म । गुड । तैल । लोह । कर्दम ॥ १७ ॥

मत्तोवांतबुभुक्षितांतकखलामुंडीजटीव्याधितः खंजव्यंगदिगंबरायतिररिःकाषायिमुक्तालकौ ॥ चौराभ्यक्तमलाविलाश्चपतितःपाश्यर्गलीगुर्विणीवंध्याकृष्णवृषाहिभेकसरठागोधावराहःशशः ॥ १८ ॥

मत्तइति । मत्तःउन्मत्तः वांतःवमितः बुभुक्षितः प्रसिद्धिः अंतकःप्राणिहिंसकः खलोदुर्जनः मुंडीमुंडितः जटीजटिलः व्याधितोरोगी खंजः पादेनखंजः व्यंगोंऽगहीनः दिगंबरोनग्नः यतिःसंन्यासी अरिर्वैरी काषायीगैरिकरंजितवस्त्रः मुक्तालकोमुक्तकेशः चोरः प्र० अभ्यक्तःतैलाभ्यक्तः मलाविलोमलिनः पतितोजातिभ्रष्टः पाशीप्राणिबंधनार्थपाशवान् अर्गली अर्गलावान् गुर्विणीसगर्भा वंध्यानिरपत्या कृष्णवृषःकृष्णोनड्वान् अहिः सर्पः भेकोमंडूकः सरठःप्र० गोधाप्र०वराहःप्र०शशःप्रसिद्धः ॥ १८ ॥

भा०-उन्मत्त । उलटी । भूखा प्राणी । प्राणियोंको मारणेवाला । दुर्जन । मुण्डी । जटावाला । रोगी । खंज याने जिसके पैरमें रोग होय वह । अंगहीन । नग्न । संन्यासी । शत्रु । गेरूसे रंगे भये वस्त्र । खुले केशवाला । चौर । मालिश किया भया । मलिन । जातिसे भ्रष्ट । पाशवाला । अर्गलवाला । गर्भिणी । वंध्या स्त्री । काला बैल । सर्प । मेढक । ककाटिया । गोह । वराह । शश ॥ १८ ॥

जाहौतूमहिषःखरोष्ट्रमहिषारूढाश्वरिक्तोघटश्छिक्काप्राणिशिरोंगकंपपदवीबंधाःकुवागाहवौ ॥ पातोयानपलायनंश्वकलहःषंढंक्षुतंगोज्वलद्वेश्मेतिप्रतिबंधकाःकुशकुनाश्छिक्कादिकामृत्युदाः १९॥

जाहइति । जाहः मंडली लोकेसेहलीतिप्रसिद्धा "जाहकोगात्रसंकोचीमंडलीचतुर्थैः स्मृतः" इतिहलायुधः । ओतुर्मार्जारः महिषः प्रसिद्धःखरोष्ट्रमहिषारूढाःप्रसिद्धाःरिक्तोघटःप्र०छिक्काक्षुत् प्राणिशिरोंगकंपः प्राणिनांगोऽश्वादीनांप्राणिनांशिरोझाटनम् अंगझाटनंवा पदवीबंधोमार्गबंधः ऊर्णनाभादिभिर्मार्गोबध्यते कुवाक्कुत्सितवाक्यश्रवणम् आहवःसंग्रामः बिडालमहिषादीनां पातःपतनं वस्त्रादीनांस्खलनं यानमश्वादि तस्य पलायनं श्वकलहः शुनांकलहः षंढनपुंसकं गोक्षुतंप्रसिद्धं ज्वलद्वेश्मज्वलद्गृहदर्शनम् इत्येतेऽपशकुनाःप्रतिबंधकाःकार्यप्रतिबंधकाःस्युः छिक्कादिकाःअपशकुनामृत्युदाः

स्युः । तथोक्तमागमांतरे "तृणतैलादिकार्पासभस्मचर्मतुषौषधम् ॥ सामुद्रंगुडपंकाहि-मत्तवांतंबुभुक्षितम्" इत्यादि ॥ १९ ॥

भा०-सेला । बिल्ली । भैंसा । गधेकी सवारीवाला । ऊंटकी सवारीवाला । भैंसेकी सवारीवाला । खाली घडा । छींक । शिर वा शरीर कंपाता पशु । मार्ग बांधती मकडी वगैरे । दुष्ट शब्द । झगडा । बिल्ली महिषादिकोंका पात याने पलायन । कुत्तोंका युद्ध । नपुंसक । गायकी छींक । जलते हुए घरका दर्शन । यह अपशकुन हैं और छिक्कादिक अपशकुन मृत्युको देते हैं ॥ १९ ॥

**भृंगाल्युष्ट्रपठच्छुकाश्वनखिनःस्त्रीसंज्ञकावामतःकालीकुक्कुटपुंप्र-थाश्वसुरभिर्दक्षेमनोभीष्टदाः॥भारद्वाजशिखंडिचाषनकुलाहंसो-जएतेदृशंयाताइष्टफलाःस्युरासभरवोवामेपिपृष्ठेर्थदः ॥ २० ॥**

अथशकुनांतरमाह । भृंगोभ्रमरः अलिर्वृश्चिकः उष्ट्रःप्रसिद्धः पठच्छुकाःशब्दंकुर्वाणाराजशुकाः नखिनःश्वादयः स्त्रीसंज्ञकाः चटकादयः एतेवामतः मनोभीष्टदाः स्युः । कालीमहिषी कुक्कुटःप्रसिद्धः पुंप्रथाः पुरुषसंज्ञकाःकाकादयः सुरभिर्गौः एतेदक्षे मनोभीष्टदाःस्युः । भारद्वाजः शिखंडीमयूरः चाषःप्र० नकुलोबभ्रुः हंसःप्र० अजो बस्तः एतेभारद्वाजादयः दृशंयाताः संतः इष्टफलाःस्युः । अयमर्थः । भारद्वाजादयो वामेवादक्षिणेवाग्रेवादृष्टमात्राइष्टफलाः अभीष्टफलदाभवंतीत्यर्थः । रासभरवोगर्दभध्वनिर्वामेपृष्ठेप्यर्थदःअभीष्टार्थदोभवति ॥ २० ॥

भा०-और भ्रमर-बिच्छू-ऊंट-शब्द करताभया राजशुक-नखवाले कुत्ते आदिक-चिडियों इन्होंका वाम शकुन अच्छा होय ॥ और भैंस-कुक्कुट-पुरुषसंज्ञक काक आदिक गौ इन्होंका दक्षिण शकुन अच्छा होय ॥ और भारद्वाज-शिखंडी याने मोर चाष-नीलिया-हंस- बकरा इन्होंको यात्रासमयमें देखणा शुभ है ॥ और गधा पीठमें वा वाममें बोले तो शुभ होय ॥ २० ॥

**नद्युत्तारभयप्रवेशसमरद्यूतेषुनष्टेक्षणेव्याधौस्युःशुभदाविलोमश-कुनानाडचाइडायाभरे ॥ आद्येदुःशकुनेनिवृत्यचशुचिर्भूत्वाष्ट-धास्वायमंकुत्त्वेयादपरेष्टिवारमपरेदत्त्वासुवर्णंव्रजेत् ॥ २१ ॥ इतियात्राप्रकरणम् ॥**

अथयेषुयेषुकृत्येषुविपरीतशकुनाःशुभाश्चतानाह । नद्युत्तारइति । नद्युत्तारोनद्युत-रणं भयंनृपादीनां प्रवेशोग्रामादिप्रवेशः समरः संग्रामःद्यूतंप्र०नष्टेक्षणंनष्टवस्तुनोऽवलो-कनम्व्याधौरोगोपचारे एषुविलोमशकुनाविपरीतशकुनाःशुभदाःस्युः । अयमर्थःगमने

येऽपशकुनास्तेनद्युत्तारादिषुशुभदाःस्युरित्यर्थः । तथाइडायानाड्यांभरेपूर्णतायांविलोमशकुनाःशुभदाःस्युः । तथाचवसंतः "भवेदिडायांपरिपूरितायांसर्वोपिवामः शकुनः प्रशस्तः । स्यात्पिंगलायांपरिपूरितायांसर्वेपिसव्याः शकुनाः प्रशस्ताः ॥ संगेरणेकर्मणिचप्रवेशेशुक्केग्रहेनष्टविलोकनेच । व्याधौसरिद्दुर्गवनादिकेषुशस्तः प्रयाणाद्विपरीतभावः ॥" इति ॥ अन्यत्र "नद्युत्तारेभयेयुद्धेप्रवेशेनष्टवीक्षणे । शकुनाव्यस्तगाः शस्ता नृपालोकेप्रयाणवत्"इति । अथप्रथमेअपशकुनेजातेसतिकिंकर्तव्यमाह । आद्ये इति । आद्येप्रथमेदुःशकुनेजातेसतिनिवृत्यनिवर्तनंकृत्वातत्रशुचौदेशेउपविश्य शुचिःप्रक्षालितपाणिपादः आचांतः कृताचमनः असवःप्राणास्तेषांआयमःप्राणायामः अष्टधा अष्टवारं कृत्वा इयात्गच्छेत् । चेद्यदिपुनः दुःशकुनः स्यात्तदानिवृत्यशुचिराचांतोऽष्टिवारंषोडशवारमसून्नियम्येयात् । अपरेतृतीयेदुःशकुनेजातेसतिसुवर्णदत्त्वाइयात् । एतदावश्यकगमनविषयम् । प्राणायामानधिकारीतावत्कालंस्थित्वाव्रजेत् । तथाचज्योतिर्निबंधे "विरुद्धेशकुनेपूर्वंप्राणायामाष्टकं चरेत् । द्वितीयेद्विगुणान्कृत्वातृतीयेचव्रजेत्कचित्" इति ॥ तथाचवसंतराजः "जाते विरुद्धेशकुनेऽध्वनीनोव्यावृत्यकृत्वाकरपादशौचम् । आचम्यचक्षीरतरोरधस्तात्तिष्ठन्प्रपश्येच्छकुनांतराणि"इति। तथाचआर्ष्टिषेणिः "यदापशकुनंपश्येद्विपरीतमुपस्थितम्॥सघृतंकांचनंदत्त्वानिर्विशंकःसुखंव्रजेत्" इति ॥२१॥

इति स्वोक्तमुहूर्तमार्तण्डटीकायांयात्राप्रकरणंसमाप्तम् ॥

भा०-नदीके उतरणेमें-राजभयमें-ग्रामादिकोंके प्रवेशमें-संग्राममें-चूतमें-गई वस्तुके देखणेमें-रोगोपचारमें अशुभ शकुन होय तो शुभ होय । और इडा नाडीके भरणेमेंभी विपरीत शकुन होय तो शुभ होय ॥ और यात्रामें अपशकुन होवे तो पीछा आके पवित्र होकर आचमन करके आठ ८ प्राणायाम करके फेर जाणा । और द्वितीयवारमें अपशकुन होवे तो सोलह १६ प्राणायाम करके जाणा । और तृतीयवारमें अपशकुन होय तो सुवर्णका दान करके जो अवश्य जाणा होय तो जाणा और अवश्य विना कदापि नहीं चलना ॥ २१ ॥

इति श्रीश्रीमालिकुलोद्भवनारायणात्मजमाध्यचातुर्मास्ययाजिपुत्रमोडुरामविरचितायां मार्तण्डदर्शिन्यां यात्राप्रकरणं समाप्तम् ॥

---

**जन्मांगर्क्षदशेशसद्ग्रहकुजैः सार्कैर्बलिष्ठैर्मृदुक्षिप्रेन्द्रध्रुवभैःस्थिरर्द्धिनृतनौव्याराह्निभूपस्थितिः॥ स्वस्वर्क्षैःसमृदुध्रुवर्क्षचरभक्षिप्रैः सुरस्थापनंप्रोचुर्माघयुगेचराधयुगलेव्याराह्निपूर्वाह्णके ॥ १ ॥**

अथमिश्रप्रकरणंविवक्षुरादौराजाभिषेकंवृत्तार्द्धेनाह । जन्मेति । जन्मांगर्क्षदशेशादिभिर्बलिष्ठैः तथामृद्वादिभिः स्थिरर्द्धिनूतनौव्याराह्निभूपस्थितिः शस्ता स्यादित्यध्या-

हारः । अंगंचऋक्षंचअंगर्क्षेजन्मनिअंगर्क्षेजन्मांगर्क्षे जन्मलग्नजन्मराशी तेचदशाचज-न्मांगर्क्षदशाः दशावर्तमानातस्याईशाःतेच सद्ग्रहाश्चकुजश्चसूर्यश्चतेचतैःसार्कैःअर्कोर-विःतेनसहबलिष्ठैः स्थानादिबलसमृद्धैः सद्भिः तथा मृदुक्षिप्रेंद्रध्रुवभैः स्पष्टम् । स्थिर-र्द्धिनृतनौ ऋद्धिंगतनृतनुः स्थिराचासौऋद्धिनृतनुश्चसातथातस्यांजन्मराशिजन्मलग्ना-भ्यांस्थिरोपचयनृलग्ने व्याराह्निभौमरहितदिने भूपास्थितिः राजप्रतिष्ठाशुभास्यादित्यर्थः लग्नबलंप्राग्वत् । प्रायश्चंद्रंत्यजेत्याद्यवलोकनीयम् । अथदेवस्थापनमुत्तरार्द्धेनाह । स्व-स्वर्क्षैरिति स्वस्वर्क्षैः यस्यदेवस्यप्रतिष्ठा क्रियतेतस्यनक्षत्रैः सम्मृदुध्रुवर्क्षचरभक्षिप्रैः । शेषं स्पष्टम् माघयुगे माघफाल्गुनयोः तथाराधयुगलेराधोवैशाखः तस्माद्युगलंतस्मिन् वैशाखज्येष्ठयोरित्यर्थः । तथाव्याराह्नि विगत आरोयस्मात्एवंविधमहस्तस्मिन् भौमर-हितेदिनइत्यर्थः । पूर्वाह्णके अत्रदिनस्यद्वौभागौपूर्वभागःपूर्वाह्णः तस्मिन् आचार्याः सुरस्थापनंप्रोचुः । शेषंस्पष्टम् । सर्वामरस्थापनमितिशेषः लग्नबलं प्राग्वत् ॥ १ ॥

## अब राज्याभिषेकके मुहूर्तको कहतेहैं ।

भा०—जन्मलग्नपति और जन्मराशिपति और वर्तमानदशापति श्रेष्ठ ग्रह भौम और सूर्य ये स्थानादिसे बलवान् होय और मृदु–क्षिप्र–ज्येष्ठा–ध्रुव–ये नक्षत्र होंय–और जन्मराशि जन्मलग्नसे स्थिर–उपचय–नृलग्न होय–और भौमवार न होय तब राजाकी प्रतिष्ठा करणी ॥

## अब देवस्थापनके मुहूर्तको कहतेहैं ।

भा०—जिस देवकी प्रतिष्ठा करै उसीका नक्षत्र लेना और मृदु–ध्रुव–चर–क्षिप्र यह नक्षत्रभी लेणा ॥ और माघ फाल्गुन वैशाख ज्येष्ठ मास लेणा ॥ और पूर्वाह्णकालमें शुभ है ॥ और भौमवारके दिन प्रतिष्ठा नहीं करणी ॥ १ ॥

धार्यंवस्वदितीनपंचगुरुभाश्व्यंत्यध्रुवैर्ज्ञत्रयेज्ञोनेक्षाल्यमिहाशुभ-क्षितमसन्मध्यत्रिभागेऽवरम् ॥ स्त्रीरक्तांबरभूषणेत्रबिभृयाद्व्या-दित्यपुष्यध्रुवेश्वेतेऽब्जोऽरुणरुक्मयोःकुजरवीकृष्णेशनिःशस्य-ते ॥ २ ॥

अथवस्त्रपरिधानंतस्यक्षालनमुंदुरादिभक्षितफलंचाह । धार्यमिति । वसुर्धनिष्ठा अदितिःपुनर्वसुः इनपंचकंहस्तपंचकं गुरुभंपुष्यः अश्विअश्विनी अंत्यंरेवती ध्रुवाणिपू-र्वोक्तानि एतैर्नक्षत्रैः ज्ञत्रये बुधगुरुशुक्रवारे अंबरंवस्त्रंधार्यं नान्यत्र । यतउक्तम् "रवौजी-र्णंविधौस्तोकंजलार्द्रंदुःखदंकुजे ॥ बुधेधनंगुरौज्ञानंशुक्रेसौख्यंशनौमलम्" इति।लग्नबलं प्राग्वत् । अथक्षालनमाह । इहास्मिन्वस्त्रधारणेनक्षत्रादौक्षाल्यंप्रक्षालनीयम् कथंभूते ज्ञोने बुधवाररहिते । उक्तंच "वस्त्रहेमाद्यलंकारधारणोक्तैश्चभादिभिः॥तत्संहृतिश्चनिर्मा-

णंविदध्यात्क्षालनादिकम्'' इति। यद्यपि यस्यांगयददोंगिनोगादितभेकुर्यादितिपूर्वमे-वअंगभूतंकर्मोक्तं तथापि क्षालनेबुधवर्जनार्थं ज्ञोनेइहक्षालयमित्युक्तं बुधनिषेधश्रवणा-त्। उक्तंच "शनौसोमसुतेश्राद्धेषष्ठचमावास्ययोस्तथा ॥ वस्त्राणांक्षालनंचैवदहत्यासप्त-मंकुलम्'' इति। अथोंदुरादिभक्षितफलमाह। आखुभक्षितमिति। आखुः उंदुरःतेन अंबरंमध्यत्रिभागेभक्षितमसत् दुष्टफलंस्यात्। एतदुक्तंभवति वस्त्रंत्रिगुणंकृत्वायदिभ-क्षितभागोमध्यत्रिभागेपततितदातद्दुष्टमित्यर्थः। आखुरित्युपलक्षणं तेनाग्निदग्धंगवा-दिभक्षितंमष्यादिलिप्तंज्ञेयम्। तथाचोक्तंवृत्तशते "दग्धंवास्फुटितंचगोमयमषीपंकैर्वि-लिप्तंतदादष्टंमूषकपूर्वकैरशुभदंमध्यत्रिभागेऽशुकम्'' इति। अथस्त्रियारक्तवस्त्रधारणंभू-षणधारणमनुक्तग्रहाणांकुत्रकुत्रप्राशस्त्यंतदुत्तरार्द्धेनाह। स्त्रीति। स्त्रीअत्रउक्तेवस्त्रधा-रणभादौअंबरंभूषणंसुवर्णादिभूषणं बिभृयात् धारयेत् कथंभूतेभ्यादित्यपुष्यध्रुवे विगतानि आदित्यपुष्यध्रुवाणियस्मात्तत्तथातस्मिन्। यतोत्रस्त्रियारक्तवस्त्रभूषणधारणे दोषोदृश्यते। तथाचोक्तं "पुष्यादित्यध्रुवैर्धिष्ण्यैःस्वर्णरक्तांबरादिकम् ॥ नवीनंभू-षणंधार्यंनार्यादयितुरायुषे'' इति। लग्नबलंप्राग्वत्। अथचंद्रादीनांप्राशस्त्यमाह। श्वेतवस्तुनिरौप्यमुक्ताफलादिके अब्जश्चंद्रोहितः सोमवारेश्वेतवस्तुधार्यमित्यर्थः। कुजरवीअरुणरुक्मयोःशस्येते शनिःकृष्णेवस्तुनि नीलवस्त्रादिकेशस्यते शनौतद्धार्य-मितिभावः। ज्ञत्रयेतुसर्वंधार्यमितिपूर्वोक्तम् ॥ २ ॥

अब वस्त्रधारणादि और भूषणधारणके मूषक भक्षित तथा
वस्त्रके फलको कहतेहैं।

भा०-ध० पुन० ह० चि० स्वा० वि० अ० पुष्य अश्वि० रेव० ध्रुव इन्हों नक्षत्रोंमें और बुध गुरु भृगु वारोंमें वस्त्र पेरणो शुभ होय ॥ और बुधरहित पूर्वोक्त नक्षत्र वारोंमें वस्त्रका धोणा शुभ है ॥ मूषकभक्षित वस्त्रके तीन भाग करणा सो वस्त्रके मध्यत्रिभागमें मूषकने काटा होय वा दग्ध भया होय वा कर्दमलिप्त होय वा गवादिकोंने खाया होयतो वह वस्त्र अशुभ होता है ॥ और रक्त वस्त्र और भूषणोंको पूर्वोक्त नक्षत्रोंमें स्त्री धारण करे तो शुभ होय ॥ परंतु हस्त पुष्य ध्रुव नक्षत्रोंमें रक्तवस्त्र भूषणोंको धारण नहीं करणा ॥ और श्वेतवस्त्रको सोमके दिनं पेरणो ॥ और लाल पीतको भौम सूर्यके दिनमें पेरणो ॥ और कृष्णवस्त्रको शनिवारमें पेरणो ॥ २ ॥

वस्त्रोक्तैर्व्यनिलद्वयाश्विभिरगेंगेनुर्विभूषाहिताविप्राज्ञोत्सवलब्धिभूदितमनुक्तेपीष्टकृद्धारणम् ॥ मैत्रार्कानिलमूलदस्रहरिभेंद्वीज्या-जपादोत्तरेपण्यानांक्रयविक्रयौघटपरद्व्यंगेस्वशुद्धौतनु ॥ ३ ॥

अथनराणांभूषणधारणंवृत्तचरणेनाह। वस्त्रोक्तैरिति। वस्त्रोक्तैर्भादिभिर्वस्वदिती-स्वत्रोक्तैः अगेंगे स्थिरलग्ने नरस्य अलंकृतिरलंकरणं हितंस्यात्। किंलक्षणैर्वस्त्रोक्तैः

व्यनिलद्वयाश्विभिः अनिलद्वयंस्वातीयुगंस्वातीविशाखेति अश्विनीप्रसिद्धा विगतैअ-निलद्वयेश्विन्यौयेभ्यस्तानितथातैः स्वातीविशाखाश्विनीरहितैरित्यर्थः । लग्नबलंप्राग्वत् । अथ द्वितीयचरणेनविशेषमाह । विप्राज्ञेति । विप्राज्ञाब्राह्मणाज्ञा उत्सवोविवाहादिकः लब्धिर्लाभः आसुसत्सु अनुक्तेपिभादौधारणंवस्त्रादिधारणमिष्टकृत्स्यात् । तथाचोक्तंव्यासेन "लब्धंराजप्रसादेनविप्रादेशात्करग्रहे ॥ प्रीत्यादत्तोत्सवेवस्त्रंधार्यंनिंद्येपिभादिके" इति । अथोत्तरार्द्धेनपण्यानांक्रयविक्रयावाह । मैत्रेति । मैत्रमनुराधा शेषंसुगमम् । घटपरद्वर्यंगे घटःकुंभस्तस्मात्परमन्यतमंतच्चतत्तऋद्वयंगंचऋद्वयंगमुपचयलग्नंतस्मिन्कुंभव्यरिक्तोपचयलग्नेपण्यानांपूगफलखर्जूरादीनांक्रयविक्रयौ तनुविस्तारय कुर्वित्यर्थः । कस्यांसत्यां स्वशुद्धौसत्यां स्वंधनभावः तस्यशुद्धिःपापराहित्यंतस्यांसत्यां शेषंप्राग्वत् । तथाचोक्तं "दशमैकादशेलग्नेवित्तकेंद्रत्रिकोणगैः ॥ शुभैः पुण्यस्य कर्मोक्तंवर्जयित्वाघटोदयम्" इति ॥ ३ ॥

### अब पुरुषोंके वस्त्र भूषणके धारणका मुहूर्त कहतेहैं ।

भा०—वस्त्रधारणका नक्षत्र होय और स्वाती विशाखा अश्विनी नक्षत्र नहीं होंय और स्थिर लग्न होय तब पुरुषके वस्त्र भूषण धारणमें शुभ होय ॥ और ब्राह्मणकी आज्ञासे और विवाहमें और लाभ होणेपर विना मुहूर्तभी वस्त्र पहरणा शुभ है ॥

### अब दुकान करणेका मुहूर्त कहतेहैं ।

भा०—अनु० ह० स्वा० मू० अश्वि० श्र० मृ० पुष्य पू० भा० उत्तरा ३ इन्हों नक्षत्रोंमें क्रय विक्रय करणो । धनभावमें कोई ग्रह नहीं होय तो शुभ होय ॥ और कुंभ बिना उपचयलग्न शुभ होय ॥ ३ ॥

**प्रेतज्वालनशय्यकावितननेस्तंभोच्छ्रयंयाम्यदिग्यानंकाष्ठतृणो-च्चयंपरिहरेत्कुंभद्वयस्थेविधौ ॥ सेवेष्टाध्रुववारुणांत्यवसुभैःस्वाये रवौवाकुजेसंन्यासःस्थिरभेखलैर्गतबलैःषष्ठांत्यगेभार्गवे ॥ ४ ॥**

अथवृत्तार्द्धेनधनिष्ठापंचकेवर्ज्यमाह । प्रेतेति । कुंभद्वयस्थेविधौसति कुंभमीनगेचंद्रेसति परिहरेत् सर्वथानाचरेत् स्पष्टम् । अथोत्तरार्द्धचरणेनसेवामाह । सेवेति । ध्रुवादिभिर्नक्षत्रैःसेवाइष्टास्यात् । सुगमम् । कस्मिन्सति स्वायेरवौसति वाइत्यथवाकुजेसति स्वंदशमम् आयमेकादशम् अनयोरन्यतमे रविभौमयोरन्यतमेसतीत्यर्थः । यस्मिँल्लग्नेसेवा क्रियतेतस्माल्लग्नाद्दशमेएकादशेवारवौभौमेवासतिसेवाइष्टाहितकरास्यादित्यर्थः । शेषं प्राग्वत् । अथचतुर्थचरणेनसंन्यासमाह । संन्यासइति । स्थिरनक्षत्रेस्थिरलग्नेचसंन्यासइष्टःस्यात् । कैःखलैः गतबलैःपापग्रहैर्हीनबलैरित्यर्थः । सप्तम्यर्थेतृतीया कस्मिन्सति भार्गवे शुक्रेषष्ठव्यांत्यगे सति । शेषंलग्नबलंप्राग्वत् । उक्तंच "त्रिषडेकादशे सौरिर्व्ययेषष्ठेचभार्गवः ॥ सबलेधर्मपेजीवेकेंद्रेदीक्षाविरक्तिकृत्" इति ॥ ४ ॥

भा०-प्रेतको जलाना और शय्या। और स्तंभ। और दक्षिणकी यात्रा। और घास लकडीके संचयको कुंभ मीनके चंद्रमें नहीं करणा॥

## अब नोकरी करणेके मुहूर्तको कहतेहैं।

भा०-ध्रुव-शत०रेव०ध० ये नक्षत्र शुभ हैं॥ और १०। ११ इन्हों स्थानोंमें सूर्य वा भौम होय तो श्रेष्ठ होय॥

## अब संन्यासके मुहूर्तको कहतेहैं।

भा०-स्थिरलग्न होय और स्थिर नक्षत्र होय और पापग्रह हीनबल होय॥ और ६। १२ इन्हों स्थानोंमें शुक्र होय तब संन्यास करणा श्रेष्ठ है॥ ४॥

**उद्राहर्क्षचरद्विपेंद्रलघुभत्वाष्ट्रैःशुभास्यात्कृषिर्व्यार्किज्ञारखगाह्नि युग्मझषगोकन्याविलग्नेतिथौ॥ व्यंकौजेसदिशिप्रणम्यखगभूमुख्यान्सिताच्छादनःस्वर्णोद्घृष्टहलंसमुष्कसुवृषैःसौमींपटुस्त्रिर्नयेत्॥ ५॥**

अथवृत्तद्वयेनकृषिकर्माह। उद्राहेति। उद्राहर्क्षाणिपूर्वोक्तानि मूलांत्यार्केत्यादीनिएकादशसंख्याकानि चराणिप्रसिद्धानि द्विपंविशाखा इंद्रोज्येष्ठा लघुभानिप्र० त्वाष्ट्रंचित्रा तैर्व्यार्किज्ञारखगाह्नि आर्किःशनिः ज्ञोबुधः आरोभौमः विगताआर्किज्ञारायेभ्यस्ते तथातेचतेखगाश्चतेषामहःदिनंतस्मिन् शनिबुधभौमरहितवारेइत्यर्थः। युग्मझषगोकन्याविलग्ने युग्मंमिथुनं झषोमीनः गौर्वृषः कन्याप्रसिद्धा एषामन्यतमविलग्ने तिथौ व्यंकौजे विगतःअंकःनवमोयस्मात्असौव्यंकः सचासौओजश्च ओजोविषमस्तस्मिन् नवमीव्यतिरिक्तविषमतिथावित्यर्थः। किंलक्षणेव्यंकौजेतिथौ सदिशि दिग्दशमी तयासहवर्तमाने १, ३, ५, ७, ११, १३, १५, १० कृषिःशुभास्यात्। तथाचोक्तं "चंद्रेशुभेशुभतिथौशुभवारयोगेवारेगुरौशशिजशुक्रगभस्तिवारे। लग्नेवृषेमिथुनकेझषकन्यकायांशस्तंकृषिप्रकरणंप्रवपेन्निधाने" इति। अन्यच्च "दशम्येकादशीचैवतृतीयाचत्रयोदशी। सप्तमीपंचमीचैवप्रतिपच्चसुखावहा। हंत्यष्टमीबलीवर्दान्नवमीसस्यघातिनी। चतुर्थीकीटजननीपतिं हंतिचतुर्दशी॥ रवौबृहस्पतौचंद्रेशुक्रे कुर्याद्विशेषतः। बुधार्किभूमिपुत्राश्चनभवंतिफलप्रदाः" इति। अथविधिमाह। सिताच्छादनः श्वेतवस्त्रधरः पटुः कुशलः कर्ता खगभूमुख्यान्देवान्प्रणम्य कृष्यारंभपूर्वोक्तः सीतायज्ञः क्रियते तत्रपूजितान्खगभूमुख्यान् ग्रहभूम्यग्न्यादीन् प्रदक्षिणापूर्वकंप्रणम्य मनोवाक्कायकर्मभिर्नमस्कृत्य स्वर्णोद्घृष्टहलंसुवर्णघर्षिताग्रहलं समुष्कसुवृषैः मुष्कावृषणास्तैःसहवर्तमानाः समुष्काः शोभनावृषाः सुवृषाः गुणावयवपूर्णाः नीरोगाः समुष्काश्चतेसुवृषाश्चतथातैः कृत्वा सौमींमुत्तरांदिशंप्रतित्रिवारंनयेत् हलेनपद्धतीःकुर्यादितिभावः। उत्तरादिशंप्रतित्रिवार-

नयनेनपंचरेखाउत्पद्यंते । तद्यथा प्रथमगमनेनैका आवर्तनेद्वितीया पुनरुत्तरांप्रतिद्वितीयगमनेनतृतीया पुनरावर्तनेचतुर्थी पुनरुत्तरांप्रतितृतीयगमनेनपंचमीरेखाउत्पद्यते अधिकानकार्याइतिभावः।सौमींपट्टुस्त्रिर्नयेदित्यत्रपट्टुपदग्रहणमखंडऋजुरेखाकरणार्थम्। तथाचोक्तम् "शस्तासुचंद्रतारासुशुचिः शुक्लेनवाससा । स्नात्वागंधैश्चपुष्पैश्चपूजयित्वा विशेषतः॥ पृथिवींग्रहसंयुक्तांपूजयित्वाप्रजापतिम् । अग्निप्रदक्षिणीकृत्यदातव्याचैवदक्षिणा ॥ कृष्णौवृषौनियोक्तव्यौजीवच्छुक्रयुतौनवौ। विबलंछिन्नलांगूलंकपिलंवृषभंत्यजेत् ॥ हलप्रवाहनंकार्यं नीरुग्भिर्वृषकर्षकैः । हलादिभिर्दृढैः क्षेमंकुदृढैरशुभंभवेत् ॥ वृषभायदियुध्येरंस्तस्यविघ्नःसदाभवेत् । हेमघृष्टहलाग्रेणछिन्नरेखांनकारयेत् ॥ उत्तराभिमुखोभूत्वाक्षीरेणार्घ्यंप्रदापयेत् । तस्यसर्वप्रकारेणनिर्विघ्नंकारयेत्तदा। एकाजयकरीरेखातृतीयाचार्थवृद्धिदा। पंचमीचभवेद्रेखा बहुसस्यफलप्रदा ॥ अतऊर्ध्वंनकर्तव्यामहादोषस्ततोभवेत् । स्मर्तव्यावसवः शुक्रः पृथुनामासुचंद्रमाः ॥ पराशरोहलीचैवसर्वविघ्नोपशांतये" इति । अत्रदुर्निमित्तानितत्रैवोक्तानि "हलेप्रवाह्यमाणेतुकर्मउत्पद्यते यदि । गृहिणोमृतयेतस्यततोऽग्नेश्चभयंभवेत् ॥ ईषाभंगोयदाकष्टः संशयोजीवितस्यच । सुतनाशोयुगेभग्नेसमानेम्रियतेशिशुः ॥ योक्त्रच्छेदेतुव्यासंगः सस्यहानिश्चजायते ॥ हलेप्रवाह्यमाणेतुगौरेकः प्रपतेद्यदि ॥ प्रपतेद्युक्तमात्रस्तुबंधनंचप्रयच्छति । ज्वरातिसाररोगेणकृषिभंगंविनिर्दिशेत्॥ प्रवहेद्युक्तमात्रस्तुततोगौः खनतेयदि । हलेनयुक्तमात्रस्तुतदासस्यंचतुर्गुणम्" इति ॥ ५ ॥

## अब खेतीके मुहूर्तको कहतेहैं ।

भा०–विवाहके नक्षत्र–चर–विशाखा–ज्ये० लघु चित्रा इन्हीं नक्षत्रोंमें और शनि बुध भौम विना अन्य वारोंमें और ३ । १२ । २ । ६ इन्हीं लग्नोंमें और नवमी विना विषम १ । ३ । ५ । ७ । ११ । १३ । १० तिथीमें–हल चलानेवाला श्वेत वस्त्रको पहरके हलके अग्रभागमें स्वर्णको घसके ग्रहोंको पृथ्वीको और ब्राह्मणादिकोंको नमस्कार करके अण्डवाले बलदोंसे उत्तरमें तीनवार हलको खेचणा शुभ होय ॥ ५ ॥

**त्रित्रित्रीष्वनलार्थरामहुतभुग्भेष्वर्कभुक्तादसत्सद्द्वयः कृषिभैर्विवारुणहरींद्रैर्बीजवापः शुभः॥ सूर्यर्क्षादितृतीयतोतिधृतितश्चाष्टाष्टभैः सत्फलःप्रोक्तोन्यैःफणिसप्तमाद्रविमितैस्तच्छेदनंवापभैः ॥ ६ ॥**

अथ कृषिविषयेलांगलचक्रमाह । त्रित्रीति । अर्कभुक्तात्सूर्यभुक्तनक्षत्रात्सकाशात् त्रिश्यादिषुस्थानाष्टस्थितेषुनक्षत्रेषु असत्सदित्येतत्फलद्वयं भूयः वारंवारंस्यात् । एतदुक्तंभवति । सूर्याक्रांतनक्षत्रस्यआदिमान्नक्षत्रात्सकाशात् त्रिषुअसत् दुष्टफलंस्यात् । तदनंतरं त्रिषुसत्शुभंस्यात् । ततस्त्रिषुअसत ततः इषुषुपंचसुसत् ततोनलेषुत्रिषुअ-

सत् ततः अथेषु पंचसुसत् ततोरामेषु त्रिषुअसत् ततोहुतभुक्षुत्रिषुसतस्यादित्यर्थः ।
अथबीजोप्तिमाह । कृषिभैरिति । कृषिभैः कृषिनक्षत्रैः उद्वाहर्क्षचरद्विपेत्यादिभिर्बी-
जवापः शुभः प्रोक्तः। किंलक्षणैः कृषिभैः विवारुणहरीन्द्रैः वारुणंशततारकाहरिःश्रव-
ण इंद्रोजेष्ठा विगताः वारुणहरींद्रायेभ्यस्तानितथातैःशततारकाश्रवणज्येष्ठारहितैरित्य-
र्थः । कृषिभैरित्युपलक्षणम् तस्मात्कृष्युक्तंसर्वतिथिवारादिकंज्ञेयम् । तथाचोक्तं
"मूषकानांभयंभौमेमंदेशलभकीटयोः ॥ नवमेचतिथौरिक्तेहीनेसोमेविशेषतः ॥ वृषल-
ग्नेथवा मीनेकन्यायांमिथुनेथवा ॥ वापयेत्सर्वसस्यानियदीच्छेत्सस्यसंपदः" इत्यादि ।
लग्नबलंप्राग्वत् । अथबीजवापविषयेद्विभेदंफणिचक्रमाह । सूर्यर्क्षादिति । सूर्ययु-
क्तनक्षत्रात्तृतीयं तस्मादतिधृतिरेकोनविंशम तस्मात् अष्टाष्टभिः तृतीयादष्टभिः
एकोनविंशादष्टभिर्नक्षत्रैर्बीजवापःसत्फलः । अथद्वितीयभेदमाह । अन्यैरिति । अन्यै-
राचार्यैः फणिसप्तमात् राहुसप्तमात्सकाशात् रविमितैर्द्वादशभिर्नक्षत्रैः बीजवापःशुभः
प्रोक्तः । एतदुक्तंभवति । राहुर्यस्मिन्नक्षत्रेभवति तस्माद्यत्सप्तमंनक्षत्रंतत्फणिसप्तम-
मुच्यते तस्मात्तत्सकाशात्द्वादशभिरित्यर्थः । राहोस्तुफणीतिनामग्रंथांतरेप्रसिद्धम् ।
वराहमिहिराचार्येणराहुस्वरूपविकल्पाग्रंथान्तरोक्ताउद्घाटिताःस्वकृतसंहितायाम् "अमृ
तास्वादविशेषाच्छिन्नमपिशिरःकिलासुरस्येदम् ॥ प्राणैरपरित्यक्तंग्रहतांयातंवदंत्येके ॥ इं-
दुर्कमंडलाकृतिरसितत्वात्किलनदृश्यतेगगने ॥ अन्यत्रपर्वकालाद्वरप्रधानात्कमलयोनेः
मुखपुच्छविभक्तांगंभुजंगमाकारमुपदिशंत्यन्ये" इति ॥ भुजंगमाकारकथनात्फणीत्यभि-
धानंप्रसिद्धम् । रत्नमालायामपि "फणिभाद्बीजोप्तिकालेस्फुट" इति । तथाचागमांतरे
"राहुभादष्टमंयावद्बीजोप्तिंपरिवर्जयेत्" इति । अथधान्यच्छेदनमाह । तच्छेदनंवापभै-
रिति । तेषांधान्यानांछेदनंतच्छेदनं वापभैःबीजवापनक्षत्रैःप्रोक्तम् । ननु 'यस्यांगंयद्-
दोंगिनोगदितभेकुर्यात्' इतिपुरैवोक्तं तत्कथंपुनरुक्तंतच्छेदनंवापभैरिति । सत्यम् ।
कृषिनक्षत्राणांबीजवापनक्षत्राणांचकश्चिद्भेदोस्तिद्वयोःकृष्यंगत्वात् । कैः कार्यमिति-
संदेहनिवारणार्थंतच्छेदनंवापभैरित्युक्तम् ॥ ६ ॥

## अब हलचक्रको कहतेहैं ।

भा०-सूर्यनक्षत्रसे तीन ३ नक्षत्रोंमें अशुभ-फेर ३ तीन नक्षत्रोंमें शुभ फेर तीन ३ नक्षत्रोंमें अशुभ फेर पांच ५ नक्षत्रोंमें श्रेष्ठ । फेर ३ तीन न क्षत्रोंमें नेष्ट ॥ फिर५पांचोंमें श्रेष्ठ फिर३तीनोंमें अशुभ-फिर तीनोंमें ३ श्रेष्ठ है ॥ यह लांगलचक्र है ॥

## अब बीजबोणेके मुहूर्तको कहतेहैं ।

भा०-हलप्रवाहके नक्षत्रोंमें बीजबोणो शुभ होय । परंतु श० श्र० ज्ये०, ये नक्षत्र नहीं लेणा ॥ अब बीजबोणेमें फणिचक्रको कहते हैं ॥ और सूर्य नक्षत्रसे तीजा नक्षत्रसे और उसीसे १९ उनीसमा नक्षत्रसे आठ आठ नक्षत्रोंमें बीजबोणो शुभ होय ॥

## अब दूसरा प्रकार कहतेहैं ।

भा०-राहु नक्षत्रसे सातमा नक्षत्र उससे बारह नक्षत्रोंमें बीज बोणा शुभ होय ॥ ६ ॥

**मेथिंक्षीरतरोरुफानुरहितैरुद्वाहभैरोपयेदन्नप्राशनवद्वसंतशरदोः प्रोक्तंनवान्नंबुधैः ॥ मैत्रार्कान्त्यवसूत्तरेज्यवरुणैः सैंद्रैः शुभंनर्तनं-लग्नेज्ञेगुरुवीक्षितेहिबुकगैःसौम्यैश्चसंगीतकम् ॥ ७ ॥**

अथनिष्पन्नेधान्येक्रमप्राप्तंमेथिरोपणंवृत्तचरणेनाह । मेथिमिति । क्षीरतरोर्वटवृक्षा-देर्मेथिमुद्वाहभैर्विवाहनक्षत्रैर्मूलांत्याकेंत्यादिभिरारोपयेत् निखनेत् । मेथिर्नामखलेधा-न्यमर्दनार्थंवृषपंक्तियोजनार्थंकाष्ठमारोप्यते मेथ्यंतेसंगम्यंतेवृषभाअस्मिन्नितिमेथिः "पुंसिमेथिःखलेदारुन्यस्तंयत्पशुबंधने" इत्यमरः । किंलक्षणैरुद्वाहभैः उफानुरहितैः उफाउत्तराफाल्गुनी अनुःअनुराधाताभ्यांरहितैः । उक्तंच "रेवतीरोहिणीमूलंस्वाती-हस्तोमृगस्तथा ॥ आषाढोत्तराहस्तश्चतथाभाद्रपदामता ॥ बंधनेसर्वबीजानांतथाशा-लाप्रवेशने॥दुःखदावनदाचैवानुराधोत्तरफाल्गुनी ॥वटश्चसप्तपर्णश्चगंभारीशाल्मलीतथा औदुंबरीतथाधात्रीयाचान्याक्षीरवाहिनी ॥ स्त्रीनाम्नीकर्षकैर्नित्यंमेथिः कार्यफलप्रदा" इति । अथनवधान्यप्रसंगेननवान्नकर्मद्वितीयचरणेनाह । अन्नप्राशनभैरिति।वसंतशरदोः ऋत्वोः अन्नप्राशनभैर्नवान्नंनवान्नकर्मबुधैःप्रोक्तम् । अन्नप्राशनभैरित्युपलक्षणं तस्माद-न्नप्राशनोक्तंतिथिवारादिकमत्रग्राह्यं साग्निकस्यनवान्नकर्मणाविनाव्रीह्यादीनांनवन-मितानांधान्यानांभक्षणेदोषप्रसंगादावश्यकंकर्मैतत् । नवधान्यानीमानि "व्रीहयो यव-गोधूमानीवाराः कंगुवैणकाः । शालयोमुद्गमाषाश्चनवधान्यानिचक्रमात्"एषांमध्येशर-त्संभवानिधान्यानिव्रीह्याग्रयणेनविनानभक्षणीयानिवसंतभवानियवाग्रयणेनविनानभक्ष-णीयानीतिनियमादिकर्मशरद्वसंतयोःक्रियतइतियत्तत्अन्नप्राशनोदितैस्तिथिभादिभिः मासेषष्ठेष्टमेवेत्यत्रोक्तैर्नवान्नंकर्तव्यमित्यर्थः । अथोत्तरार्द्धेननृत्यसंगीतयोरारंभमाह । मैत्रार्कान्त्येति । मैत्रमनुराधा अर्कोहस्तः अंत्यंरेवती वसवोधनिष्ठा उत्तरास्तिस्रःइज्यः पुष्यः वरुणः शततारका इंद्रोज्येष्ठा तैर्नर्तनमारभेत संगीतकंचआरभेत कस्मिन्सति लग्नेवर्तमानेज्ञेगुरुवीक्षितेसति कैः हिबुकगैःसौम्यैःचतुर्थस्थानस्थितैः सौम्यग्रहैः शेषं-प्राग्वत् ॥ ७ ॥

## अब मेथीको कहतेहैं ।

भा०-उत्तराफाल्गुनी अनुराधा बिना विवाहके नक्षत्रोंमें वट आदिक वृक्षकी मेथी करणी धान्य निकालनेके लिये जिस काष्ठमें बलदोंको जोडते हैं-उस काष्ठका नाम मेथी है ॥ और वसंत ऋतुमें और शरद् ऋतुमें अन्नप्राशनके नक्षत्रोंमें नवान्न कर्म करणा॥ और अनु०ह० रे० ध० उ० ३ पुष्य शत० ज्ये० इन्होंमें नाच गान करणा श्रेष्ठ है और लग्नको बुध गुरु देखता होय और ४ चौथे सौम्यग्रह होवे तो नाच गान श्रेष्ठ होय ॥ ७ ॥

**द्वीशार्केंद्वदितीज्यवासवशिवाश्व्यंत्याग्निपाशींद्रभैः पूर्वाभिःशुभ-दाविसिंहभतनौनानापशूनांक्रिया॥वारेष्वर्कचतुष्टुकोत्तरहरित्वा-ष्ट्रेष्वमारिक्तयोरष्टम्यांनहितोदितास्वभगभेनस्याद्भदोषः किल ८॥**

अथनानापशूनांकर्मवृत्तेनैकेनाह । द्वीशेति । द्वीशंविशाखा अर्कोहस्तः इंदुर्मृगः अदितिःपुनर्वसुः इज्यःपुष्यः वासवोधनिष्ठा शिवःआर्द्रा अश्विनीप्रसिद्धा अंत्यंरेवती अग्निःकृत्तिका पाशीशततारका इंद्रोज्येष्ठा तैःपूर्वाभिस्तिसृभिः विसिंहभतनौ विगतःसिंहोयेभ्यस्तानिविसिंहानितानिचतानिभानिविसिंहभानिसिंहरहितराशयस्तेषांतनुःलग्नंतस्मिन नानापशूनांक्रियाशुभदाउदिता पशूनांक्रयविक्रयादिकर्म शुभदंप्रोक्तमित्यर्थः । अथोत्तरार्धेनवर्ज्यमाह । अर्कचतुष्टुवारेषु रविचंद्रभौमबुधवारेषु कोत्तरहरित्वाष्ट्रेषु कःरोहिणी उत्तरास्तिस्रः आसांसमाहारःकोत्तरंहरिःश्रवणः त्वाष्ट्रंचित्रा एषु अमातिरिक्तयोः अमाअमावास्या रिक्ताचतुर्थीनवमीचतुर्दशीनामन्यतमा तयोः अष्टमीप्रसिद्धा तस्यांनानापशूनांक्रियाहितानउदिता । अपवादमाह । स्वभगभेसतिभदोषोनक्षत्रदोषः क्वचित्पशुकर्मणिनस्यात् लग्नबलंप्राग्वत् । उक्तंच "द्व्यादित्याद्विवसुद्व्यांत्यकेंद्वद्वीशैःक्र्यादिगोः ॥ दर्शभूताष्टमीचित्राध्रुवकर्णेगमाद्यसत् ॥ सोमार्कवैधृतौपाते-लग्ने पंचाननेबुधे। भद्रासंक्रांतिरिक्तासुपशुकर्मविवर्जयेत्॥ शुभग्रहोदयेशुद्धेनैधनेस्वर्क्षयोनिषु ॥ रक्षावृद्धिक्रियाशस्तापशूनांमुनिभिः स्मृता" इति ॥ तथाचागमांतरे "सोमे-भौमेबुधे गावोनचाल्यास्तुरगाःशनौ" इति । अन्यच्च "पूर्वात्रयामृतमयूखहुताशनेषु-शक्राग्निवाजिवसुवारुणशांकरेषु ॥ एतेषुगोमहिषदंतितुरंगमादिनानाप्रकारपशुजातिगतिःप्रशस्ता" इति ॥ ८ ॥

**अब पशुओंका कर्म कहतेहैं ।**

भा०-वि० ह० मृ० पुन० पुष्य ध० आर्द्रा अश्वि० रे० कृ० श० ज्ये० पू० ३ इन्हों नक्षत्रोंमें और सिंह बिना कोई लग्नमें पशुओंका लेणा देणा शुभ है ॥ और चंद्र भौम बुध वारोंमें और रो० उ० ३ श्र० चि० इन्हों नक्षत्रोंमें और ३० । ४ । ६ । १४ । ८ इन्हों तिथोंमें पशुओंको लेना देना अशुभ है और पशुओंकी स्वयोनि होयतो नक्षत्रदोष नहीं होय ॥ ८ ॥

**द्व्यादित्यद्विवसुस्थिराश्विभमृदुस्वात्यर्कभैर्ज्ञत्रयार्कारार्ह्णीज्यभृगूदयेद्विकमदेष्विंदौक्रियाश्वीहिता ॥ तत्राप्यर्कभतःक्रमात्तिथिमितैःपश्चात्त्रिभिः साभिजिच्छस्तायान्नृसमातदुक्तभमुखैः कार्याप-राभैर्बुधैः ॥ ९ ॥**

अथाश्वकर्मवृत्तेनाह । द्व्यादित्येति । द्व्यादित्यंपुनर्वसुपुष्यौ द्विवसुधनिष्ठाशतता-

रके स्थिराणिप्रसिद्धानि अश्विनीप्रसिद्धा मृदूनिप्रसिद्धानि स्वातीप्रसिद्धा अर्कोहस्तः तैः ज्ञत्रयार्कारार्ह्विज्ञत्रयंबुधगुरुशुक्राः अर्कःसूर्यः आरोभौमः एषामहः दिनं तस्मिन् इज्यभृगूदये उदयेलग्नेइज्यभृगू इतिइज्यभृगूदयःतास्मिन् गुरुशुक्रयुतेलग्ने इत्यर्थः। द्विकमदेषुइंदौ द्विद्वितीयं कंचतुर्थं मदःसप्तमम् एषुचंद्रेसतीत्यर्थः आश्वीक्रिया क्रयविक्रयादिकीहिताशुभकर्त्रीस्यात् । अथाश्वचक्रमाह । तत्रापीति । तत्रापि द्व्यादित्यादिषुनक्षत्रेषुसत्स्वपि अर्कभतःसूर्यनक्षत्रात्सकाशात् क्रमात्तिथिमितैर्नक्षत्रैः पश्चादुत्क्रमतस्त्रिभिर्नक्षत्रैः साभिजित्यथातथा अश्विनीक्रियाशस्ताशोभनास्यात् । एवं सामान्यतोश्वकर्मोक्त्वेदानींविशेषमाह । येति। याआश्वीक्रियानृसमामनुष्यसदृशीसा- क्रियातदुक्तभमुखैःकार्या तस्मैमनुष्यायउक्तानिभमुखानिनक्षत्रादीनितैःकार्येत्यर्थः । परायानृसमाना भवतिसाएभिःसामान्यैर्द्व्यादित्यादिभिर्बुधैः कार्येत्यर्थः। लग्नवलंप्रा- ग्वत् । तथाचनारदः "विविष्णुचरभेक्षिप्रेस्थिरभेमृदुभेषुच ॥ वाजिकर्माखिलंसूर्यवारे कार्यविशेषतः" इत्यादि । तथाचोक्तं "घृतान्नचणकक्षीरतृणमुद्रादिभक्षणे ॥ अन्नप्रा- शनवद्दक्षंस्नानंसौम्यग्रहोदये ॥ चौलोक्तंक्षुरकर्मादौभेषजेभेषजोदितम् ॥ गर्भाधानो- क्तमश्वानांमैथुनेतुविलोकयेत् ॥ गृहारंभोदितेकालेहयशालाविधीयते ॥ शिक्षाविद्योक्त- कालेचभूषणंभूषणोदिते ॥ चर्मकर्मादिकं कार्यंजययोगेशुभोदये ॥ एवंखरोष्ट्रादिकं- कार्यंपूर्वाह्णेवाहनादिकम्" इति ॥ ९ ॥

### अब अश्वके लेने देनेके मुहूर्तको कहतेहैं ।

भा०-पु० पुष्य ध० श० स्थिर अश्वि० मृदु स्वा० ह० इन्हों नक्षत्रोंमें-और बुध गुरु शुक्र भौम सूर्य वारोंमें-और लग्नमें गुरु शुक्र होंय तो और २ । ४ । ७ स्थानोंमें चंद्रमा होयतो घोडोंका लेणा देणा शुभ है ॥

### अब अश्वचक्रको कहतेहैं ।

भा०-और उक्त नक्षत्रोंके होते भये सूर्यनक्षत्रसे पन्द्रह१५ नक्षत्रोंमें और सूर्यके पृष्ठके३ तीन नक्षत्रोंमें अश्वोंकी क्रिया श्रेष्ठ होय इसमें अभिजितकोभी लेणा ॥ और जो अश्वक्रिया मनुष्यसमा होय तो मनुष्यके लिये कहे हुए नक्षत्रोंमें करणी ॥ और नृसमा नहीं होयतो सामान्य नक्षत्रोंमें करणी ॥ ९ ॥

**भद्रासंक्रमपातवैधृतिसितेज्याकारषष्ठ्यादिषुश्राद्धाहेप्रतिपद्द्वयेप- रिहरेद्धेतुंविनाभ्यंजनम् ॥मांगल्यंविजयोत्सवोब्दवदनंदीपावलि- र्हेतवोभ्यंगस्यक्कथितादितैलमनसन्निंद्येह्निनित्येऽखिलम् ॥१०॥**

अथाभ्यंगनिषिद्धकालमाह । भद्रेति । भद्राप्रसिद्धा संक्रमःसंक्रांतिः पातोव्यती- पातः वैधृतिःप्रसिद्धा सितःशुक्रवारः इज्योगुरुवारः अर्कोरविवारः आरोभौमवासरः षष्ठ्यादयःसर्वास्तिथयः ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, ३० तासुश्राद्धाहःश्राद्धदिनं प्रतिपद्द्वयंप्रतिपद्द्वितीयेतस्मिन् हेतुंकारणंविनाअभ्यंजनमभ्यंगं

परिहरेत् । कारणेसतिअवश्यंचरेदित्यर्थात्सिद्धम् । तथाचोक्तं "सप्तम्यांनस्पृशेत्तैलं नवम्यांप्रतिपत्तिथौ ॥ चतुर्दश्यामथाष्टम्यांषष्ठ्यांचैवविशेषतः" इति । ग्रंथांतरे "चतुर्दश्यष्टमीचैवपौर्णमास्यर्कसंक्रमः ॥ तैलस्नानंनकुर्वीतसुतबंधुधनक्षयात्" इति । तथाचवृद्धमनुः "दर्शेस्नानंनकुर्वीतमातापित्रोस्तुजीविनोः । नवम्यांचनचेत्तत्रनिमित्तांतरसंभवः ॥ प्रतिपद्यनपत्यःस्याद्द्वितीयायामपत्निकः ॥ दशम्यामधनःस्नानेसर्वंहंतित्रयोदशी" इति । रत्नमालायां "रविस्तापंकांतिंवितरतिशशिभूमितनयोमृतिंलक्ष्मीं चांद्रिःसुरपतिगुरुर्वित्तहरणम् ॥ विपत्तिंदैत्यानांगुरुरखिलभोगानुभवनंनृणांतैलाभ्यंगात्सपदिकुरुतेसूर्यतनयः" इति ॥ अथाभ्यंगहेतूनाह । मांगल्यंविवाहादि विजयोत्सवआश्विनशुक्लदशम्यांक्रियते अब्दवदनंसंवत्सरप्रतिपत् दीपावलिःप्रसिद्धा एतेभ्यंगस्य हेतवःकारणानि एषुनिषिद्धतिथ्यादावपिअभ्यंगःकर्तव्यः । तथाचोक्तंव्यवहारसारे "वत्सरादौवसंतादौसुतकांतमहोत्सवे ॥ दीपोत्सवचतुर्दश्यामभ्यंगनियमोनच" इति । तथाचोक्तंस्कांदेविजयादशमीविषयं "निषिद्धमपिकर्तव्यंतैलाभ्यंजनमादरात्" इति ॥ अथाभ्यंगनिषिद्धापवादमाह । क्वथितादीति । निंद्येह्निक्वथितादितैलमनसच्छुभंस्यात् । आदिग्रहणात्सार्षपसुगंधपुष्पवासितादितैलंगृह्यते । एवंक्वथितादितैलंनिंद्यदिनेपिशुभमित्यर्थः । उक्तंच "सार्षपंगंधतैलंचयत्तैलं पुष्पवासितम् ॥ द्रव्यांतरयुतंवापिनदुष्यतिकदाचन ॥ सूर्यशुक्रारवारेषुनिषिद्धासुतिथिष्वपि ॥ कर्त्तव्येयदिवास्नानेपक्वतैलं नदुष्यति ॥ रवौपुष्पंगुरौदूर्वाभौमवारेचमृत्तिका ॥ भार्गवेगोमयंक्षिप्त्वातैलस्नानंसुखावहम्" इति ॥ अथनित्याभ्यंगेविशेषमाह । नित्येखिलमिति । नित्येऽभ्यंगेअखिलंतैलंपकादिकमनसत्शुभंस्यात् । उक्तंच "नित्यस्नानेचकर्तव्येतिथिदोषोनविद्यते"

## अब अभ्यंगमें निषिद्धकालको कहतेहैं ।

भा०-भद्रा संक्रांति व्यतिपात वैधृति शुक्र गुरु सूर्य भौम वारोंमें और १ । २ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । ३० इन्हों तिथोंमें श्राद्धदिनमें कारण विना भद्रादिकमें मर्दन नहीं करणा ॥

## अब कारणोंको कहतेहैं ।

भा०-विवाहादिक-और दशहरा-और संवत्सरकी प्रतिपदा दीपावली इतने अभ्यंगके कारण हैं, इन्होंमें निषिद्ध तिथियोंमेभी अभ्यंग करणो शुभ है । और अग्निसे तपाये तेलसे निन्द्य दिनमेंभी अभ्यंग करणो शुभ है ॥ और नित्य अभ्यंगमें दोष नहीं है ॥ १० ॥

दिग्विश्वाद्रिहगंकदर्शतिथिषुस्नानंनधात्रीफलैः श्रीकामोथवुधांबुपर्क्षपितृभाभ्यंगात्पतिघ्न्यंगना॥पुत्रीसोमदिनेप्रसूर्यमपितृत्वाष्ट्रेंदुमिश्रांबुपक्वव्यादेश्वरभेकुपुत्रहरिजेस्नायान्निशास्येपिन ॥११॥

अथप्रसंगेनतिलामलकस्नानेनिषिद्धतिथीनाह । दिगिति । दिक्दशमी विश्वेत्रयोदशी अद्रिःसप्तमी दृक्द्वितीया अंकोनवमी दर्शोऽमावास्या एतासुतिथिषु श्रीकामः धात्रीफलैः आमलकीफलैः स्नानंनाचरेत् । तथाचोक्तं "यः करोतिदशम्यांचस्नानमामलकैः सह ॥ पुत्रहानिर्भवेत्तस्यत्रयोदश्यांधनक्षयः ॥ अर्थपुत्रक्षयस्तस्यद्वितीयायां नसंशयः ॥ अमायांचनवम्यांचसप्तम्यांचकुलक्षयः" इति ॥ अथस्त्रीणांबुधादिषुअभ्यंगनिषेधमाह । बुधोबुधवारः अंबुपक्षंशततारका पितृभंमघा तेषुअभ्यंगस्तस्मात्अंगनास्त्रीपतिघ्नीस्यात् । उक्तंच "स्नानंकुर्वंतियानार्यश्चंद्रेशतभिषग्गते ॥ सप्तजन्मभवेषुस्ताविधवादुर्भगाध्रुवम्" इति । त्रिविक्रमशते "स्नानंनारार्कशुक्रेज्यविष्टिसंक्रांतिपर्वसु॥ द्व्यष्टषड्दिक्त्रयोदश्यांस्त्रियस्तुनमघाबुधैः" इति ॥ अथपुत्रवतः सोमवारेभ्यंगनिषेधमाह । पुत्रीति । पुत्रवान्सोमवारेनस्नायात् । उक्तंच "पुत्रवान्स्वगृहेनित्यंनस्नायादुत्तरामुखः ॥ सोमवारे तथाभ्यंगंवर्जयेत्सर्वथाबुधः" इति ॥ अथ प्रसंगेनप्रसूतिकास्नानेनिषेधकालमाह । प्रसूरिति । यमो भरणी पितरोमघा त्वाष्ट्रंचित्रा इंद्रोज्येष्ठा मिश्रे कृत्तिकाविशाखे अंबुपःशततारा क्रव्यादोमूलम् ईश्वरभमार्द्रा एषांसमाहारस्तस्मिन् । कुपुत्रहरिजे कुत्सितःपुत्रःपुत्रभावोयस्यतत्कुपुत्रंतच्चतद्धरिजंचतस्मिन् यस्माल्लग्नात्पंचमस्थः पापग्रहो भवतितस्मिन्नित्यर्थः । निशास्यंरात्रिमुखंसायंकालस्तस्मिन् प्रसूता नस्नायात् । शेषंलग्नबलंप्राग्वत् । उक्तंच "मघामूलविशाखार्द्राचित्रादितियमद्वये ॥ ज्येष्ठासार्पजलेशर्क्षेनैव स्नायात्प्रसूतिका ॥ शुभग्रहयुतेलग्ने पंचमेपापवर्जिते ॥ परित्यज्यमहादोषान्प्रसूतिकास्नानमाचरेत्" ॥ ११ ॥

### अब तिलोंसे और आमलोंसे स्नान करणेमें निषिद्ध तिथियोंको कहतेहैं ।

भा०–१० । १३ । ७ । २ । ९ । ३० । इन तिथियोंमें लक्ष्मीकामवाला पुरुष आमलोंसे स्नान नहीं करै ॥

### अब स्त्रियोंके अभ्यंगका निषेध कहतेहैं ।

भा०–बुधवारमें और शतभिषा मघा नक्षत्रोंमें अभ्यंग करै तो स्त्री पतिघ्नी होय ॥ और पुत्रवान्को सोमवारमें अभ्यंग नहीं करणा ॥

### अब प्रसूतिके स्नानमें निषेध कहतेहैं ।

भा०–भ० म० चि० ज्ये० कृ० वि० श० मू० आर्द्रा इन्हों नक्षत्रोंमें और लग्नसे पांचमें पाप ग्रह होय तो और रात्रिमें प्रसूतिका स्त्री स्नान नहीं करै ॥ ११ ॥

**मंदारान्यदिनेमृदुध्रुवचरक्षिप्रैर्बलक्षेसुधायोगेभेषजमाचरेत्सुमृतिकेंद्रारिव्ययगेभिषक् ॥तद्वद्यादिहविध्रुवेंदुतनयप्रद्योतनेरोगिणेसृक्स्रावव्रणकर्मसूर्यकुजयोरह्नीहकेंद्रस्थयोः ॥ १२ ॥**

अथौषधनिष्पादनमाह । मंदेति । मंदःशनिः आरोभौमः ताभ्यामन्यैरविचन्द्रबुधगुरुशुक्रास्तेषांदिनंतस्मिन् मृदुध्रुवचरक्षिप्रैर्नक्षत्रैः वलक्षे शुक्लपक्षे सुधायोगेअमृतयोगे ग्रंथांतरप्रसिद्धे । सुमृतिकेंद्रारिव्ययांगेशोभनानिपापग्रहरहितानिमृतिकेंद्रारिव्ययानिच स्यतत्सुमृतिकेन्द्रारिव्ययंतच्चतत्अंगंचतस्मिन् भिषक्वैद्यः भेषजमाचरेत्कुर्यात् । शेषं लग्नबलंप्राग्वत् । अथौषधदानमाह । तदिति । तदौषधमिहानंतरोक्तेभादौदद्यात् । कथंभूतेइह विध्रुवेंदुतनयप्रद्योतनेध्रुवनक्षत्रबुधरविरहिते । अथरक्तस्रावव्रणयोर्विशेषमाह अस्रक्स्रावोरक्तस्रावः व्रणःक्षतम् अनयोःकर्मसूर्यकुजयोरह्निदिवसेआचरेत् कयोः सतोः इहानयोः सूर्यकुजयोः केंद्रस्थयोःसतोः । तथाचोक्तं "मंदारवर्जितेवारेचराक्षिप्रमृदुध्रुवैः ॥ सूर्यसौम्यैःकेंद्रगतैर्भेषजोत्पादनंहितम् ॥ रक्तस्रावंकुजेकुर्यात्तद्धोरायामथापिवा ॥ कुजेकेंद्रेऽथवार्मंदेरवौवाविखलेऽष्टमे ॥ व्रणक्रियाकुजेसूर्येकेंद्रगेतद्दिनेऽष्टमे ॥ शुद्धेषष्ठेचसक्रूरेचरलग्नेधुवस्वरे" इति ॥ १२ ॥

### अब औषध बनानेका मुहूर्त कहतेहैं ।

भा०-शनि भौम विना और वारोंमें और मृदु ध्रुव क्षिप्र नक्षत्रोंमें और शुक्लपक्षमें और अमृतयोगमें-और ८ । १ । ४ । ७ । १० । ६ । १२ इन्हीं स्थानोंमें पापग्रह नहीं होय तब औषध करणा श्रेष्ठ है ॥

### अब औषध देणेका मुहूर्त कहतेहैं ।

भा०-ध्रुव नक्षत्र और बुधवार विना पूर्वोक्त मुहूर्तमें औषध देणो शुभ है ॥

### अब रक्तस्रावका और व्रणका मुहूर्त कहतेहैं ।

भा०-सूर्य मंगलके दिनमें और सूर्य मंगल केंद्रमें हांय तब रक्तस्राव याने फस्त खोलणेका और व्रणका कर्म शुभ है ॥ १२ ॥

**याम्याहित्रयवायुमूलजलपोपांत्यैंद्रहस्तांबुभेशांत्याजद्विपयोर्नृपैर्नवदिनैरन्यत्ररुग्णोविरुक् ॥ आदित्याह्वानिलध्रुवांत्यपितृभेशक्रेंदुवारेगदत्यक्स्नानमनिष्टमिष्टमशुभेभादौखलास्तस्थिरे ॥ १३ ॥**

अथप्रसंगेनरोगमुक्तिदिवसानाहवृत्तार्द्धेन । याम्यमिति ॥ याम्यंभरणी अहित्रयम्आश्लेषात्रयं वायुःस्वाती मूलंप्रसिद्धं जलपःशततारका उपांत्यमुत्तराभाद्रपदा इंद्रोज्येष्ठा हस्तःप्रसिद्धः अंबुभंपूर्वाषाढा अस्मिन्नक्षत्रगणे........शांत्यायथोक्तशांतिकेनाविरुक्ज्वरमुक्तोभवति । अजद्विपयोः श्रवणविशाखयोः रुग्णः नृपैः षोडशभिर्दिनैःविरुक्स्यात् । अन्यत्रअन्येषुनक्षत्रेषुरुग्णोनवदिनैर्विरुक्भवति । एतज्ज्यौतिषार्कानिरायंकिंचिद्रत्नकोशाभिप्रायमुक्तम् । तत्रयेषुनक्षत्रेषुज्वरितस्य

मृत्युरुक्तः येषुचकृच्छ्रेणबहुभिर्दिनैर्ज्वरमुक्तिरुक्ता तत्फलमत्रशांत्याविरुगित्युक्तम् । क्वचिदन्यथाफलदर्शनात् । तथायेषुयेषुनक्षत्रेषुसप्तभिरेकादशभिर्दिनैर्ज्वरनिर्मोचनमुक्तम् तत्फलमत्रमध्यमत्वेननवदिनैर्विरुगित्युक्तम् । ग्रंथलाघवाय स्वल्पांतरत्वात् । तथाचज्यौतिषार्के "सप्ताहमृतिनंदाद्रिरुद्रमृत्युनगाद्रिभिः ॥ कृच्छ्रेमृत्यूमृतीशैश्चकृच्छ्रेशव्यसुतानृपैः" इत्यादि॥ अथोत्तरार्द्धेनरोगमुक्तिस्नानमाह। आदित्येति । आदित्यंपुनर्वसुः अहिराश्लेषा अनिलःस्वाती ध्रुवाणिपूर्वोक्तानि अंत्यं रेवती पितृभंमघा अस्मिन्नक्षत्रगणे शुक्रेंदुवारेशुक्रसोमवारेगदत्यक्तस्नानंरोगमुक्तस्नानमनिष्टंस्यात् । तर्हिकुत्रकर्तव्यमित्यतआह । अशुभेभादौइष्टंशुभंस्यात् । कस्मिन्सति खलास्तस्थिरेसति खलःपापग्रहःअस्तेयस्यतत्तथातच्चतत्स्थिरंचतस्मिन् स्थिरलग्नेपापेसप्तमेसतीत्यर्थः । तथाचोक्तं "वैधृतौचव्यतीपातेभद्रायांधिष्ण्यसंक्रमे ॥ रोगमुक्तोनरःस्नायात्कुवारर्क्षतिथिष्वपि ॥ द्यूनंपापयुतंशस्तंदशमंचशुभान्वितम् ॥ सौम्यक्रूरयुतंरंध्रंरोगस्नानेरिभंतथा" इति ॥ चन्द्रबलंसर्वत्रयोज्यम् । कुतिथिभादौसदित्यनेनचन्द्रादिबलविषयेमोहोमाभूदित्यतश्चन्द्रबलंसूचितम् । यतः ग्रंथादौगर्भाधानेसदाइत्युक्तं तत्सर्वकर्मसुज्ञेयमितिसर्वग्रंथकारसंमतम् । तथाचोक्तंसंहितायांस्पष्टं "स्नायाद्रोगविमुक्तस्तुशुभयोश्चंद्रतारयोः" इति ॥ १३ ॥

भा०-भ० अ० मं० पू० फा० स्वा० मू० शत० उ० भा० ज्ये० ह० पू० भा० इन्हों नक्षत्रोंमें ज्वर होयतो शांति करनेसे छूटै ॥ श्र० वि० इन्होंमें ज्वर होय तो सोलह दिनोंमें ज्वर छूटै ॥ और नक्षत्रोंमें ज्वर होय तो नव दिनतक ज्वर रहै ॥

## अब रोग छुटेके पीछे स्नानका मुहूर्त कहतेहैं ।

भा०-पुन० आश्लेषा स्वाती ध्रुव रेवती मघा इन्हों नक्षत्रोंमें और शुक्रवार सोमवारमें रोगमुक्तके स्नानका निषेध है ॥ और अशुभ नक्षत्रमें स्नान करणा श्रेष्ठ है और स्थिर लग्न होवे तथा पापग्रह सातमें होय तो रोगमुक्तस्नान शुभ है ॥ १३ ॥

**द्रव्यंसंव्यवहारतोलघुचरैर्योज्यंचरांगेबुधेधर्माष्टात्मजगेथतस्यहरणेहस्तोरविज्ञः कुजः॥ संक्रांतिर्भरणीत्रिपुष्करयमौकुंभांत्ययोश्चंद्रमावृद्धिश्चेतिशुभाविदूनङ्हयत्कुर्याद्दणंतत्स्थिरम् ॥ १४ ॥**

अथव्यवहारद्रव्यं वृत्तेनैकेनाह। द्रव्यमिति।द्रव्यंसुवर्णादि संव्यवहारतःकुसीदव्यवहारेण लघुचरैर्नक्षत्रैर्योज्यं देयमित्यर्थः । क्व चरांगेचरलग्ने । कस्मिन्सति बुधेधर्माष्टात्मजगेसति धर्मोनवमम् अष्टमंप्र० आत्मजः पंचमम् एष्वन्यतमस्थानगतेसतीत्यर्थः । अन्यत्पूर्वोक्तंज्ञेयम् अथानंतरंतस्यप्रयुक्तस्यहरणंपुनर्ग्रहणंतस्मिन्विषये । हस्तोनक्षत्रं रविःरविवारः ज्ञोबुधवारः कुजोभौमवारः संक्रांतिःसूर्यसंक्रमणदिनं भरणीप्रसिद्धा त्रिपुष्करोयोगः यमोयमलयोगः त्रिपुष्करयमलयोगौग्रंथांतरेप्रसिद्धौ । रत्नमालायाम्

"विक्रमचरणंधिष्ण्यंभद्रातिथिर्यदिसंस्पृशेत्सुरगुरुशनिक्ष्मापुत्राणांकथंचनवासरे॥मुनिभिरुदितः सोयंयोगस्त्रिपुष्करसंज्ञकः" इत्यादि ॥ कुंभांत्ययोश्चंद्रमाः धनिष्ठापंचकं वृद्धिर्वृद्धियोगोपिशुभः हस्तादयोत्रस्वकीयद्रव्यग्रहणेशुभाः विदूनेवुधादिनांविना इहहस्तादौयद्दणंकुर्यात्ततस्थिरंस्यात् । तथाचोक्तं "चरैः क्षिप्रैश्वरेलग्नेवुधेधर्मसुताष्टमे ॥ व्यवहारंविनाद्रव्यप्रयोगोमुनिभिः स्मृतः ॥ भरण्यांसंग्रहंकुर्यात्पंचकेज्ञेत्रिपुष्करे ॥ ऋणकर्मचरैः क्षिप्रैर्ऋणच्छेदः कुजेहितः ॥ पंचकेपंचगुणितंत्रिगुणंचत्रिपुष्करे ॥ यमलेद्विगुणंप्रोक्तंहानिवृद्ध्यादिकंबुधैः ॥ ऋणंभौमेनकुर्वीतनदेयंबुधवासरे ॥ ऋणच्छेदं कुजेकुर्यात्संचयंसोमनंदने॥हस्तार्कवारेसंक्रातौयद्दणंस्यात्कुलेषुतत् ॥ वृद्धियोगेतथाज्ञेयमृणच्छेदंतुकारयेत्" इति ॥ १४ ॥

भा०-लघु चर नक्षत्रोंमें व्याज लेके द्रव्यको देणा शुभ है॥ और चर लग्नमें और बुध ९ । ८ । ५ इन्हों स्थानोंमें होय तो द्रव्य देणा शुभ है ॥

अब पीछा लेणेके मुहूर्तको कहतेहैं ।

भा०-हस्त सूर्य बुध भौम संक्रांति भरणी त्रिपुष्कर योग और यमयोग यह दोय योग और ग्रंथोंमें प्रसिद्ध हैं-और पंचक-वृद्धियोग ये हस्तादिक पाछो द्रव्य लेणेमें शुभ हैं ॥ और बुधवार विना इन्हों हस्तादिकोंमें ऋण करै तो यह ऋण स्थिर होय ॥ १४ ॥

**तीक्ष्णोग्रध्रुवमिश्रवायुषुधनंनष्टादिकंनैतिकाद्भेब्ध्यातेत्रिखशेषयोर्नगतमेत्यंत्यांबुशुद्धौक्षिपेत् ॥ विद्यांप्रोक्तवदिष्टदेवतिथिभेथ द्वीशमूलध्रुवैर्मृद्वश्वीज्यकरांबुपैःसुजलखाञ्जांगेतरून्रोपयेत् ॥ १५ ॥**

अथतीक्ष्णादिषुनष्टादिद्रव्यस्यप्राप्तिंतथाद्रव्यनिक्षेपंवृत्तार्द्धेनाह । तीक्ष्णेति । तीक्ष्णोग्रध्रुवमिश्राणिपूर्वोक्तानि वायुःस्वाती एषुनष्टादिकंधनंनष्टप्रयुक्तविनिक्षिप्तादिकंसुवर्णादिकंद्रव्यंनैति । तथाकात्रोहिणीनक्षत्रात् भेइष्टनक्षत्रेऽब्ध्यातेचतुर्भक्तेसातित्रिखशेषयोः गतंनएति । अथद्रव्यनिक्षेपमाह । अंत्यांबुशुद्धौक्षिपेत् धनमित्यनुषंगः अंत्यं द्वादशम् अंबुचतुर्थम् अनयोः शुद्धिःपापराहित्यं तस्यांसत्यांक्षिपेत् निक्षिपेदित्यर्थः । तथाचोक्तं "साधारणोग्रतीक्ष्णेषुस्वात्यांद्रव्यंनलभ्यते ॥ दत्तंप्रयुक्तंनिक्षिप्तंनष्टमित्याहनारदः" ॥ अथनृसिंहादिमंत्रविद्यासाधनमुहूर्त्तंतथावृक्षारोपणमुहूर्त्तमुत्तरार्द्धेनाह । विद्यामिति । विद्यांमंत्रविद्यां प्रोक्तवत्वेदविद्योक्तभादौ विद्यांमौञ्ज्युक्तभादौ इत्याद्युक्तेः॥तथाइष्टस्वदेवतिथिभेस्वेष्टदेवतिथिनक्षत्रेसाधयेत् गुरुमुखात्गृह्णीयादित्यर्थः तत्रआगमोक्तमंत्रग्रहणेअनध्यायदोषोनास्ति । तत्तुस्वदेवतिथिभेइत्यनेनैवपदेनपरिहृतम् । तथाचोक्तं "मृदुध्रुवचराक्षिप्रैर्वारार्कौधर्मसत्क्रिया ॥ कार्याविद्योक्तभैर्दीक्षास्वदेवतिथिभेषुच" इति ॥ अथवृक्षारोपणमाह । द्वीशंविशाखा मूलंप्रसिद्धं ध्रुवमृदूनि पूर्वोक्तानि अश्विनीप्रसिद्धा इज्यःपुष्यः करोहस्तः अंबुपःशततारा एभिर्नक्षत्रैः तरू-

न्नृपादपान्रोपयेत् । कस्मिन् सुजलखाब्जांगे अंगेऽब्जःअब्जांगम् अंगंलग्नंतस्मिन्नब्जः जलचरराशिश्चंद्रोवातदब्जांगमुच्यते । जलंचखंचजलखे शोभनेजलखेयस्यततसुजलखं तच्चतत्अब्जांगंचसुजलखाब्जांगंतस्मिन् शोभनेपापग्रहराहिते: जलखेचतुर्थदशमेयस्याब्जांगस्यतस्मिन्नित्यर्थः । शेषंपूर्ववत् ॥ १९ ॥

## अब नष्ट द्रव्यकी प्राप्ति और द्रव्यनिक्षेपका मुहूर्त कहतेहैं ।

भा०-तीक्ष्ण-उग्र ध्रुव-मिश्र-स्वा० इन्हों नक्षत्रोंमें गया द्रव्य नहीं मिले ॥ और रोहिणी नक्षत्रसे दिन नक्षत्रतक गणके ४ चारका भाग देणेसे शेष ३ । १० रहैं तो गया द्रव्य नहीं मिले ॥ और ४ चौथे १२ बारमें कोई ग्रह नहीं होयतो द्रव्य सुपणो शुभ होय । मौंजीके मूहूर्तमें इष्टदेवकी तिथि नक्षत्रादिकोंमें गुरुसे विद्या ग्रहण करणी ॥

## अब वृक्ष लगानेका मुहूर्त कहतेहैं ।

भा०-वि० मू० मृदु ध्रुव अश्वि० पुष्य० ह० श० इन्हों नक्षत्रोंमें और ४ । १० स्थानोंमें शुभ ग्रह होंय और लग्नमें जलचर राशि होय वा चंद्रमा होय तब वृक्षलगाना शुभ होय॥१५॥

**उद्वाहर्क्षहरित्रयादितिहयेज्यर्क्षैस्तडागादयोज्ञेज्याब्जैस्तनुगैः सितेदशमगेसिध्यंतिसद्वासरे ॥ राजेक्षाश्रवणत्रयध्रुवमृदुक्षिप्रैःस्वकेंद्रायगैःसौम्यैःशांतिकपौष्टिकेसचरभैरेतैःसुधर्मोदये ॥ १६ ॥**

अथवापीकूपादीन्वृत्तार्द्धेनाह । उद्वाहेति । उद्वाहर्क्षाण्येकादशसंख्यानिपूर्वोक्तानि हरित्रयंश्रवणत्रयम् आदितिःपुनर्वसुः हयोऽश्विनी इज्यःपुष्यः एभिस्तडागादयोजलाशयाःसिध्यंति । कैःज्ञेज्याब्जैस्तनुगैःज्ञोबुधः इज्योगुरुः अब्जश्चंद्रःजलचरराशिश्च एतैस्तनुगैःलग्नगतैः । कस्मिन्सति सितेदशमगेसतिशुक्रेदशमगेसति । क सद्वासरे सद्गहवासरेइत्यर्थः । तथाचोक्तं "चित्रास्वातिपुनर्वसूमृगशिरोमूलाश्विनीरोहिणीहस्तःपुष्यधनिष्ठिकाशतभिषग्मित्रोत्तरारेवती ॥ एतेषुश्रवणान्वितेषुमकरेलग्नेचकुंभेझषेवापीकूपजलाशयादिखननंशस्तंप्रशस्तेदिने" इति॥ अन्यच्चोक्तं "सर्वतोयाशयारंभःकर्तव्यो विबलैःखगैः ॥ लग्नस्थेज्ञेथवाजीवेलग्नभेब्देस्थितेखगे" इति ॥ अथोत्तरार्द्धेनराजदर्शनशांतिकपौष्टिकंचाह॥राजेक्षेति । श्रवणत्रयध्रुवमृदुक्षिप्रैर्नक्षत्रैःराजेक्षाराजदर्शनंकार्यम् । सुगमम् । पुनःकैःसौम्यग्रहैर्द्विकेंद्रायगैः :लग्नात् द्वि २ केंद्रा १,४, ७, १० य ११ गैः शुभग्रहैरित्यर्थः । शेषंप्राग्वत् । शांतिकपौष्टिके आह । शांतिकपौष्टिकेएतैरेवनक्षत्रैः श्रवणत्रयादिभिर्विधेये । कथंभूतैरेभिः सचरभैः चरनक्षत्रसहितैः । कस्मिन्सति सुधर्मोदये शोभनःपापरहितःधर्मोनवमोयस्यससुधर्मः सचासावुदयश्चस तथा उदयो लग्नंतस्मिन्नित्यर्थः । शेषंपूर्ववत् ॥ १६ ॥

## अब कूप वापीका मुहूर्त कहतेहैं ।

भा०-विवाहके नक्षत्रोंमें और श्र० ध० श० पुन० अश्वि० पुष्य० इन्हीं नक्षत्रोंमें और बुध वा गुरु वा चंद्र वा जलराशिलग्नमें होय-और शुक्र१० दशममें होय-और शुभग्रहका वार होय तब जलाशय शुभ होय ॥

## अब राजासे मिलनेका और शांतिकपौष्टिकका मुहूर्त कहतेहैं ।

भा०-श्र० कृ० ध० श० ध्रुव मृदु क्षिप्र इन्हीं नक्षत्रोंमें राजदर्शन श्रेष्ठ है ॥ परंतु लग्नसे २ । १ । ४ । ७ । १० । ११ स्थानोंमें शुभ ग्रह होय तो शुभ होय और श्र० ध० श० मृदु ध्रुव क्षिप्र चर इन्हीं नक्षत्रोंमें और ९ नवमें पापग्रह नहीं होय तो शांतिक पौष्टिक शुभ होय ॥ १६ ॥

दिव्यंनैवमलिम्लुचेविधुसितेज्यास्तेरवावष्टमेमंदाराह्निखलोदये स्थिरतनौकुर्यात्कृतेदोन्यथा॥ श्रीशैलग्रहणायनेषुविषुवेसंकीर्ण-जाताबुपाकृत्युत्सर्गवधूप्रवेशनगयागोदासुनित्याब्दिके ॥ १७ ॥

अथवृत्तार्द्धेनदिव्यमाह । दिव्यमिति । मलिम्लुचेमासे विधुसितेज्यास्ते विधुश्चंद्रःसि-तःशुक्रः इज्योगुरुस्तेषामस्ते विधोरस्तःकृष्णपक्षेभवति । रवावष्टमेगोचरेणसूर्येऽष्टमे मंदा-राह्निशनिभौमदिने खलोदयेपापराश्युदये यद्वा उदयेखलःखलोदयस्तस्मिन्स्थिरलग्ने दिव्यंनैवकुर्यात् । अत्रदिव्येकृतेसति अदोदिव्यमन्यथाविपरीतंस्यात् । असत्यवा-दिनोजयकरोभवतीत्यर्थः । अर्थादन्यत्रकर्तव्यमितिसिद्धम् । लग्नबलंप्राग्वत् । अथ गुरुशुक्रयोर्मौढ्यदोषःकुत्रकुत्रनास्तीतिवृत्तार्द्धेनाह । श्रीशैलःप्रसिद्धः यत्रमल्लिकार्जुना-भिधानंलिंगमस्ति।ग्रहणंसूर्यचंद्रयोः अयनेदक्षिणोत्तरे विषुवंमेषतुलासंक्रमः संकीर्णजा-तिर्हीनजातिः उपाकृतिरुपाकर्म उत्सर्गश्छंदसामुत्सर्गः वधूप्रवेशनंप्रसिद्धं गयाप्रसिद्धा गोदागोदावरी नित्याब्दिकं प्रतिवर्षेयत्क्रियते यथानवरात्रम् ॥ १७ ॥

## अब दिव्यका मुहूर्त कहतेहैं ।

भा०-मलमासमें-चंद्रमा गुरु शुक्रके अस्तमें-और गोचरसे सूर्य ८ आठमें होय-और शनि भौमके दिनमें-और पाप राशिके उदयमें स्थिर लग्नमें-इन्होंमें जुआ नहीं रमणा ॥ और करेतो विपरीत होय जिसमें झूठ बोलनेवाला जीते ॥ और श्रीशैलमें-ग्रहणमें-दक्षिणायन उत्त-रायणमें-और मेष तुला संक्रांतिमें-हीनजातिमें-उपाकर्ममें-उत्सर्गमें-वधूप्रवेशमें-गयामें गोदावरीमें-और नित्याब्दिक कर्ममें जैसे नवरात्रि वगैरेमें ॥ १७ ॥

ईशानाह्निबलौहरेः शयनपर्यावर्तनेनैत्यकेयानेजीर्णगृहेवरोहदम-नारोपेपवित्रार्पणे॥ चातुर्मास्यविधौनजीवसितयोर्मूढत्वदोषोघ्र-कासूत्साहांबरधारणेषुगदितोगर्भादिसप्तस्वपि ॥ १८ ॥

ईशानेति। ईशानाहिबलिः ईशानबलिःप्रसिद्धः अहिबलिःसर्पबलिः हरेःशयनपर्यावर्तनेविष्णोःशयनमाषाढशुक्लद्वादश्यांभवति। पर्यावर्तनं भाद्रपदशुक्लद्वादश्यां भवति। नैत्यकं यानंनित्यगमनं जीर्णगृहंप्रसिद्धम् अवरोहः देवानांदो .रोहःपूजाविशेषःदमनारोपश्चैत्र्यां पवित्रार्पणंश्रावण्यां चातुर्मास्यविधौ चातुर्मास्यव्रते अष्टकाःपर्वणियाऋक्षनाम्नांमासानांकृष्णाष्टम्योष्टकाः मार्गपौषमाघफाल्गुनानांकृष्णाष्टम्यइत्यर्थः। उत्साहाःपुत्रोत्पत्त्यादयः अंशुकधारणंवस्त्रधारणम् एषुजीवसितयोर्गुरुशुक्रयोर्मूढत्वदोषोनास्तीत्यर्थः। न केवलमेषु गर्भादिसप्तस्वपिगर्भाधानाद्यन्नप्राशनांतेषुसप्तसुसंस्कारेषुमूढत्वदोषोनगदितः गर्भाद्यन्नाशनांतेष्वित्यत्रश्लोकेयद्यप्युक्तं तथाप्यत्रप्रसंगादुक्तम्। तथा चगर्गः "नित्ययानेगृहेजीर्णेप्राशनेपरिजीर्णके॥ वधूप्रवेशमांगल्येनमौढ्यंगुरुशुक्रयोः"॥ भृगुः "उपाकर्मोपसर्जनंपवित्रदमनार्पणम्॥ अवरोहः सहेमंतःसर्पाणांबलिरष्टकाः॥ ईशानस्यबलिर्विष्णोःशयनंपरिवर्तनम्॥ कुर्याच्छुक्रगुरोर्मौढ्येपीतीतिसुविनिश्चयात्"॥ धर्मप्रदीपे "गोदावर्यांगयायांचश्रीशैलेग्रहणद्वये॥ अयनेविषुवेचैवचातुर्मास्यव्रतेषु च॥ उत्सवेषुचसर्वेषुसीमंतऋतुकर्मणि॥ सुरासुरेज्ययोश्चैवमौढ्यदोषोनविद्यते"॥ कालनिर्णये "नष्टेशुक्रेतथाजीवेसिंहस्थेचबृहस्पतौ॥ कार्याचैवंस्वदेव्यर्चाप्रत्यब्दंकुलधर्मतः"॥ मत्स्यपुराणे "मौढ्येपिचप्रकर्तव्यामिश्रजातिक्रियाःशुभाः॥ सुरेज्यशुक्रयोर्वर्णीक्रियाश्चौलादिकानच" इति॥ १८॥

भा०-और ईशानबलिमें-सर्पबलिमें-हरिशयनमें-हरिशयनसंज्ञक आषाढशुक्ल १२ द्वादशीमें॥ और पर्यावर्तनसंज्ञकभाद्रपदशुक्ल ११ एकादशीमें॥ और नित्ययात्रामें-जीर्णघरमें और देवताओंके दोलारोहमें-और दमनारोपणमें और पवित्रार्पणमें-चातुर्मास्य व्रतमें-और मार्गशीर्ष पौष माघ फाल्गुन महीनोंकी कृष्णपक्षकी अष्टमीमें-उत्सवमें-वस्त्रधारणमें-इन्होंमें तथा पूर्वोक्त श्रीशैलादिकोंमें गुरु शुक्रके अस्तका दोष नहीं होय॥ और गर्भाधानादि सप्त ७ संस्कारोंमेंभी गुरु शुक्रके अस्तका दोष नहीं होय॥ १८॥

**शुक्रेज्यास्तमयेऽधिकक्षयजनुर्मासेषुजन्मर्क्षकेनापूर्वामरतीर्थदर्शनमियाद्गोदागयाभ्यामृते॥ एष्वाषाढसहस्यविष्णुशयनेष्वप्यंतकर्मत्यजेद्यद्वर्षाधिकलंबितंभवतितद्गोदागयातोन्यतः॥ ८८॥**

अथतीर्थयात्रानिषेधंप्रेतकर्मनिषेधं च सापवादंवृत्तेनैकेनाह। शुक्रेति। शुक्रेज्ययोः अस्तसमये अधिकः अधिमासः क्षयःक्षयमासः जनुर्मासोजन्ममासः तेषु जन्मर्क्षके जन्मनक्षत्रे अपूर्वंप्रथमं तीर्थामरदर्शनंतन्निमित्तं नइयान्नगच्छेत्। काभ्यामृते गोदागयाभ्यामृते गोदागययोर्दर्शनंसदैवकुर्यादित्यर्थः। प्रेतकर्मनिषेधमाह। एष्विति। एषुगुरुशुक्रास्तादिषु आषाढःप्र० सहस्यःपौषः विष्णुशयनेष्वपियद्वर्षाधिकलंबितंप्रेतकर्मभवतितत्त्यजेत्। गोदागयातोन्यतः गोदागययोःसदैवकार्यम्। आषाढशुक्लद्वादश्यादि कार्तिकशुक्ल

द्वादशीपर्यंतंविष्णुशयनम् । तथाचोक्तं "बाल्येवायदिवावृद्धेशुक्रेचास्तमुपागते ॥ मलमासइवैतानिवर्जयेद्देवदर्शनम्" ॥ व्यासः "अधिमासेचजन्मर्क्षेनष्टयोर्गुरुशुक्रयोः ॥ तीर्थयात्रानकर्तव्यागयांगोदावरींविना ॥ मलमासेप्यनावृत्तंतीर्थस्नानंविवर्जयेत् ॥ अनादिदेवतांद्रष्टुंशुचिःस्यान्नष्टभार्गवे" ॥ तीर्थखंडे "गुरुशुक्रास्तादिदोषःप्रोक्तोय-स्तीर्थयायिनाम् ॥ अपूर्वयायिनामेषनत्वसौपूर्वगामिनाम्" ॥ पितृखंडे "शुक्रस्या-स्तमनेचैवदेवेज्यस्यतथैवच ॥ प्रेतकार्यंप्रदुष्येतप्रथमंवत्सरंविना" ॥ मांडव्यः "मलिनेजन्ममासेवामौढ्येवागुरुशुक्रयोः ॥ तीर्थयात्रानकर्तव्यागयांगोदावरींविना" ॥ गरुडपुराणे "नकुर्याद्गुरुशुक्रास्तेपुष्येस्वापेमलिम्लुचे ॥ विलंबितंप्रेतकार्यंगयांगोदावरीं विना" ॥ मेधातिथिः "अस्तंगतेगुरौशुक्रेपुष्याषाढाधिमासके ॥ प्रेतकार्यं नकुर्वीत गयांगोदावरींविना" ॥ प्रेतमंजर्यां "प्रेतकार्याणिसर्वाणिव्रतस्नानजपादिकम् ॥ वर्ज्यंशुक्रेज्ययोरस्तेगयांगोदावरींविना" इति ॥ १९ ॥

### अब तीर्थयात्रा और प्रेतकर्मका सापवादनिषेध कहतेहैं ।

भा०-गुरुशुक्रके अस्तमें-अधिकमासमें-क्षयमासमें-जन्ममासमें-जन्मनक्षत्रमें । प्रथम यात्राको और प्रथम देवदर्शनको नहीं करणा ॥ परंतु गोदावरीमें और गयामें दोष नहीं है और प्रथम कहेभयेमें और आषाढ पौष विष्णुशयनमें वर्ष निकलनेके बाद प्रेतकर्म नहीं करणा॥ परंतु गोदा गयामें करे तो दोष नहीं है ॥ १ ॥

इति मार्तण्डदर्शिन्यां मिश्रप्रकरणम् ॥

---

**पर्वाग्रादियुगष्टमीतितिथयोमध्वादिपक्षद्वयेऽनध्यायाश्चरसंक्रमा-अथमधौवह्निश्चशुक्रेयमः ॥ राधेऽग्निस्त्वसितोयमःशुचिदृगाशा-र्कास्त्रयोदश्यथोमार्गेकृष्णनगग्रहाविषदृगंकाशाग्नयःकीर्तिताः १**

अथानंतरंशांतिप्रकरणमारभ्यते । छिद्राण्येतानिविप्राणांयेऽनध्यायाः प्रकीर्तिताः ॥ छिद्रेभ्यः स्रवतिब्रह्मब्राह्मणेनतदर्जितम् ॥ तत्कालेतस्यरक्षांसिश्रियंब्रह्मयशोबलम् । सर्वमादायगच्छंतिवर्जयंतीप्सितंफलमित्यनध्यायेपठनादौप्रसंगात्मौंज्यादिनिषेधाच्चवृ-त्तद्वयेनानध्यायानाह । पर्वेति । पर्वअमापूर्णिमा । किंलक्षणंपर्व अग्रादियुक् अग्रंप्रतिप-त्तआदिश्चतुर्दशीताभ्यांयुक्युक्तम् अष्टमीप्रसिद्धा इतितिथयश्चतस्रस्तिथयः मध्वादिप-क्षद्वये मधुश्चैत्रः तदादिषुमासेषुपक्षद्वयंशुक्लकृष्णाख्यंतस्मिनअनध्यायाः स्युः कीर्तिताः कथिताः बुधैरित्यध्याहारः । अथान्यानाह । चरसंक्रमाः चरराशिसंक्रांतयः मेष-कर्कतुलामकरसंक्रांतयइत्यर्थः । मधुश्चैत्रस्तस्मिन्वह्निः वह्निसंख्याकास्तिथिस्तृतीये-त्यर्थः । शुक्रेमासेज्येष्ठेमासे यमःद्वितीया । यत्रप्रकरणेशुक्लकृष्णपक्षनिर्देशोनदृश्यतेतत्र शुक्लपक्षजस्तिथिर्ज्ञेयः। राधेवैशाखेऽग्निस्तृतीयाशुक्ले तुपुनः असितःकृष्णो यमः द्वितीय

शुचिद्दगाशार्काः शुचिराषाढः तस्य दृक्द्वितीया आशादशमी अर्कोद्वादशी त्रयोदश्यपि आषाढशुक्लद्वितीयादशमीद्वादशीत्रयोदशीत्यर्थः । अथमार्गेमार्गशीर्षे कृष्णनगंग्रहौकृष्णसप्तमीनवम्यौ इषद्दगंकाशाग्नयः इषः आश्विनः तस्य दृक् द्वितीया अंको नवमी आशादशमी अग्निस्तृतीया आश्विनशुक्लद्वितीयानवमी-दशमी-तृतीया इत्यर्थः ॥ १ ॥

### अब शांतिप्रकरणमें प्रथम अनध्यायोंको कहतेहैं ।

भा०-१४ । ३० । १५ । १ । ८ इन्हीं तिथोंमें-और चैत्रादिमासोंके शुक्लपक्ष कृष्णपक्षमें-और १ । ७ । ४ । १० इन्हीं संक्रांतियोंमें-चैत्र शुक्ल ३ तृतीयामें-ज्येष्ठ शुक्ल २ द्वितीयामें । और वैशाख शु० ३ तृतीयामें और कृष्ण २ द्वितीयामें-और आषाढ शुक्लपक्षकी २ । १० । १२ । १३ तिथोंमें-और मार्गशीर्ष कृष्ण ७ । ९ इन तिथियोंमें-और आश्विन मासके शुक्ल पक्षकी २ । ९ । १० । ३ इन तिथियोंमें अनध्याय है ॥ जहां शुक्ल कृष्णका निर्देश नहीं होय वहां शुक्ल पक्ष लेना चाहिये ॥ १ ॥

**पौषेशस्त्वसिताद्दगंकमुनयोंत्येकृष्णखेटाद्रिदृङ्माघेर्काब्धिद्दगद्रयस्त्वसितजाबाह्वंकपृथ्वीधराः ॥ ऊर्जेद्व्यंकरवीश्वराअसितजाद्दग्विश्वसूर्यानभस्येग्निःकृष्णद्दगद्रिविश्वनवमीपैत्रंयमोन्यःश्रवाः ॥ २ ॥**

पौषेति । पौषेशः पौषस्यईशः एकादशीशुक्ला तुपुनः असिताकृष्णा द्दगंकमुनयः द्वितीयानवमीसप्तम्यः अंत्येफाल्गुने कृष्णखेटाद्रिदृक् खेटोनवमी अद्रिःसप्तमी दृक् द्वितीया एषांसमाहारः खेटाद्रिदृक् कृष्णंचततखेटाद्रिदृक्चतथा कृष्णनवमीसप्तमीद्वितीयाइत्यर्थः । माघेर्काब्धिद्दगद्रयः अर्कोद्वादशी अब्धिश्चतुर्थी दृक्द्वितीया अद्रिः सप्तमी एतेशुक्लाः । तुपुनः असितजाबाह्वंकपृथ्वीधराः असितजाः कृष्णपक्षजाः बाह्वंकपृथ्वीधराः बाहुर्द्वितीया अंकोनवमी पृथ्वीधरः सप्तमी ऊर्जेकार्तिकेद्व्यंकरवीश्वराः द्विर्द्वितीया अंकोनवमी रविर्द्वादशी ईश्वरएकादशी एतेशुक्लाः तुपुनः असितजाः कृष्णपक्षजाः द्दग्विश्वसूर्याः दृक्द्वितीया विश्वेत्रयोदशी सूर्योद्वादशी नभस्येभाद्रपदे अग्निस्तृतीया शुक्ला कृष्णद्दगद्रिविश्वनवमी दृक्द्वितीया अद्रिःसप्तमी विश्वेत्रयोदशी नवमी पैत्रंमघा यमोभरणी अन्यःशुक्लः श्रवाः श्रवणः भाद्रपदशुक्लश्रवणइत्यर्थः ॥ २ ॥

भा०-पौष शुक्ल ११ एकादशी-पौष कृष्ण २ । ९ । ७ और फाल्गुन कृष्ण ९ । ७ । २ और माघशुक्ल १२ । ४ । २ माघकृष्ण २ । ९ । ७ और कार्तिक शुक्ल २ । ९ । १२ । ११ । और कार्तिक कृष्ण २ । १३ । १२ भाद्रपद शुक्ल ३ भाद्रकृष्ण २ । ७ । १३ । ९ और मघा-भरणी-भाद्रपद शुक्ल श्रवण इतने अनध्याय हैं ॥ २ ॥

**योनध्यायतिथिःसपूर्वदिवसेस्तात्प्राङ्मुहूर्तोन्मितोन्यस्मिन्वा-**

**दिवसेक्षणत्रयगतोब्रह्मेहनैवाभ्यसेत् ॥ पर्वाग्रादियुगष्टमीतिच तिर्थीस्त्यक्त्वेषुशास्त्रस्मृतीर्वेदांगानिसमभ्यसेच्चनिखिलेषूक्तंपठे-न्नैत्यकम्॥ ३ ॥**

अथैषांनिर्णयंवृत्तेनैकेनाह। यइति। यःकश्चिदनध्यायतिथिः सपूर्वदिवसेऽस्तात्सूर्यास्तात्प्राक्मुहूर्त्तोन्मितः स्यात्। अत्रपूर्वदिवसेब्रह्मवेदंनोपठेत्। वाइत्यथवा अन्यस्मिन्दिवसेपरदिवसेक्षणत्रयगतोभवति। अत्रास्मिन्दिवसेब्रह्मनोसंपठेत् पर्वाग्रादियुगष्टमी पूर्ववत्पदविभागः इतिचतिर्थीस्त्यक्त्वाएषुअनंतरोक्तेषुअनध्यायेषुशास्त्रस्मृतीर्वेदांगानिसमभ्यसेत्। सुगमम्। निखिलेषुसर्वेष्वनध्यायेषुउक्तंपठेत्। नैत्यकंचपठेत्। उक्तमिति। यथाअमावास्यायामश्वस्तुजपेद्व्याहृतिपूर्विकांगायत्रींसप्रणवांसकृत्त्रिर्वारक्षोघ्नीः पित्र्यमंत्रान् पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणि नैत्यकंसंध्याहोमब्रह्मयज्ञादि। तथाचमनुः "वेदोपाकरणेचैवस्वाध्यायेचैवनैत्यके ॥ ननिरोधोस्त्यनध्यायेहोममंत्रजपेषुच" इति ॥ वेदोपाकरणानिअंगानि । स्मृतिरत्नावल्यां "नित्येजपेचनांगेचक्रतौपारायणेपिच ॥ नानध्यायोऽस्तिवेदानांग्रहणेग्राहणेस्मृतः ॥ देवतार्चनमंत्राणांनानध्यायः स्मृतः सदा ॥ नानध्यायेजपेद्वेदान्रुद्रांश्चैवविशेषतः ॥ पौरुषं पावमानं चगृहीतनियमादृतः" इति ॥ स्मृत्यर्थसारे "चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषुच ॥ वेदांगन्यायमीमांसाधर्मशास्त्राणिचाभ्यसेत्" इति ॥ कूर्मपुराणे ॥ इंदौवृद्धिक्षयंप्राप्तेब्रह्मयज्ञंनकारयेत् ॥ नजपेद्वैदिकंमंत्रंगायत्र्यष्टोत्तरंशतम्" इति ॥ स्मृतिरत्नावल्याम् "अल्पंजपेदनध्यायेपर्वण्यल्पतरंजपेत्" इति ॥ ३ ॥

अब इन अनध्यायोंका निर्णय करतेहैं।

भा०-जो पहिले दिन सूर्यास्तसमयसे पूर्व अनध्याय तिथि एक मुहूर्तमात्र होयतो पूर्व दिनमें वेदको नहीं पढणा ॥ और पर दिनमें तीन मुहूर्त होयतो उस दिनमें वेदको नहीं पढणा और १४ । ३० । १५ । १ । ८ इन्हों तिथोंके विना अन्य अनध्यायोंमें शास्त्र स्मृति वेद वेदांगको पढणा ॥ और अमावास्यादिकमेंभी श्राद्धप्रकरणप्राप्त वेद पढनेका दोष नहीं है ॥ और नित्य ब्रह्मयज्ञादिकमेंभी वेद पढणेका दोष नहीं है ॥ ३ ॥

**बभ्र्वोत्वेणखराम्यजांबहिगजाश्वोष्ट्रांत्यमूकोन्नतानोयानांतरिते त्र्यहं प्लवखगाद्यैर्नाचसज्योतिषम् ॥ स्त्रीगोस्थ्यंतरितेहरुत्सवनिशीथाशौचमार्गेषुचच्छायायांनकपित्थशाल्मलिमधुश्लेष्मातकादेःपठेत् ॥ ४ ॥**

अथनैमित्तिकाननध्यायान्वृत्तद्वयेनाह। बभ्र्विति। बभ्रुर्नकुलः ओतुर्मार्जारः एणो हरिणः खरःप्रसिद्धः अग्निःप्रसिद्धः अजोमेषः अंबुउदकम् अहिःसर्पः गजः प्रसिद्ध अश्वःप्र० उष्ट्रः प्र० अंत्योंत्यजातिः रजकचर्मकारादयः मूकःप्र० उतोमत्तः अनःशकटः

यानंशिबिकादि एभिरंतरितेगुरौसति त्र्यहंत्रिरात्रमनध्यायः प्लवोमंडूकः खगः पक्षी आदिशब्दात्क्रोधादि एभिरंतरितेसज्योतिषमनध्यायः। अयमर्थः दिवाअंतरितेसतिसूर्यास्तमानपर्यंतमनध्यायः। रात्रावंतरितेरात्रिशेषपर्यंतमनध्यायइत्यर्थः। स्त्रीगोऽस्थ्यंतरितेऽह्नः स्त्रीप्र० गौःप्र० अस्थिप्राण्यंगम् एभिरंतरितेअहर्दिनमहोरात्रमनध्यायः। उत्सवोमहोत्सवोविवाहादिकः निशीथंमध्यरात्रम् अशौचंसूतकं मार्गोध्वा एषुनपठेत्। चपुनः कपित्थशाल्मलिमधुश्लेष्मातकादेश्छायायांनपठेत्। सुगमम्। आदिशब्दात्कोविदारविभीतकैरंडादीनांग्रहणम्॥ ४॥

### अब नैमित्तिक अनध्यायोंको कहतेहैं।

भा०-नकुल-बिल्ली-हरिण-गधा-अग्नि-मेष-जल-सर्प-हाथी-घोडा-ऊंट-धोबी-चमार आदिक-गुंगा-उन्मत्त-गाडी-पालकी-इतनी वस्तु गुरुके ओटमें आवेतो तीन दिनतक नहीं पढणा-और झेडका-पक्षी बीचमें आवेतो नक्षत्रतक नहीं पढणा-और स्त्री गौ हड्डी बीचमें आवेतो एक दिन नहीं पढणा-और महोत्सवमें अर्थात् विवाहादिकमें-अर्द्धरात्रिमें-सूतकमें-मार्गमें-इन्होंमेंभी नहीं पढणा-और कैथ-शाल्मली-महुआ-वहेडादि वृक्षोंकी छायामें नहीं पढणा॥ ४॥

**ग्रामांतःकुणपेश्वशूद्रनिकटेश्राद्धाशनेवक्त्रगेतांबूलेग्रहणाद्गुरुक्षितिपतिप्रांतादुपोत्सर्गतः॥ भूकंपाशनिपाततःपुरदहाद्रिष्टावलोकात्र्यहं गर्जेनार्तवकेत्र्यहंसमयजेसज्योतिरंतेसतः॥ ५॥**

ग्रामांतरिति। ग्रामांतःकुणपेग्राममध्यंकुणपेप्रेतेसतिनपठेत्। श्वशूद्रनिकटेश्वानशूद्रसन्निधौनपठेत्। श्राद्धाशनेश्राद्धभोजनेकृतेसतिजीर्णावधिनपठेत्। वक्त्रगेमुखगते तांबूलेसतिनपठेत्। ग्रहणात्सकाशात्त्र्यहंनपठेत्। तथागुरुक्षितिपतिप्रांतान्मरणात्र्यहं उपोत्सर्गतस्त्र्यहं उपउपाकर्म उत्सर्गश्छंदसामुत्सर्गः तथाउपोत्सर्गतःसकाशात्त्र्यहं भूकंपाशनिपाततस्त्र्यहं भूकंपः प्रसिद्धः अशनिपातोविद्युत्पातः ताभ्यांत्र्यहं पुरदहात्पुरदाहात् स्ववसतिग्रामदाहादित्यर्थः। त्र्यहंरिष्टावलोकात् गंधर्वनगरभूतादिदर्शनात्त्र्यहंनपठेत्। गर्जेनार्तवकेत्र्यहंऋतौभवःआर्तवः नआर्तवःअनार्तवः अनार्तवएवअनार्तवकस्तस्मिन् अकालगर्जनेजातेसतित्र्यहंनपठेत्। समयजेऋतुजेगर्जेसतिसज्योतिर्यथास्यात्तथानपठेत्। दिवागर्जेसतिसूर्यास्तपर्यंतं रात्रौगर्जेसतिसूर्योदयपर्यंतंनपठेदित्यर्थः। सतः अंतेस्वशाखिसत्पुरुषस्यमृतौजातेसतिसज्योतिर्नपठेत्॥ ५॥

भा०-और ग्राममें शव होयतो नहीं पढणा और शूद्रके पास-कुत्तेके पास-श्राद्धमें भोजन करके-अन्न नहीं पचे तहांतक नहीं पढना और मुखमें ताम्बूल रखके नहीं पढना॥ और ग्रहणसे तीन दिन नहीं पढना-और राजाके वा गुरुके मरणेसे तीन दिन नहीं पढना॥ और उपाकर्मसे-उत्सर्गसे-भूकंपसे-बिजलीके पडनेपर तीन दिन नहीं पढना॥ और अपने रहनेके पुर वा ग्रामका दहन होणेसे और गंधर्वनगर भूतादिकोंके

देखणेसे तीन दिन नहीं पढना ॥ और विना ऋतुमें मेघ गर्जे तो तीन दिन नहीं पढना ॥ और ऋतुमें गर्जे तो नक्षत्र वा सूर्यको देखके पढना और स्वशाखाके सत्पुरुषकी मृत्यु होवे तो सज्योति नहीं पढणा ॥ ५ ॥

वाद्योलूकखरार्तजंबुकरवेसाम्नांचवातेजलेनीहारेपतिताभिशस्तनिकटेधावज्जनालोकने॥ग्रामांतेपितृकाननेप्यथसतानूनप्त्रिणीते दिवंतद्व्रतसद्व्रतिनित्र्यहंनचपठेद्भुक्त्वार्द्रपाणिर्नच ॥ ६ ॥

अनध्यायांतरमाह। वाद्येति। वाद्यादीनांरवेशब्देश्रूयमाणेसाम्नांचरवेश्रूयमाणे वाते वातस्यसर्वदाविद्यमानत्वादतिवाते जलेजलमध्येनीहारेधूमरूपोत्पाते पतितोजातिभ्रष्टः अभिशस्तोमिथ्याभिशापीतत्समीपे धावज्जनालोकने धावन्मनुष्यालोकने ग्रामांतग्रामसीमासमीपे पितृकाननेश्मशाने नपठेत्। सतानूनप्त्रिणीतेदिवंस्वर्गंप्रतिइतेगतेमृतेसति त्र्यहंनपठेत्। तानूनप्त्रंनामघृतं यागेयेनयेनऋत्विजासहस्पृष्टंससतानूनप्त्रीतस्मिन्मृतेसति त्र्यहंनपठेत्। तद्व्रतसद्व्रतिनिमृते सद्व्रतंवेदव्रतंचरितंयेनससद्व्रतीतस्मिन्मृतेऽयहं नपठेत। भुक्त्वायावदार्द्रपाणिस्तावन्नपठेत्। अन्येऽनध्यायामूलग्रंथतोऽवगंतव्याः॥६॥

भा०-वाद्यादिकोंके शब्दको सुणते ॥ और सामवेदको सुणते ॥ उल्लूकके बोलते ।श्यालके बोलते ॥ बहुवायु होते। जलमें नीहार होते ॥ और पतितके और अभिशस्तके सामने और दौड़ते मनुष्यको देखते ॥ ग्रामकी सीमाके समीपमें-श्मशानमें-और यज्ञमें जिस २ के साथ घृतको स्पर्श करे उसका नाम सतानूनप्त्री है उसके मरणे पर तीनदिन अनध्याय है ॥ और सद्व्रतीके मरणे पर ३ दिन नही पढणा भोजन करके जहांतक हाथ आर्द्र होय तहांतक नहीं पढना ॥ ६ ॥

रात्र्यर्द्धेमदनोमुनिर्दलयुतेयामेचतुर्थ्यांद्यकेप्राग्रात्रौपठनंह्युपाकरणतोमासंनिशाप्राग्दले॥श्वोनध्यायइतीहरात्रिपठनंवर्ज्यंसदासंध्ययोश्चौरोपद्रवयामकेत्रिदिवसंदुर्भुक्प्रतिग्राहयोः ॥ ७ ॥

अथप्रदोषानध्यायानाह। रात्र्यर्द्धेमदनस्त्रयोदशी यस्मिन्दिनेस्यात् मुनिःसप्तमी रात्रेर्दलयुतेयामेसार्द्धप्रहरेयद्दिनेस्यात् अत्रदिनेप्राग्रात्रौपठनंवर्ज्यम्। हिनिश्चयेन उपाकर्मतःसकाशात् मासमात्रं रात्रेःप्राग्दलेपठनंवर्ज्यं श्वोऽनध्यायइतीहइत्यत्ररात्रिपठनं वर्ज्यम्। सदासंध्ययोरुभयोः पठनंवर्ज्यम्। चौरोपद्रवेणउपलक्षितोयामःप्रहरः तस्मिन्पठनंवर्ज्यम्। त्रिदिवसंदुर्भुक्प्रतिग्राहयोः दुष्टभुक्प्रतिग्राहौदुर्भुक्प्रतिग्राहौतयोः दुष्टभोजनदुष्टप्रतिग्राहयोः त्रिदिवसंपठनंवर्ज्यम्। तथाचश्रीधर्मास्मृतिवचनानि "अष्टम्योश्चचतुर्दश्योःपंचदश्योश्चसूतके ॥ शाविप्रतिपदोर्यत्रभयेचैवमहोत्सवे ॥ रोगे युद्धेविवादेचद्यूतेपाथिनिशीथके ॥ नाधीयीताशुचिश्चापिनास्नातश्चनतंद्रितः ॥ उपाकर्म-

णिचोत्सर्गेग्रहणेचंद्रसूर्ययोः ॥ त्रिरात्रंस्यादनध्यायोमृतेभूपेगुरावपि ॥ फाल्गुन्यां पौर्णमास्यांतुचैत्र्यांतुत्र्यहमिष्यते ॥ अनध्यायस्तथाषाढ्यांश्रावण्यांकार्तिकेतथा ॥ तथैवमार्गशीर्षस्यपौर्णमास्यांनसंचरेत् ॥ अशन्याःपतनेकंपेभूमेर्दाहेपुरस्यच ॥ मृगस्यसर्पमार्जारनकुलाद्यश्वदंतिनाम् ॥ अंतरागमनेजोष्ट्रखराणांचत्र्यहंस्मृतम् ॥ पताकातोरणादर्शरथयानजलाग्निनाम् ॥ मूकोन्मत्तादिशूद्राणामंतरागमनत्र्यहम् ॥ नारीणामपिसर्वासांगवांचैवांतरागमे ॥ अहोरात्रमनध्यायोगर्जनेरात्रिसंभवे ॥ द्युगर्जने चरात्रौचापररात्रेदिनंस्मृतम्॥ दिनंतूभयसंध्यायामथास्थ्नांचांतरागमे ॥ पक्षिमंडूकगोश्वाखुनराणांचांतरागमे॥दिनेदिवसशेषःस्याद्रात्र्यांरात्र्याश्चतद्भवेत् ॥ श्वसृगालरवेनॄणां श्रोत्रियागमनेध्वनि ॥ तात्कालिकोऽप्यनध्यायस्तांबूलस्यचभक्षणे ॥ श्राद्धेनिमंत्रितो यस्तुभुक्त्वानाध्ययनंचरेत् ॥ करिष्यंश्चतथाविप्रः प्राग्विप्राणांविसर्जनात् ॥ एतेप्रोक्ता ह्यनध्यायावैदिकास्तांत्रिकास्ततः ॥ प्रवक्ष्यंतेऽष्टमीद्वंद्वेचतुर्दश्यांचकेवलैः ॥ विषुवद्वितयेचैवमयनद्वितयेतथा ॥ नपठेत्पाठयेद्धीमान्पुराणमपिसत्तमः ॥ अष्टम्यांचचतुर्दश्यांयावदस्तमितेरवौ ॥ दिनशेषमनध्यायंवैदिकंपरिकीर्तितम् ॥ तथोदितेदिवारात्रंतत्कालमुदितेतयोः ॥ प्रतिपद्यांचसंक्रांतौतत्कालमखिलासुच ॥ नभोनभस्ययोः कृष्णे मासयोस्त्रिदिनंद्विजः ॥ नसप्तम्यामधीयीतत्रयोदश्यांचपैत्र्ययोः ॥ सदात्रयोदशीयावत्प्राङ्निशियातिथिर्भवेत् ॥ प्राह्णादथापराह्णांतादधीयीतनचाद्विजः ॥अष्टम्यांचचतुर्दश्यांप्रतिपद्यांचवर्जयेत् ॥ धर्मशास्त्रपुराणानिशास्त्रंतात्कालिकंबुधः ॥ विमिश्रितासुकर्तव्यंसप्तम्यादिषुयत्नतः ॥ पुराणाभ्यसनादीनिपंचदश्योश्चवानवा ॥ नांतरागमनेदोषः पुराणादिषुविद्यते ॥ नशस्यतेचतत्कालेघृतंसंप्राश्यवाबुधः ॥ नीयमानंशवंदृष्ट्वामहीस्थंवाद्विजोत्तमः ॥ अकालगर्जितादौचपर्वस्वाशौचकादिषु ॥ अनध्यायाबुधैः कार्या उपरागादिकेषुच ॥ श्वोनध्यायेचशर्वर्यांनाधीयीतकदाचन" इति ॥ स्मृत्यंतरे "प्रदोषे चत्रयोदश्यांनाध्येयंप्रतिपत्स्वपि" ॥ प्रदोषलक्षणं "षष्ठीचद्वादशीचैवअर्द्धरात्रोननाडिका ॥ प्रदोषेनत्वधीयीततृतीयानवनाडिका ॥" अर्द्धरात्रोननाडिकाअर्द्धरात्रात्घटिकयाएकयोनेत्यर्थः । अत्रनैमित्तिकप्रदोषमाह आपस्तंबः " श्रावण्यांपौर्णमास्यामध्ययनमुपाकृत्यमासंप्रदोषेनाधीयीत" इति । प्रदोषः पूर्वरात्रः । तथाचगर्गः "अध्यायानामुपाकर्मश्रावण्यांश्रवणेनवा ॥ यावन्मासंपूर्वरात्रेनाधीयीतकदाचन" इति॥ नारदः "अयनेविषुवेचैवशयनेबोधनेहरेः ॥ अनध्यायंप्रकुर्वीतमन्वादिषुयुगादिषु" ॥ मन्वादयोमत्स्यपुराणेऽभिहिताः "आश्वयुक्छुक्लनवमीकार्तिकीद्वादशीसिता ॥ तृतीयाचैत्रमासस्यतथाभाद्रपदस्यच ॥ फाल्गुनस्यत्वमावास्यापौषस्यैकादशी सिता ॥ आषाढस्यापिदशमीमाघमासस्यसप्तमी ॥ श्रावणस्याष्टमीकृष्णाआषाढस्यापिपौर्णिमा ॥ कार्तिकीफाल्गुनीचैत्रीज्यैष्ठीपंचदशीसिता । मन्वंतरादयश्चैतेदत्तस्याक्षयकारकाः"॥युगादयोविष्णुपुराणदर्शिताः "वैशाखमासस्यतुयातृतीयानवम्यसौका-

तिकशुक्लपक्षे ॥ नभस्यमासस्यचकृष्णपक्षेत्रयोदशीपंचदशीचमाघे॥उपाकर्मणिचोत्सर्गेत्रिरात्रंक्षपणंस्मृतम् ॥ अष्टकासुत्वहोरात्रंमृत्यंतासुचरात्रिषु ॥ मार्गशीर्षेतथापौषेमाघेमासेतथैवच । तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षेतुसूरिभिः" ॥ स्मृतिरत्नावल्यां "चतुर्दश्यांयदापर्वप्रागस्ताद्दृश्यतेरवेः ॥ अनध्यायंप्रकुर्वीतत्रयोदश्यांतुधर्मवित्॥विद्युत्स्तनितवर्षेतुमहोल्कानांतुसंभवे ॥ आकालिकमनध्यायमेतेषुमनुरब्रवीत् ॥ स्तनितंमेघगर्जितम् । अनुराधर्क्षमारभ्यषोडशर्क्षेतुभास्करः ॥ यावच्चरतिवैतावदकालंमुनयो विदुः ॥ कालेवृष्टौचतत्कालमकालेचत्रिरात्रकम् ॥ अतिमात्राथवावृष्टिर्नाधीयीत दिनत्रयम् ॥ अकालवर्षणेजातेजलौकाश्चप्रवर्तते ॥ एकरात्रमनध्यायमिति कात्यायनोब्रवीत् ॥ मेषेचवृषभेचैवतृणाग्रात्स्रवतेजलम् ॥ भूमिद्रावमनध्यायंकुर्वीतवृषकुंभयोः॥ अतऊर्ध्वंद्विपादेषुतृणप्रच्यवनंजलम् ॥ तृणप्रच्यवनंतृणप्रवाहः ॥ चौरैरुपद्रुतेयावत्सग्रामेचाग्निकारिते ॥आकालिकमनध्यायंविद्यात्सर्वाद्भुतेषुच ॥ प्रादुष्कृतेष्वनग्नीषुविद्युत्स्तनितनिःस्वने ॥ सज्योतिःस्यादनध्यायःशेषरात्रौतथादिवा" इति । मनुः "निर्घातेभूमिचलनेज्योतिषांचोपसर्जने ॥ एतानाकालिकान्विद्यादनध्यायानृतावपि"॥ निर्घातआंतरालिकोध्वनिविशेषः । ज्योतिषांचोपसर्जनंचंद्रसूर्ययोःपरिवेषः । आपस्तंबः "प्रतिगृह्यद्विजोवेदानेकोद्दिष्टस्यकेतनम्॥त्र्यहंनकीर्तयेद्ब्रह्मराहोरन्यत्रसूतके" ॥ केतनंनिमंत्रणम् । कूर्मपुराणे "समानविद्येतुमृतेतथाचब्रह्मचारिणि ॥ आचार्येसंस्थितेचापित्रिरात्रंक्षपणंस्मृतम्" ॥ याज्ञवल्क्यः "त्र्यहंप्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबंधुषु ॥ उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेमृते ॥ संध्यागर्जितनिर्घातभूकंपोल्कानिपातने ॥ समाप्यवेदंद्युनिशमारण्यकमधीत्यच ॥ पशुमंडूकनकुलश्वाहिमार्जारमूषकैः॥ कृतेंतरेत्वहोरात्रंशुक्रपातेतथोच्छ्रये" इति । पराशरः "सर्पस्य नकुलस्याथअजमार्जारयोस्तथा ॥ मूषकस्यतथोष्ट्रस्यमंडूकस्यचयोषितः ॥ पुरुषस्यैलकस्यापिशुनोश्वस्यखरस्यच ॥ एषांयोवितत्श्चैवअंतरागमनेकृते ॥ त्रिरात्रमुपवासश्च त्रिरात्रमभिषेचनम्" ॥ अथतात्कालिकाः । "खरोष्ट्रगर्दभोलूकसामबाणार्तनिःस्वने ॥ अमेध्यशवशूद्रांत्यश्मशानपतितांतिके ॥ देशेऽशुचौवर्त्मनिचविद्युत्स्तनितसंप्लवे ॥ भुक्तार्द्रपाणिरंभोंतरर्द्धरात्रेऽतिमारुते ॥ पांसुवर्षेदिशांदाहेसंध्यानीहारभीति ॥ धावतः पूतिगंधेच शिष्टेचगृहमागते॥खरोष्ट्रयानहस्त्यश्वनौवृक्षेरथरोहणे ॥ सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः" इति ॥ अथानध्यायापवादः । मनुः "वेदोपाकरणेचैवस्वाध्यायेचैव नैत्यके ॥ ननिरोधोस्त्यनध्यायेहोममंत्रजपेषुच" इति ॥ ७ ॥

इतिमुहूर्तमार्त्तण्डटीकायांमार्त्तण्डवल्लभायामनध्यायप्रकरणंसमाप्तम् ॥

अब प्रदोषके अनध्यायोंको कहतेहैं ।

भा०-और जिस दिन अर्द्ध रात्रिमें त्रयोदशी होय ॥ और सप्तमी जिस दिन डेढ प्रहर रात्रिमें होय ॥ और जिस दिन चतुर्थी प्रहर रात्रिमें होय उस दिन पूर्व रात्रिमें नहीं पढना ॥

और उपाकर्मसे एक महीनातक पूर्व रात्रिमें नहीं पढना ॥ और अनध्यायके पूर्वकी रात्रिमें नहीं पढना ॥ और संध्यामें सदा नही पढना ॥ और चोरके उपद्रवसे एक प्रहरतक अनध्याय है ॥ और दुष्टभी जन करके दान लेके तीन दिन नहीं पढै ॥ ७ ॥

( इति अनध्यायाः )

**दक्षांगोदरनाभिहृत्सुपतितापल्लीवरांगेहनुंमुक्त्वानुःशुभदास्त्रियाः फलमिदंवामेतरव्यत्ययात्॥ इत्याहुःसरठप्ररोहणफलंपातेन्यथैके वृथापल्ल्यारोहणकेपिवस्त्रसहितंस्नात्वाचरेच्छांतिकम् ॥ १ ॥**

अथ पल्लीसरठयोःप्रकरणम् ॥ ॥ अथपल्लीसरठयोःफलंवृत्तेनैकेनाह । दक्षांगोदरनाभिहृत्सुपतितापल्ली तथाहनुंत्यक्त्वावरांगेउत्तमांगेपतितापल्ली नुःनरस्यशुभदास्यात् । उत्तमांगेहनुंविनासर्वत्रशुभेत्यर्थः । अर्थादन्यत्रनशुभा अन्यांगेषुपुरःपार्श्वपृष्ठेषुनशुभा स्यात् । अथस्त्रियाःविशेषमाह । स्त्रियाःइदंपुरुषोक्तंफलं वामेतरव्यत्ययात्ज्ञेयं वामंवामांगं तयोर्व्यत्ययोवैपरीत्यं तस्मात्पुरुषस्यदक्षांगेयत्फलमुक्तंतत्स्त्रियाःवामांगे ज्ञेयम् । पुरुषस्यवामांगेयदुक्तंतात्स्त्रियादक्षांगेज्ञेयमित्यर्थः। अर्थाद्यत्रांगेवामेतरविभागाभावस्तत्र पुरुषतुल्यंफलंज्ञेयम् । वरांगेतूभयोःसमानमेवफलंवामदक्षिणफलाविशेषात् । सरठफलमाह । इत्याहुःसरठप्ररोहणफलमिति । एवमेवाहुर्मुनयइत्यध्याहारः।सरठस्यप्ररोहणेपल्लीवत्फलमित्यर्थः। पातेसरठस्यपाते अन्यथाविपरीतंफलमाहुःसरठस्यप्ररोहणे यत्फलंतत्तस्यपातेविपरीतफलमाहुरित्यर्थः । एकेवृथा एकेआचार्याःवृथाफलमाहुः । सरठस्यप्ररोहणेएवफलपातेवृथाफलंनशुभंनचाप्यशुभामित्याहुः इत्यर्थः । पल्ल्यारोहणकेपिअन्यथाफलमाहुः । पल्लीपतनेयत्फलंतत्तस्यारोहणेअन्यथाविपरीतफलमाहुः । एकेवृथाफलमाहुः पल्ल्याःपतनेएवफलं प्ररोहणेवृथेत्येकेआहुरित्यर्थः । अथात्रविधिमाह । वस्त्रसहितंस्नात्वाचरेच्छांतिकमिति । सचैलस्नानंकृत्वाशांतिकंशास्त्रोक्तमाचरेत्। तथाचज्योतिर्निबंधे "पल्लीस्पर्शफलंवक्ष्येयदुक्तंब्रह्मणापुरा ॥ ब्रह्मस्थानेभवेद्राज्यं स्थानलाभोललाटके ॥ कर्णयोर्भूषणावाप्तिर्नेत्रयोःप्रियदर्शनम् ॥ नासिकायांसुगंधानिमुखेमिष्टान्नभोजनम् ॥ कपोलयोर्भवेत्सौख्यंहनुदेशेमहद्भयम् ॥ भ्रुकुट्यांविग्रहश्चैव कंठेवाव्यसनागमः ॥ कलिर्वंशेसुखंपृष्ठ्यांदक्षेवामेगदादयः ॥ दक्षांसेविजयोनित्यंवामांसे शत्रुजंभयम् ॥ इष्टलाभोभुजेसव्येकूर्परेमणिबंधके ॥ दक्षेकरतलेद्रव्यंतत्पृष्ठेसद्वयोभवेत् ॥ वामेभुजेकूर्परेचमणिबंधेधनक्षयः ॥ वामेकरतलेहानिस्तत्पृष्ठेचार्थनाशनम्॥ हृदयेराजसंमानंसौभाग्यंदक्षिणेस्तने ॥ दक्षपार्श्वेचभोगाप्तिःस्तनेवामेयशोधनम् ॥ वामपार्श्वेभवेत्पीडावामकुक्षौशिशोस्तथा ॥ दक्षकुक्षौसुतावाप्तिरुदरेचविशेषतः ॥ वस्त्राप्तिर्दक्षकट्यांचवामकट्यांसुखक्षयः ॥ नाभ्यांमनोरथावाप्तिर्बस्तौगर्भच्युतिर्भवेत् ॥ गुह्येमृत्युर्गुदेरोगोदक्षोरौप्रीतिवर्द्धनम् ॥ वामोरौमृत्युतोदुःखंदक्षजानौसुवाहनम् ॥ पशु

हानिर्वामजानौदक्षिणेजवनेसुखम् ॥ क्लेशःस्याद्वामजंघायांस्फिचिदक्षेर्थवृद्धिकृत् ॥ स्फिचिवामेस्त्रीवियोगोदक्षेगुल्फेप्रियागमः ॥ उपप्लवोवामगुल्फेपादयोर्गमनंभवेत्" ॥ अत्रयद्यपिसामान्येनोभयोर्गमनफलमुक्तं तथापिदक्षिणपादेगमनाल्लाभोवक्तव्यः। वामपादेगमनेहानिर्वक्तव्या "पुरोभागेचदुर्वार्त्तानष्टवार्त्ताचपृष्ठतः ॥ वामेहानिर्धनंदक्षेपरितो भ्रमणेक्षितः ॥ वामदक्षिणभागेनयत्फलंकथितंनृणाम् ॥ विपर्ययेणतत्स्त्रीणांज्ञेयंशेषं द्वयोःसमम् ॥ इत्थंपल्ल्याःप्रपतनेफलंज्ञेयंविचक्षणैः ॥ एतदेवफलंविद्यात्सरटस्यप्ररोहणे ॥ पल्ल्याःप्ररोहणेचैवपतनेसरठस्यच ॥ तयोःफलस्यव्यत्यासात्तद्वदेवहिजायते ॥ पल्ल्याःप्ररोहणंरात्रौसरटस्यप्रपातनम् ॥ नातिदुष्टफलंविद्यात्व्याधिमुग्रंविपर्यये ॥ पतनानंतरंयस्यरोहणंयदिजायते ॥ पतनेफलमुत्कृष्टंरोहणेल्पफलंभवेत् ॥ मृत्युयोगे चजन्मर्क्षेविष्टयांपातेचवैधृतौ ॥ चंद्रेष्टमेचसक्रूरेलग्नेविघ्नःप्रजायते ॥ अंगंदक्षिणमारुह्य वामेनोत्तरतिस्फुटम् ॥ तदाहानिकरीज्ञेयाव्यत्ययेनतुहानिदा ॥ चरणादूर्ध्वगोभूयः सद्योरोहतिशीर्षकम् ॥ प्राज्यराज्यंतदादत्तंपल्लीश्वेताविशेषतः ॥ चिंतिताभ्यधिकंलाभं स्थिताभोजनभाजने ॥ पादांगुलीषुसंपाताद्धानिश्चमहतीभवेत् ॥ पल्ल्योःसरटयोर्वापि युग्ममंगेशुभेपतेत् ॥ दंपत्योर्जायतेप्रीतिर्निंद्यभागेवियोगता ॥ शीर्षस्योपरिपतिताशुभायपल्लीसितानान्याः ॥ सितगृहगोधास्पर्शेसर्वेष्वंगेषुशोभनाज्ञेया ॥ कृकलासःपतेद्यस्यमूर्ध्नितद्विघ्नशांतये ॥ मृतसंजीविनीविद्यांजपेन्मुंडितमस्तकः ॥" अथपल्लीसरठयोः शांतिः ॥ "पल्लीसरठयोःस्पर्शेसचैलंस्नानमाचरेत् ॥ पंचगव्यंप्राशयित्वाकुर्यादाज्यावलोकनम् ॥ शस्तेवाप्यथवाशस्तेयदीच्छेदात्मनःसुखम् ॥ पुण्याहवाचनंकृत्वाशांतिकर्म समाचरेत् ॥ प्रतिरूपंसुवर्णेनकुर्याद्वित्तानुसारतः ॥ रक्तवस्त्रेणसंवेष्टयगंधपुष्पैःप्रपूजयेत् ॥ तदग्रेमृन्मयंरम्यंकलशंजलपूरितम् ॥ वस्त्रमाल्यैरलंकृत्यस्थापयेत्तंडुलोपरि ॥ पंचामृतंपंचगव्यंपंचरत्नानिशक्तितः ॥ पंचवृक्षकषायांश्चनिक्षिप्यावाहयेत्ततः ॥ पूजयेद्गंधपुष्पाद्यैर्लोकपालान्क्रमेणच ॥ अग्निसंस्थापनंकृत्वाहोमकर्मसमाचरेत् ॥ मृत्युंजयेनमंत्रेणसमिद्भिःखादिरैःशुभैः ॥ तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम् ॥ अष्टोत्तरशतंवापि कुर्याद्वित्तानुसारतः ॥ अभिषेकंततः कृत्वापावमान्यस्यचद्विजैः ॥ पुण्यवारुणसूक्तैश्च दोषशांत्यैद्विजोत्तमः ॥ धौतांबराणिधृत्वाथस्वर्णवस्त्रतिलान्ददेत् ॥ ब्राह्मणान्भोजयेदित्थंशांतिकर्मकरोतियः ॥ तस्यायुर्विजयोलक्ष्मीः कीर्तिर्वृद्धिः शुभंभवेत् ॥ पल्लीसरठयोः शांतिः कथिताभृगुणापुरा ॥ शौनकायमुनींद्रायलोकानुग्रहकारिणे" इति ॥१॥

इतिमार्त्तण्डवल्लभायांपल्लीसरठयोः शांतिप्रकरणम् ॥

## अब पल्लीका और सरठका फल कहतेहैं ।

भा०-जो आदमीके दक्षिणांगकी तरफ पेट नाभि हृदयमें विषमरी पडे तो शुभ होय ॥ और हिचकी विना माथेपर पडे तो शुभ होय ॥ और पुरुषके दक्षिणमें फल कहा सो स्त्रीके वामभागमें कहणा ॥ और पुरुषके वाममें होय वह स्त्रीके दक्षिणमें होय ॥ ऐसेही

कृकांटियाके चढणेका फल है ॥ और जो कृकांटिया पडेतो विपरीत फल होवै ॥ और कोईक आचार्य सरठके पडनेका कुछभी फल नहीं कहते हैं ॥ पल्ली चढे तो विपरीत फल होय फिर वस्त्रसहित स्नान करके शांति करणी ॥ १ ॥

इति मार्तण्डदर्शिन्यां पल्लीसरठविचारः ॥

---

**स्वर्क्षाच्चंद्रखलास्त्रिखारिषुशुभाःसप्ताद्यगोऽब्जःपुनश्चापुत्राद्व्यय-धर्ममृत्युषुकविःस्वास्तत्रिकोणेगुरुः ॥ सौम्योऽव्यंत्यसमेखिला भवगताःशुक्लेनवेषुद्विगश्चंद्रोथोनिजभाद्द्युभंनवहृतंत्र्यद्रीषुशेषं नसत् ॥ १ ॥**

अथगोचरप्रकरणंविवक्षुस्तावज्जन्मराशेः सकाशात्कोग्रहः कस्मिन्स्थानेशुभः कस्मिन्नशुभइतिचंद्रशुक्लपक्षेविशेषंताराबलंचवृत्तेनैकेनाह । स्वर्क्षाच्चंद्रखलाइति । स्वर्क्षात् स्वजन्मराशेः सकाशात्चंद्रखलास्त्रिखारिषुशुभाः स्युः। त्रिःतृतीयं खंदशमम् अरिःषष्ठं तेषु चंद्रखलाः चंद्रः प्र० खलाः पापग्रहाः रविभौमशनिराहुकेतवः शुभाः शुभफलाः भवंति । पुनःसप्ताद्यगः अब्जश्चंद्रः शुभःस्यात् सुगमम् । आपुत्राद्व्ययधर्ममृत्युषुकविः शुभःस्यात् । आपुत्राज्जन्मराशितः क्रमेणपंचपर्यंतं १, २, ३, ४, ५ व्ययोद्वादशं धर्मनवमं मृत्युरष्टमम् एषुकविःशुक्रःशुभः स्यात् । स्वास्तत्रिकोणेगुरुः शुभःस्यात् । स्वंद्वितीयम् अस्तंसप्तमं त्रिकोणं नवमं पंचमं तत्रगुरुः बृहस्पतिः शुभःस्यात् । सौम्योव्यंत्यसमे शुभः स्यात्। सौम्योबुधः विगतमंत्यंयस्मात्तद्व्यंत्यं तच्चतत्समंच तथा तस्मिन्द्वादशस्थानवर्जसमस्थानेद्वितीयचतुर्थादिकेशुभः स्यादित्यर्थः।अखिलाभवगताः शुभाःस्युः सर्वेग्रहाः एकादशस्थानेशुभाः स्युरिति । शुक्लेनवेषुद्विगः चंद्रःशुभः स्यान्नकृष्णपक्षइति । अथताराबलमाह । निजभाद्द्युभंनवहृतं त्र्यद्रीषु शेषं नसत् । निजभं स्वजन्मनक्षत्रं तस्माद्द्युभंदिननक्षत्रपर्यंतंसंगण्य नवहृतं सत् त्र्यद्रीषुशेषं त्रिसप्तपंचशेषं नसत् नशुभम् । अन्यच्छुभमित्यर्थात्सिद्धम् । तथाचविशेषसंग्रहः व्यवहारसारे "पंथोहानिं प्रियंव्याधिंदैन्यंस्वास्थ्यंगतिंगदम्॥ पापंसुखंधनंहानिंकरोत्यर्कः स्वजन्मभात्॥ वस्त्रंहानिंधनंरोगंपीडांवित्तंप्रियंवसु । भयंसुखंधनंरोगंकरोतींदुःस्वजन्मभात् ॥ भयंहानिर्धनंवैरंदुःखंलाभंभयंक्षयम् ॥ पापंलाभंसुखंहानिंजनेभौमफलंक्रमात् ॥ बंधंलाभंभयं वित्तंशोकंलक्ष्मीक्षयंधनम् ॥ रोगंभोगंसुखंहानिंकरोतिज्ञः स्वजन्मभात् ॥ भयंवित्तंरुजं हानिंलाभंशोकंसुखंरुजः ॥ मानंदैन्यंधनंपीडांकरोतिजन्मभाद्गुरुः ॥ जयंवित्तंधनंसौख्यंपुत्रान्वैरंशुभंसुखम् । धर्मंदुःखंधनंलाभंजनेः शुक्रोददातिवै ॥ भयंशोकंधनंदुःखंहानिंसुहृत्क्षयंमृतिम् ॥ पापंश्रमंधनंहानिंजनेः पंगुफलंक्रमात ॥ राहुकेत्वोःफलंशनिकुजवत् ॥ १ ॥

### अब गोचरफलको कहतेहैं।

भा०-जन्मराशिसे ३। १०। ६ चंद्रमा और पापग्रह होय तो शुभ होय ॥ और चंद्रमा ७। १ होय तो शुभ होय ॥ और शुक्र १। २। ३। ४। ५। १२। ९। ८ इन्हों स्थानोंमें शुभ होय ॥ और २। ७। ६। ५ इन्होंमें गुरु शुभ होय ॥ और बारमें विना समस्थानोंमें बुध शुभ होय ॥ और सारे ग्रह ११ में शुभ होवै हैं ॥ और शुक्लपक्षमें चंद्रमा ९। ५। २ होयतो शुभ होय ॥ और अपने जन्मनक्षत्रसे दिननक्षत्रतक गिणके नवका ९ भाग देणेसे शेष ३। ७। ५ रहै तो अशुभ होय ॥ और अन्य शेष रहै तो शुभ होय ॥ १ ॥

**षष्ठांत्येखजलेसुतायभवनेत्र्यंकेरवेःस्यान्मिथस्त्र्यंकेजन्मसुतेखके मृतिभवेद्व्यस्तेषडंत्येविधोः॥त्र्यर्केलाभसुतेसपत्नतपसोर्व्यर्का-शुभानांव्यधोष्टाद्येपुत्रधनेष्टखेकसहजेर्यंकेभवांत्येविदः ॥ २ ॥**

अथसर्वेषांग्रहाणांवेधंवृत्तद्वयेनाह। षष्ठांत्येइति। षष्ठंप्रसिद्धम् अंत्यंद्वादशंतस्मिन् मिथः परस्परंवेधः तद्वत्खजलेसुतायभवने त्र्यंके अयंरवेर्वेधःस्यात्। अत्रांकन्यासएवव्याख्यानम्। सप्तम्युपलक्षितैःपदैःवेधाज्ञेयाः। तद्यथा षष्ठां ६ त्ये १२ ख १० जले ४ सुता ५ य ११ भवने त्र्यं ३ के ९ रवेः सूर्यस्यायंवेधः। त्र्यं ३ कें ९ जन्म १ सुते ५ ख १० के ४ मृति ८ भवे ११ द्व्य २ स्ते ७ षडं ६ त्ये १२ विधोरयंवेधः। त्र्य ३ र्के १२ लाभ ११ सुते ५ सपत्न ६ तपसो ९ व्यर्काशुभानां व्यधोयम्। विगतोर्कोयेभ्यस्तेव्यर्काः तेचतेअशुभाश्चव्यर्काशुभाः रविरहितपापग्रहाः तेषामयंवेधइत्यर्थः। अष्टा ८ द्ये १ पुत्र ५ धने २ ष्ट ८ खे १० क ४ सहजे ३ र्यं ६ के ९ भवां ११ त्ये १२ विदः बुधस्यायंवेधः॥ २॥

### अब सारे ग्रहोंके वेधको कहतेहैं।

भा०-और छठे बारमेंमें परस्पर सूर्यका वेध है ऐसेही सर्वत्र जाणो ॥ और १०। ४ वेध है॥ और ५-११ और ३-९ वेध है-और ऐसेंही। ३-८। १-५। १०-४। ८-११। २-७। ६-१२ इन्हों स्थानोंमें परस्पर ग्रहोंसे चंद्रका वेध होय ॥ और ३-१२। ११-५। ६-९ सूर्य विना पापग्रहोंका परस्पर वेध होय ॥ और ८-१। ५-२। ८-१०। ४-३। ६-९। ११-१२। इन्होंमें परस्पर बुधका वेध होय॥ २१॥

**द्व्यस्तेष्टादिमयोःखकेनवसुतेत्रीशेष्टपुत्रेत्रिकल्पेऽर्यंत्येंकभवेभृगोर्ज्ञ-शशिनोःशन्यर्कयोर्नोव्यधः॥विद्धोव्यस्तफलोभवेदिविचरोहेमा-द्रिविंध्यांतरेखेटक्षौद्व्यधखेचरंविगणयान्यत्रोभयंजन्मभात्॥३॥**

द्व्यस्तेति। द्व्य २ स्ते ७ ष्टा ८ दिमयोः १ ख १० के ४ नव ९ सुते ५ त्री ३-शे ११ ष्ट ८ पुत्रे ५ त्रि ३ कल्पे १ र्य ६ त्यें १२ क ९ भवे ११ भृगोःशुक्रस्यायंवेधः।

गुरोर्वेधः संस्कारप्रकरणेकथितः । सोत्रसिद्धोज्ञेयः । अत्रवेधविधानेज्ञशशिनोःबुधचंद्रयोः शन्यर्कयोश्चपरस्परंनोव्यधःस्यात् । परस्परंवेधोनास्ति । एतदुक्तंभवति । विंध्यहिमालययोर्मध्येजन्मराशेःसकाशात् अन्यतमग्रहाधिष्ठितराशिपर्यंतंगणयित्वातद्राशेः सकाशात् यथोक्तवेधस्थानपर्यंतंगणयेत् । तत्रयदिकश्चिद्ग्रहोभवतितदागणितोग्रहोविद्धोभवति । अन्यदेशेषुजन्मराशेःसकाशातुउभयग्रहंतद्वेधनस्थानंचगणयेत् । यदावेधस्थानेकश्चिद्ग्रहोभवति तदान्योग्रहोविद्धोभवति । तत्रसूर्यस्यशनिवेधोनास्ति शनेःसूर्यस्य वेधोनास्ति । एवंचन्द्रबुधयोःपरस्परंज्ञेयम् । अथवेधनप्रयोजनमाह । विद्धोव्यस्तफलो भवेद्दिविचरइति । विद्धोग्रस्तोव्यस्तफलःस्यात् प्रथमश्लोकोदितंफलंव्यस्तंविपरीतंभवतीत्यर्थः । रत्नमालायामपि "वामवेधविधिनात्वशोभनाअप्यमीशुभफलंदिशंत्यलम् ॥ तेमृषावचनभाषिणोजनायांतिहास्यमपिकीर्तिलाञ्छनम्" इति । अथदेशविशेषेणवेधगणनाविशेषमाह । हेमाद्रिविंध्यांतरइति । अस्यार्थःपूर्वमेवव्याख्यातः ॥ ३ ॥

इति मुहूर्त्तमार्त्तण्डे मार्तण्डवल्लभायां गोचरप्रकरणं समाप्तम् ।

## अथ संक्रांतिप्रकरणम् ।

भा०-और २-७ । ८-१ । १०-४ । ९-५ । २-११ । ८-५ । ३-१ । ६-१२ । ९-११ इन्होंमें शुक्रका ग्रहोंके साथ परस्पर वेध होय ॥ और गुरुका वेध संस्कारप्रकरणमें कहा है सो समझलेना ॥ और बुध चंद्रको और शनि सूर्यको परस्पर वेध नहीं होय॥तात्पर्य यह है कि विंध्याचल हिमाचलके मध्यमें जन्मराशिसे जहां ग्रह होय तहांतक गिणके उस राशिसे यथोक्त वेधस्थानपर्यंत गणना चाहिये वहां वेधस्थानमें कोई ग्रह होयतो वह ग्रह विद्ध होय और अन्यदेशोंमें जन्मराशिसे उभय ग्रहोंको और वेधस्थानको गणके जो वेधस्थानमें कोई ग्रह होयतो दूसरा ग्रह विद्ध होय ॥ जो ग्रह विद्ध होय वह व्यस्त याने विपरीत फलको देवै ॥३॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्रमोडुरामविरचितायां सार्तण्डदर्शिन्यां गोचरप्रकरणम् ॥

---

**ऊर्ध्वंद्व्यात्ममृगेर्कसंक्रमणतःपूर्वंस्थिरेकर्कटेजूकाजोभयतःखरामघटिकाःपुण्यामृगेदिग्युताः॥कर्काजांत्यवृषैणसूर्यचलनंनिश्यन्यभंसद्दिवासूर्याराकिंदिनेतृतीयकरणेप्रांत्येष्टमेदुःखदम् ॥ १ ॥**

अथसंक्रांतिफलंविवक्षुस्तावद्राशिपरत्वेनपुण्यकालंवृत्तार्द्धेनाह । द्व्यात्मनो द्विस्वभावाराशयः मिथुनकन्याधनुर्मीनाः मृगोमकरः एषांसमाहारस्तस्मिन्नर्कसंक्रमणतःसूर्यसंक्रमणकालातसकाशात् ऊर्ध्वमुपरिखरामघटिकाःपुण्याःस्युः । स्थिरेवृषसिंहवृश्चिककुंभानामन्यतमेराशौ कर्कटःप्रसिद्धःअर्कसंक्रमणतःपूर्वंप्रथमंखराम ३० घटिकाः पुण्याःस्युः । जूकाजोभयतः जूकस्तुला अजोमेषः अनयोरर्कसंक्रमणतःसकाशादुभय-

तःखराम ३० घटिकाःपुण्याःस्युः । पूर्वपंचदशऊर्ध्वपंचदशेतित्रिंशत्घटिकाइत्यर्थः । एवंसर्वराशिसंक्रमणपुण्यकालमुक्त्वेदानींमकरेपुण्यकालविशेषमाह । मृगेदिग्युताइति । मृगेमकरेताःखराम ३० घटिकादिग्युताःदशयुताः चत्वारिंशत्घटिकाःपुण्याइत्यर्थः । तथाचोक्तंज्योतिर्निबंधे "संक्रांतिसमयःसूक्ष्मोदुर्लभःपिशितेक्षणैः ॥ तस्ययोगादधश्चोर्ध्वं त्रिंशन्नाड्यःप्रकीर्तिताः ॥ अर्वाक्षोडशनाड्यस्तुपरतश्चैवषोडश ॥ पुण्यकालोर्कसंक्रांतेः स्नानदानादिकर्मसु ॥ त्रिंशत्कर्कटसंक्रांतौ पूर्वतःपुण्यनाडिकाः ॥ मकरेतूत्तराः पुण्याश्चत्वारिंशच्चनाडिकाः ॥ स्थिरेविष्णुपदेकर्कदक्षिणायनमादितः ॥ मृगेसौम्यायनंद्व्यंगे षडशीतिमुखंपुरः ॥ घटजेविषुवेमध्येपुण्यंदानाद्यनंतकम् ॥ प्रागर्द्धरात्रात्पूर्वेद्युःपुण्यंपश्चात्परंदिनम् ॥"प्रागर्द्धरात्रादित्येतद्विषुवविषयम् । "कार्मुकंतुपरित्यज्यमृगंसंक्रमतेरविः ॥ प्रदोषेवार्द्धरात्रेवातदाभोगःपरेऽहनि ॥ रविसंक्रमणेपुण्येयोनस्नातीहमानवः ॥ सप्तजन्मांतरेरोगी दुःखभाग्निर्धनोभवेत् ॥" आदित्यपुराणे । "शतमिंदुक्षयेदानसुपरागेत्वनंतकम् । षडशीत्यांसहस्रंतु विष्णुपद्यांतथैवच ॥ विषुवेशतसाहस्रकोटिस्तंदक्षिणायने । शतकोटिगुणंपुण्यं जायतेउत्तरायणे" इति ॥ अथोत्तरार्द्धेनसंक्रांतेः सदसत्फलमाह । कर्कति । कर्कः प्रसिद्धः अजोमेषः अंत्योमीनः वृषःप्रसिद्धः एणो मकरः एतान् सूर्यचलनंनिशिरात्रौसत्स्यात् । अन्यभंप्रतिसूर्यचलनंसूर्यसंक्रमणंदिवा सत्स्यात् । अर्थाद्विपरीतंनशोभनम् । सूर्यारार्किदिनेरविभौमशनिदिनेतृतीयकरणेकौलवे प्रांत्येकिंस्तुघ्नेअष्टमेशकुनौसर्वराशिसंक्रमणंदुःखदंस्यात् । तथाचोक्तं "मृगकर्काजगोमीनसंक्रातिर्निशिसौख्यदा । शेषेषुसप्तसुदिवाव्यत्ययादशुभंभवेत् ॥ संक्रांतिर्जायतेयत्रभास्करेभूसुतेशनौ । तत्रमासिभवेद्घोरंदुर्भिक्षंवृष्टिचोरजम् ॥ स्याद्युत्थितस्य किंस्तुघ्नेशकुनेकौलवेरवेः । संक्रांतिस्तैतिलेनागे प्रसुप्तस्यचतुष्पदे ॥ निविष्टस्यगरेविष्टौ वणिजेबालवेबवे । दुर्भिक्षंरोगबाहुल्यमूर्ध्वसंक्रमतेरविः ॥ सुप्तःकरोतिकल्याणमुपविष्टःसमंफलम्" इति ॥ १ ॥

## अब संक्रांतिप्रकरणको कहतेहैं ।

भा०-और ३ । ६ । ९ । १२ । १० इन्हीं संक्रांतियोंके उपरकी ३० घडियों पुण्यकाल है ॥ और २ । ५ । ८ । ११ । ४ इन्हीं संक्रांतियोंके पूर्वकी ३० तीस घडियों पुण्यकाल है ॥ और ७ । १ इन्होंकी दोनु तरफ ३० घडियों पुण्यकाल है ॥ पन्द्रह पूर्वकी और पन्द्रह उत्तरकी ॥ और १० मकर संक्रांतिकी ४० घडियों उपरकी पुण्यकाल है ॥ और ४ । १ । १२ । २ इन्होंकी संक्रांति रात्रिमें होयतो शुभ होय ॥ और अन्य संक्रांतियों दिनमें शुभ होय ॥ अर्थात् विपरीत अशुभ होय ॥ और सूर्य मंगल शनिके दिनमें कौलवमें किंस्तुघ्नमें शकुनिमें कोई संक्रांति होयतो दुःखदायक होय ॥ १ ॥

ब्रह्माद्यैरिनमंडलांतउदितश्चांद्रस्त्वमांतःपरैर्मासोसंक्रमणोद्विसंक्र-

मणकोज्ञेयोधिकोथोक्षयः ॥ कर्माण्यन्यगतीनिनात्रतनुयाद्यज्ज-न्ममृत्यूक्षयेतन्मासौतिथिखंडयोश्चयसुखेभृत्योधिकोगण्यते ॥२ ॥

अथसंक्रातिप्रसंगेनअधिमासक्षयमासयोर्लक्षणंतत्रकर्तव्याकर्तव्यंक्षयमासेजन्ममरणादौमासज्ञानंवृत्तेकेनाह । ब्रह्माद्यैरिति । ब्रह्माद्यैःसिद्धांतकर्तृभिःइनमंडलांतःसूर्यमंडलांतः चांद्रःचांद्रोमासउदितः । परैराचार्यैःअमांतश्चांद्रोमासउदितः । एतदुक्तं भवति अमावास्यांतादपरोअमावास्यांतोयावत्तावदमांतोमासः । अमावास्यांतेसूर्यचंद्रमंडलयोर्योगोभवति परतःषड्भिर्घटिकादिभिर्वियोगोभवति । तस्माद्वियोगादपरा वियोगोयावत्तावद्रविमंडलांतोमासः । सब्रह्माद्यैःक्षयमासाधिमासनिर्णयविषयेअंगीकृतः अपरैरमांतोमासोंगीकृतइत्यर्थः । अत्रयद्यपिसूर्यग्रहणेमध्यग्रहणकालानंतरं मोक्षस्थितिकालः षड्घटिकाभ्योन्यूनोदृश्यतेतथापिसूक्ष्मदर्शिभिः पूर्वाचार्यैः रसनाड्योर्कमंडलमित्युक्तम् । तत्रागमएवप्रमाणंतत्रउक्तलक्षणोमासःअसंक्रमणःसंक्रांतिरहित अधिकोज्ञेयः । द्विसंक्रमणकःसंक्रांतिद्वययुक्तःक्षयोज्ञेयः । अस्योदाहरणंब्रह्ममतानुसारिणाश्रीभास्कराचार्येणसिद्धांतशिरोमणौदर्शितम् "असंक्रांतिमासोधिमासःस्फुटःस्याद्विसंक्रांतिमासःक्षयाख्यःकदाचित् । क्षयःकार्तिकादित्रयेनान्यथास्यात्तदावर्षमध्येऽधिमासद्वयंच ॥ गतोब्ध्यद्रिनंदै ९७४ र्मितेशाककालेतिथीशैर्भविष्य१११५त्यथांगाक्षसूर्यैः १२५६ । गजाद्र्यग्निभूमि १३७८ स्तथाप्रायशोयंकुवेदेंदुवर्षैः १४१ क्वचिद्गोकुभि ११ श्च" ॥ श्रीभास्कराचार्येणाब्ध्यद्रिनंदै ९७४ मितशाककालादुपरितिथीशै १११५ मितशाककालात्पूर्वंसिद्धांतशिरोमणिर्विरचितः । अतएवोक्तं "गतोब्ध्यद्रिनंदैर्मितेशाककालेतिथीशैर्भविष्यति" इति ॥ तत्रगजाद्र्यग्निभूमिः तुल्येशाककाले रविमंडलांतमासप्रमाणेनक्षयमासाधिमासौप्रदृश्येते आश्विनीअमावास्याबुधेचतुश्चत्वारिंशतघटिका ४४ तास्मिन्नेवादिनेसप्तत्रिंशत् ३७ घटिकास्वतीतासुतुलासंक्रमणंमभूत् । आश्विनस्तुलासंक्रांतियुक्तत्वाच्छुद्धः कार्तिकीअमावास्या शुक्रेसप्तदशघटिका १७ तस्मिन्नेवदिनेत्रिंशतघटिकास्वतीतासुवृश्चिकसंक्रांतिरभूत् । अयनसंक्रांतित्वादधिकः कार्तिकः अपरोमासोवृश्चिकसंक्रांतियुक्तःतस्माच्छुद्धोयंकार्तिकःतस्यामावास्याशनौसप्तचत्वारिंशत् ४७ घटिकास्तस्मिन्नेवदिनेएकोनषष्टिघटिका ५९ स्वतीतासुधनुःसंक्रमणमभूत् । धनुःसंक्रमणंमार्गशीर्षेजातं तस्यामावास्यासोमेपादोनपंचदशघटिका तस्मिन्नेवदिनेएकोनविंशतिघटिकास्वतीतासुमकरसंक्रांतिरभूत् इयंमकरसंक्रांतिर्यद्यपि अमांतमतिक्रम्यजातातथापिरविमंडलांतमासप्रमाणेनपूर्वमासएवपतिता तस्मात्संक्रांतिद्वययुक्तत्वात् मार्गपौषयुगलंक्षयाह्वयंजातम् । माघी अमाभौमेएकचत्वारिंशत्४१घटिकातस्मिन्नेवदिनेषट्चत्वारिंशत् ४६घटिकास्वतीतासुकुंभसंक्रांतिरभूत् । इयमपिसंक्रांतिर्यद्यपिमासमतिक्रम्यजातातथापिमंडलांतमासप्रमाणेनपूर्वमासस्यै-

व तस्मान्माघः शुद्धः । अन्यथामंडलांतमासानंगीकारे "नक्षयोनाधिमासःस्यान्माघो
वैपरिकीर्तितः" इत्येतच्छास्त्रमनर्थकंस्यात् । आर्यपक्षेतुसंदेहोनास्ति यतोब्रह्मपक्षातिथितः
आर्यपक्षतिथिश्चतुर्घटिका ब्रह्मपक्षसंक्रांतितः आर्यपक्षसंक्रांतिस्त्रिघटिकोना तस्मादार्यप
क्षेसंदेहाभावः तथाचफाल्गुनीअमाग्रुरौषड्घटिकातस्मिन्नेवदिनेपंचत्रिंशत्घटिका ३५
स्वतीतासुमीनसंक्रांतिर्जातातस्मादयंफाल्गुनःअसंक्रांतित्वादधिकः।"क्षयःकार्तिकादि-
त्रयेनान्यथास्यात्तदावर्षमध्येऽधिमासद्वयंच" इति । तस्योदाहरणंदर्शितम् । यत्तुब्रह्मपक्षे
क्षयमासाधिमासनिर्णयेअम ।तंमासंगणयंति तैर्ब्रह्ममतंनविदितम् । पौलस्त्यसिद्धांते
"स्फुटगत्यायदाचंद्रोरविमंडलमध्यगः ॥तदूर्ध्वसंक्रमोभानोर्मासः सस्यान्मलिम्लुचः"
कालनिर्णये ॥ "संक्रमोयदिभवेद्रवेस्ततोमंडलाद्बहिरनिर्गतेविधौ ॥ उच्यतेथसहि
संक्रमोबुधैःशुद्धमासइतरोमलिम्लुचः" ॥ लल्लः ॥ "यदाशशी यातिगभिस्तमंडलं
दिवाकरः संक्रमणंकरोत्यनु । विवाहयज्ञोत्सवनाशहेतुकस्तदाधिमासः कथितः
स्वयंभुवा" ॥ रत्नमालायाम् ॥ "सवितृमंडलमेतियदाशशीतदनुसंक्रमणंकुरुतेरविः ।
मखमहोत्सवनाशकरस्तदामुनिवरैर्गदितोधिकमासकः" ॥ शार्ङ्गधरफलग्रंथे ॥ "चं-
द्रार्कयोस्तुबिंबैक्यंप्रतिपद्दर्शसंधिषु।तिथ्यंतात्तदुभयतोरसनाड्योर्कमंडलम्। तन्मंडला-
च्छशीगच्छेत्ततः सूर्यस्यसंक्रमः । मासोऽसौमलिनः प्रोक्तोनतद्धीनोधिकः स्मृतः"॥
पितामहः ॥ "प्रतिपद्दर्शसंधौतुबिंबैक्यंचंद्रसूर्ययोः। जवांतराशंषष्टिघ्नंनाडिकाअर्कमंड-
लम्" ॥अत्रकालात्मकबिंबग्रहणं ज्योतिष्प्रकाशे ॥ "दर्शांतएकैः कथितोत्रमासः
परैःप्रदिष्टोरविमंडलांतः ॥मतद्वयेचेद्रविसंक्रमःस्यात्सएवपूर्वस्यनचापरस्य"॥ पितामहः
" अष्टाधिमासाः स्युर्नित्यंप्रोच्यंतेफाल्गुनादयः ॥ सौम्यपौषौक्षयोनित्यंभ-
वेतामितिनिश्चितम्॥क्षयोवाप्यधिमासोवास्यादूर्जइतिनिश्चितम्। नक्षयोनाधिमासःस्या-
न्माघोवैपरिकीर्तितः ॥ पंचमासास्तुवैशाखादधिमासाव्यवस्थिताः । भवंतिचाष्ट-
भिर्वर्षैर्भवे ११ वांकनिशाकरैः १९ ॥ तथैवफाल्गुनश्चैत्रआश्विनःकार्तिको-
धिकः । एतेर्किद्रैः १४१ शरांगै ६५ र्वांकदाचिद्गोकुवत्सरैः १९ ॥
मार्गपौषौक्षयौस्यातांकदाचित्कार्तिकोभवेत् । अधिमासस्तदाज्येष्ठोभवेन्नित्यंक्षयो
यदा ॥ क्षयात्प्रागधिमासःस्यान्नित्यंभाद्रपदत्रये॥ आश्विनोर्जौसदास्यातामादौभाद्रप-
दःसकृत" ॥ यस्मिन्वर्षेकार्तिकक्षयोभवति तस्मिन्वर्षेज्येष्ठाधिमासोभवेत् । अत्रज्ये-
ष्ठशब्देनभाद्रपदोज्ञेयः । यतः'क्षयात्प्रागधिमासःस्यान्नित्यंभाद्रपदत्रये' इतिनियमात्।
भाद्रपदादीनांत्रयाणांमध्येभाद्रपदोज्येष्ठोजानीयादित्यर्थः । अथाधिमासक्षयमासयोः
कार्याकार्याण्याह । कर्माण्यन्यगतीनिनात्रतनुयादिति । अन्यागतिर्येषांतानिअन्यगती-
नितानिअत्राधिमासक्षयमासयोर्नतनुयान्नविस्तारयेत्नकुर्यात् । अर्थादनन्यगतीनिक-
र्माण्यत्रापिकर्तव्यानीतिसिद्धम् । अन्यगतीनामनन्यगतीनामित्थंविचारः यानिकाल-
निरोधेनप्रोक्तानितान्यनन्यगतीनि यथाऋतौजायामुपेयात् तत्र " ऋतुः स्वाभा-

विकः स्त्रीणां रात्रयः षोडश स्मृताः'' इतिमनुनाऋतुप्रमाणमुक्तम् । अथषोडश-रात्रीणांमध्येनिंद्यदिनान्यपहायगच्छेत् । सऋतुर्यदिमलमासशुद्धमासांशैर्व्याप्नोतितदा-शुद्धमासांशेदोषरहितेगर्भाधानंकुर्यात् । असंभवेमलमासएवकुर्यात् । तथाचोक्तम् ''अनन्यगतिकंकुर्यान्नित्यंनैमित्तिकंतथा''।।एवमन्यान्यपिविचार्यकुर्यात्। गर्भाधानाद्यन्नप्राशनांतकर्मसुमलमासादीनांनिषेधोनास्तीतिसंस्कारेणउक्तमस्ति। ''गर्भाद्यन्नाशनांतेषु गुरुसितमौढ्यम् ॥'' इत्यादि । तथाचगर्गः ॥ ''अग्न्याधेयप्रतिष्ठांचयज्ञदानव्रतानिच ॥ वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः।।। गमनंदेवतीर्थानांविवाहमभिषेचनम् ॥ यानंचगृहकर्माणिमलमासेविवर्जयेत्'' इति॥ तथाचसूर्योदये ॥ ''अवश्यकर्ममासाख्यंमलमास-मृताब्दिकम् ॥ तीर्थेभच्छाययोःश्राद्धंमघानंगपितृक्रियाम् ॥ कुर्यान्मलिम्लुचेवर्षेमध्ये चेत्सर्वदाधिकम् ॥ तत्रस्यान्मासिकंमृत्युंमासात्सद्वादशोयदि ॥ प्रेतक्रियांसमाप्यात्र कुर्वीताभ्युदयंतथा ॥ श्यामाकाग्रयणंकृच्छ्रेनस्याद्वर्ज्यमतोन्यथा'' ॥ अन्यच्च ॥ ''काम्यारंभंवृषोत्सर्गंपर्वोत्सवमुपाकृतिम्॥मेखलाचौलमांगल्याग्न्याधानोद्यापनक्रियाः॥ वेदव्रतमहादानाभिषेकान्वर्द्धमानकम् ॥इष्टापूर्तंतथायस्यविध्यलोपोन्यदाकृतौ ॥ तत्सर्वमष्टकादन्यदधिमासेविवर्जयेत् । सूतकेपिचकर्तव्यंस्नानाद्यंराहुदर्शने'' इति ॥ स्मृतिरत्नावल्याम् ॥ ''प्रवृत्तंमलमासात्प्राग्यत्कार्यमसमापितम् ॥ आगतेमलमासेपि तत्समाप्यमसंशयम्'' इति ॥ अथक्षयमासेजन्मादौमासज्ञानमाह । यज्जन्मेति ।जन्म-चमृत्युश्चजन्ममृत्यू यस्यजन्ममृत्यूयज्जन्ममृत्यू क्षयेक्षयमासिभवतस्तस्यमासौतिथि-खंडौज्ञातव्यौ तिथेःप्रथमेर्धेजन्मवामृत्युर्वाभवति तदाप्रथममासः ॥ द्वितीयेर्द्धेद्वितीयोमासोज्ञेयः । तथाचबृहत्कालनिर्णये ॥ ''तिथ्यर्द्धेप्रथमेपूर्वोद्वितीयेर्द्धेतथोत्तरः मासाविति बुधैर्ज्ञेयौक्षयमासस्यमध्यगौ'' इति ॥ अथमलमासःकुत्रकुत्रगण्यतइत्याह चयमुखइति । चयोगर्भाधानादेर्वृद्धिः गर्भस्यकलिलंघनांकुरास्थिचर्मादिचयःप्रतिमासे भवति घनादीनांदिनकलांतराचयस्तदादिके प्रेष्येभृत्येवेतनदानार्थमधिकोमासोग-ण्यते । तथाचयमः ॥ ''गर्भेवार्धुषिकेभृत्येश्राद्धकर्मणिमासिके ॥ सपिंडीकरणे नित्ये नाधिमासंविवर्जयेत्'' इति॥ पाठांतरव्याख्यानम् । अधियुगेपूर्वोधिमाः प्राकृतइति एकस्मिन्वर्षेअधियुगे अधिकद्वयेसतिपूर्वोधिमाः प्रथमोधिमासः प्राकृतः प्राकृतमासवज्ज्ञेयःआधिकवन्नत्याज्यः । अर्थादुत्तरोधिकमासोमलमासः । तदुक्तं''मासद्वयेब्दमध्येच संक्रमोनभवेद्यदा ॥ प्राकृतस्तत्रपूर्वस्यादुत्तरस्तुमलिम्लुचः'' इति॥२॥

इतिमुहूर्तमार्तण्डटीकायांमार्त्तण्डवल्लभायांसंक्रांतिप्रकरणंसमाप्तम् ॥

**अब अधिमास क्षयमासका लक्षण और वहां कर्तव्याकर्तव्यको और क्षयमासमें जन्ममरणके विचारको कहतेहैं ।**

भा०-सिद्धांत करनेवाले ब्रह्मादिक कहते हैं कि चांद्रमास सूर्यमण्डलांत होता है ॥

तात्पर्य यह है कि अमावास्याके अंतमें सूर्य चंद्रमण्डलको योग होवै है पीछे ६० घडियोंसे वियोग होता है वहां वियोगांत मास होता है और कोई आचार्य कहते हैं कि अमांत चांद्र होता है ॥ और जिस मासमें दो संक्रांति होय वह क्षयमास होता है ॥ इसमें अन्यगतिवाला कामको नहीं करणा ॥ और क्षयमासमें जन्ममृत्युतिथिका दो विभाग करणा सो पूर्वार्द्धमें जन्म वा मृत्यु होय तो पहले महीनामें वर्द्धापन और श्राद्ध करणा ॥ और उत्तरार्द्धमें होय तो द्वितीय मासमें करणा ॥ और गर्भमें तथा नोकरीमें अधिमासको गणना चाहिये ॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिसुतमोडुरामकृतायां मार्तण्डदर्शिन्यां संक्रांतिप्रकरणम् ॥ १ ॥

---

**श्रीमत्कौशिकपावनोहरिपदद्वंद्वार्पितात्माहरिस्तज्जोऽनंतइलासुरार्चितगुणोनारायणस्तत्सुतः ॥ख्यातंदेवगिरेःशिवालयमुदक्तस्मादुदक्टापरग्रामस्तद्वसतिर्मुहूर्त्तभवनंमार्तण्डमत्राकरोत् ॥ १ ॥**

अथालंकारमाह । श्रीमत्कौशिकेति । कुशिकस्यगोत्रापत्यानिकौशिकाः श्रीमंतश्च तेकौशिकाश्चतेतथा तान्पावयतीतितथा हरिपदद्वंद्वार्पितात्मा हरिर्वासुदेवः तस्यपदद्वंद्वं चरणयुगंतस्मिन्नर्पितः आत्मा अंतःकरणं येनसतथा "आत्मादेहेधृतौजीवे" इत्यभिधानात् एवंविधोयोहरिस्तज्जस्तस्माज्जातोयोनंतनामा । किंलक्षणः इलासुरार्चितगुणः इलापृथ्वी तस्यांसुरादेवाब्राह्मणाः तैरर्चिताःपूजितागुणाःशमदमतपोदानाध्ययनादिगुणायस्यस तथा जितेंद्रियोवेदनिधिःस्मृतिज्ञोदृढव्रतोयज्ञकृदन्नदातेत्यादिगुणसंपन्नइत्यर्थः । तत्सुतो नारायणःमुहूर्त्तभवनंमुहूर्त्तानांभवनंसद्मभार्तंडनामग्रंथमकरोत् । अत्र कुत्र : देवगिरेःसकाशात्उदक्उत्तरस्यांदिशियत्ख्यातंपुराणप्रसिद्धंशिवालयंघुस्मेशशिवालयमितिप्रसिद्धम् । ज्योतिर्लिंगस्थानमस्ति तस्माच्छिवालयादुदगुत्तरस्यांदिशियः टापरग्रामोऽस्ति तत्रटापरग्रामे अकरोदित्यर्थः । किंलक्षणोनारायणः तद्वसतिः तस्मिन्टापरग्रामेवसतिर्वासोयस्यसतथेति ॥ १ ॥

अब ग्रंथकर्ताका वर्णन करतेहैं ।

भा०–देवगिरिसे उत्तरमें घुस्मेश नाम ज्योतिर्लिंगाख्य शिव हैं वहांसे उत्तरमें टापर नाम ग्राम है उस ग्राममें रहनेवाला और कुशिकगोत्रज हरिभक्त हरिनाम ब्राह्मणका पुत्र अनंत उनका पुत्र नारायण मुहूर्तमार्तण्डनाम ग्रंथको करता भया ॥ १ ॥

**यःषष्ट्यायुतशत१६०वृत्तबद्धमेनंमार्त्तण्डंपठतिनरःसविश्वपूज्यः॥ बह्वायुःसुखधनपुत्रमित्रभृत्यान्संप्राप्नोत्यविकलधीश्चतीर्थसिद्धिम्**

अथास्यपठनेफलश्रुतिंतथाग्रंथेवृत्तसंख्यांप्रहर्षिण्याह । षष्ट्यायुतंशतं १६० तन्मितानिवृत्तानितैर्निबद्धः कृतः योयं मार्तंडः तमेनंमार्तंडं योनरः पठतिसविश्वपूज्योभवति । न केवलंविश्वपूज्योभवति अपितुबह्वायुःसुखधनमित्रपुत्रभृत्यान् संप्राप्नोति । मुहूर्त्तदानात्साधितकार्यस्यविश्वस्यपूज्योभवतीतियुक्तं जनानांयथार्थमुहूर्त्तदानात्कार्यसिद्धिजनितपुण्येनबह्वायुरारोग्यादीनिसंप्राप्नोतीतियुक्तम् । च परम् अविकलधीर्भवति नविकलाधीर्बुद्धिर्यस्येतितथा । अत्रमुहूर्त्तमार्त्तंडेयद्गर्भाधानादिकमुक्तंतत्रान्यबहुसंहिताग्रंथानपेक्षत्वादविकलधीत्वमुक्तम् । अतएवतीर्थसिद्धिंप्राप्नोति । तीर्थंशास्त्रं तस्यसिद्धिस्ताम् । अल्पग्रंथेन बह्वर्थसिद्धेः । यद्वा तीर्थंगुरुस्तस्यसिद्धिः शास्त्रोपदेशलक्षणा ताम् । यद्वा तीर्थंयागस्तेन कृत्वायागसुखादिलक्षणासिद्धिस्तांप्राप्नोति । "तीर्थंशास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु" इतिविश्वः ॥ २ ॥

अब ग्रंथके पढणेका फल और ग्रंथकी वृत्तसंख्याको कहतेहैं ॥

भा०-जो कोई मनुष्य एकसौसाठ वृत्तयुक्त मुहूर्तमार्तण्डको पढेगा उसके बहुत आयुस्सुख धन पुत्र नोकर होवैंगे-और अविकलबुद्धिवाला होगा-और वह याग सुखरूप सिद्धिको प्राप्त होगा ॥ २ ॥

त्र्यंकेंद्र १४९३ प्रमितेवर्षेशालिवाहनजन्मतः ॥ कृतस्तपसि मार्त्तण्डोयमलंजयतूद्गतः ॥ ३ ॥

अथग्रंथस्याशिषमनुष्टुभाह । त्र्यंकेति । शालिवाहनजन्मतः त्र्यंकेंद्रप्रमिते वर्षे १४९३ तपसिमाघेमार्त्तंडोमुहूर्त्तमार्त्तंडःकृतः । नामैकदेशग्रहणेनामग्रहणम् । अयंमुहूर्त्तमार्त्तंडः अलम् आतिशयेनजयतु । यद्वायमलंमार्त्तंडयुगमसुद्गतमुदयंप्राप्तंजयतु सर्वोत्कर्षेणास्तु ॥ ३ ॥

भा०-शालिवाहनके जन्मसे १४९३ वर्षमें माघमहीनामें मार्तण्डनाम ग्रंथको किया ॥ यह मार्तण्ड सबसे उत्तम रहो ॥ ३ ॥

पूर्ववाक्यार्थमादायग्रंथोयंरचितोलघुः ॥ पठनार्थमशक्तानामंगीकार्योबुधैर्मुदा ॥ ४ ॥

अथैतद्ग्रंथांगीकारार्थंबुधप्रार्थना, सुगमम् । इतिमुहूर्त्तमार्त्तण्डव्याख्यासमाप्ता ॥

आसीत्सासमणूरनामनगरेश्रीकौशिकस्यान्वयेऽनंतोवाजसनेयिपूज्यचरणोमाध्यंदिनीयाग्रणीः ॥ कृष्णस्तत्तनयःश्रुतिस्मृतिविदामग्रेसरेज्योहरिस्तत्पुत्रःश्रुतिवित्तदात्मजवरोनंतोग्निहोत्रीगुरुः ॥ १ ॥

तत्पुत्रस्तदनुग्रहात्तधिषणो नारायणष्टापरग्रामेशिष्यगणेच्छयानिजकृतग्रंथस्यटीकां स्फुटम् ॥ चक्रेऽस्यांकृपयापरोपकृतयेशोध्यंदुरुक्तंबुधैर्मोद्दक्षस्यविलोक्यधार्ष्ट्यमपिते-कुप्यंतिनोसज्जनाः ॥ ३ ॥

सुखनिधिपुरुषार्थक्ष्मा १४९४समाभिःसमाभिःपरिमितशककालेजातमार्त्तण्डटीका-म् ॥ लिखतिपठतिविप्रःसोत्रभूयाद्धरित्र्यांसुखनिधिपुरुषार्थक्ष्मासमोवाक्षमावान्॥४॥

इतिस्वकृतमुहूर्त्तमार्त्तण्डटीका मार्तंण्डवल्लभाख्या समाप्ता ॥ ॥ शुभंभवतु ॥ ॥

भा०-जिनकी बडे ग्रंथको पढनेकी शक्ति नहीं है उन्होंके लिये पूर्वाचार्योंके वाक्योंको लेके यह लघु ग्रंथ किया है ॥ जिससे बुद्धिमान् लोक इसका स्वीकार करैंगे ॥ ४ ॥

इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिसुतमोढुरामविर-चितामुहूर्तमार्तण्डदर्शिनी समाप्ता ॥

भा०-ये मार्तण्डप्रदर्शिनी कीनी मोढूराम ॥ ललित देश मुरधरमहिं जो धणि विश्राम १ इक शर नव भू मितसमें चैत्र कृष्ण रविवार ॥ मुनि तिथि तादिनमें भयी पूर जैजैकार ॥ २ ॥



पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.

# अथ यज्ञेशाष्टकम् ।

यजंतेयंदेवायजनकुशलायज्ञकरणैर्यथाभूमौभूयोनियमनिपुणाःसंधिषुबुधाः ॥ यमाराध्य ख्यातिं बलिसदृशदैत्याः सुविपुलांययुस्तं यज्ञेशंसकलसुखदंनौमिसततम् १ ॥

ज्ञेशं ज्ञानघनस्वरूपममलज्ञानप्रदं ज्ञानिनां ज्ञेयश्चोपनिषत्प्रमाणवचनैर्यः सर्वरूपी भवान् ॥ ज्ञेशाः सिद्धिमिताःपुरंदरमुखाः संपूजयंतोहरिं ज्ञेशान् राममुखान् सुतान् दशरथोलेभे यमिष्ट्वाहरिम् ॥ २ ॥

शास्त्राण्यंगयुतास्तथासुविपुलावेदाभृशंयंमखं शाखेशंप्रतिपादयंतिविपुलैर्माध्यंदिनाद्यैर्ध्रुवम् ॥ शारीरंप्रविधूयचेहकलुषंहुत्वातदर्थंद्विजाः शारीरंभुविदेवदुर्लभसुखंभुक्त्वागमन्यंहरिम् ॥ ३ ॥

यमैस्तुयैर्द्वाभ्यांशरभुजमितैर्वैसुविपुलैर्यमंतेयज्ञानांसयजतिजुहोत्यादिभिरपि ॥ यजंतेयेविप्राःसकलश्रुतिसूत्रार्थनिपुणाययुस्तेषांपादेष्वपिखलुलुठंतस्तमभयम् ॥ ४ ॥

नमामित्वांयज्ञंकिटितनुधरंयस्यचनसिस्रुवः स्रुक्तुण्डेतेश्रुतियुगलरंध्रेचचमसाः ॥ नमो भूयस्तुभ्यंसकलमखपात्राणिचतनौ नहीयंतेनॄणांतवचरणभाजांमखवृषाः ॥ ५ ॥

मोघंजन्मभवेद्यजेन्नखलुयः श्रीयज्ञनारायणंमोघंतस्यविशालनेत्रयुगलंपश्येन्नचेत्तंपरम् ॥ मोघंतस्यमुखंपठेन्नखलुतन्नामानिभद्राणिचेन्मोघंपादयुगंव्रजेन्मखगृहंनाहंभजेतंहरिम् ॥ ६ ॥

नयत्राहंकारंनचमदमहांधंखलुतमोनशोकंदैन्यंवानचयमभयंदुर्जनवचः ॥ नदुःखं मोहंवानचशरशरस्यापिसुकृतंनयंतेयज्वानस्तमहमविनाशंखलुभजे ॥ ७ ॥

मज्जामांसमलास्थिमेदरुधिरैः शुक्रादिभिः संभृतंमर्त्यादैववशंसुनिंद्यकुणपंयेप्राप्य विद्युच्चलम् ॥ मध्याह्नार्कमरीचिकेवहृदिजध्वांतापहंमुक्तिदंमन्येयन्नभजंतिब्रह्मपरमंते वंचितास्तंविभुम् ॥ ८ ॥

इति श्रीश्रौतविज्ञनातुरामाग्निहोत्रिसुतमोढुरामकृतं
यज्ञेशाष्टकं श्रीयज्ञेश्वरार्पणमस्तु ।



# अथ मातृपंचकम् ।

पुत्रोमेखलुजायतांशिवहरे दुर्गेतिसंबुध्यवै देहंदानतपोव्रतादिनियमैः संशोषयित्वा-चिरम् ॥ यापूर्वंदशमासिमांधृतवती दैवात्सहित्वोदरे दुःखंगर्भभवंधरेवनिबिडं तस्यै जनन्यैनमः ॥ १ ॥

पुत्रोमेभवितानवेतिसततं याचिंतयित्वाततो सूत्वा गूथकृमीव मांसवजां पीडांहि विस्मृत्यच ॥ शीतोष्णार्द्रपटादिभिश्चसततं संरक्षितोहंतथा तस्याश्चैवकथंभवेयमनृणी तस्यैजनन्यैनमः ॥ २ ॥

भूतप्रेतपिशाचराक्षसगणाच्छूली सुतंरक्षतु कृष्णोदानवदर्पहाऽवतुसदाबालग्रहेभ्य-स्तथा ॥ गोपुच्छभ्रमणादिभिश्चसततं रक्षाकृतामेयया हुत्वांगेभ्रमितंमरीचलवणं त-स्यैजनन्यैनमः ॥ ३ ॥

मात्रुक्तंखलुयःकरोतिहिनरोधन्योजनिस्तस्यवै रामस्येवविनिर्गतंखलुवचोगृह्णंतिमा-तुश्चये ॥ तेमर्त्याःकलुषंविधूयसकलं श्रीरामरूपा दिवं भुक्त्वा यांति धरासुखंसुनिबिडं तस्यैजनन्यैनमः ॥ ४ ॥

यामातामदुर्वचांस्यगणयद्बालोयमित्याशिषो दूर्वेवास्यबटोःशरीरविपुलं भूया-द्वटद्रुर्यथा ॥ मार्कण्डेयइवप्रजीवनसुखंचैवाददन्मांचिरं यक्षस्येवधनंकुलंचविपुलं तस्यैजनन्यैनमः ॥ ५ ॥

## इति श्रीश्रीमालिकुलोद्भवनानुरामाख्यचातुर्मास्ययाजिपुत्र-मोडुरामविरचितं मातृपंचकंसम्पूर्णम् ॥

# जाहिरात.

| नाम. | रु. आ. |
|---|---|
| नारदसंहिता-( होरास्कन्ध ) भाषाटीकासहिता .... ... | १-२ |
| ग्रहगोचर-भा. टी. .... .... .... .... .... | ०-२ |
| वर्षयोगसमूह-पं०ज्वालाप्रसादमिश्रकृत भाषाटीका वर्षपत्रीके योगोंका फलादेश वर्णन. .... ... ... .... | ०-८ |
| पद्मकोश-भाषाटीका-वर्षफलका भावाध्याय. .... .... | ०-२ |
| ताजिकभूषण-भाषाटीकासमेत वर्षपत्रिकाका फलादेश विस्तार पूर्वकहै. .... .... .... .... .... .... | ०-८ |
| ज्योतिषसार-भाषाटीकासमेत इस ग्रंथमें संपूर्ण मुहूर्त्त जन्मपत्र-ज्ञान वर्षज्ञान आदि बहुत विषयोंका संग्रहहै संगमें रखनेसे अच्छा ज्योतिषी होताहै. रफ .... .... .... | ०-१४ |
| ,, तथा ग्लेज..... .... .... .... | १-० |
| रमलरहस्य सम्पूर्ण-रमलके ग्रंथोंमें सर्वोत्तम यह ग्रंथ हैं. महादेवजीने पार्वतीसे कहा है कि, यह रमलविद्या तुम्हारे मेरे मध्यमें उत्पन्न हुई है. इस ग्रंथमें प्राचीन तथा नवीन कितनेही ग्रंथोंका सार लेकर अपूर्व कौशलसे प्रश्नोत्तर कहे हैं..... | ४-० |
| ज्योतिषतत्त्वसुधार्णव-पं. श्यामसुन्दरलालजी तिवारी कृत भाषाटीका सहित-इसमें कई एक ग्रंथोंका विषय छांटकर संग्रह किया गयाहै तथा ज्योतिषके सबही विषय जैसे मुहूर्त, प्रश्न, जातकताजिकसार आदि आगये हैं । इस एकही ग्रंथसे ज्योतिष विषयमें सबही प्रयोजन सिद्ध होवेगा. ग्रंथ अवश्य खरीदके संग्रहमें रखना चाहिये. .... .... | २-८ |
| दीपिका-वा-"शुद्धिदीपिका" महामहोपाध्याय श्रीश्रीनिवास प्रणीत और पं० कन्हैयालालमिश्रकृत भा० टी० सहित यह ग्रंथ ज्योतिषियोंको परमोपयोगी है. इसमें ज्योतिषके सभी विषय आगये हैं,पुस्तक अवलोकन करनेसे आपही ज्ञातहोगा. | १-४ |
| बालबोध ज्योतिष-विद्यार्थियोंको अवश्य आरंभमें उपयोगीहै. | ०-१॥ |
| शीघ्रबोध-भाषाटीका समेत इसमें विवाहादि प्रकरण उत्तमहैं. | ०-६ |
| पद्यभाषा-ज्योतिषसार, जिसमें नवग्रहोंका स्थान फल और थोडे मुहूर्त्त वर्णन हैं. .... .... .... .... | ०-३ |
| होडाचक्र मूल-राश्यादि जन्म समयका नक्षत्रमें नामादिविचार. | ०-॥। |

